करते हैं, इस अर्थवाद से होता है। यद्यपि अर्थवादों का भी वाच्यार्थ प्रशंसा नहीं है तथापि लक्षण से प्रशंसा अर्थ निकलता ही है। अतः प्राशस्त्यविशिष्ट लिङादि ज्ञान से याग में प्रवृति करनी चाहिए।

'यजेत स्वर्गकामः' आदि विधिवाक्य के श्रवण करने के अनन्तर श्रोता यजमान में स्वर्गरूप फल प्राप्ति हेतु यागादि कर्मानुष्ठान की प्रवृत्ति होती है। पुरुष की याग विषयक मानसिक व्यापार को ही आर्थी भावना कहते हैं। इस व्यापार को कुछ लोग 'प्रयत्न' के नाम से अभिहित करते हैं 'अन्योत्पादनानुकूल आत्मा' कहते हैं।[1] प्रयत्न पक्ष में 'रथो गच्छति' आदि प्रयोगों में 'गमनानुकूलव्यापार' चेतन का ही धर्म हो सकता है अतः वाहक अश्वादि में चेतन धर्म मान कर असंगति का निवारण है परन्तु द्वितीय पक्ष में 'रथो गच्छति' इत्यादि प्रयोग असाधु प्रतीत होते हैं तथापि इसका समाधान यह हो सकता है कि रथ के गमन करने से पूर्व देश संयोग का नाश होकर, उत्तर देश के साथ संयोग होने पर गन्तव्य ग्राम देश की प्राप्ति होती है अतः प्रयोग में दोष नहीं होगा। यह पक्षद्वय नवीन एवं प्राचीन मीमांसक के नाम से प्रचलित है।[1] तात्पर्य वह है कि व्यापार रूप भावना प्रायः चेतन में ही रहती है, परन्तु चेतन में ही रहने का सर्वथा नियम नहीं हैं। अतएव 'रथो गच्छति' ( रथ जाता है ) इत्यादि वाक्यों में चक्रभ्रमणरूप भावना अचेतन की ही है इसलिए 'रथो गच्छति' के 'ति' आख्यात का भी भावनारूप मुख्यार्थ है।

## आर्थीभावना

आर्थीभावना से ही देवदत्तादि की प्रवृत्ति यागादि में होती है इसके अनन्तर स्वर्गादिरूप फल की प्राप्ति होती है। वस्तुतः स्वर्ग की उत्पत्ति यागजन्य नहीं है क्योंकि स्वर्ग की विद्यमानता पहले से ही है अपितु यागसम्पादन द्वारा यज्ञकर्त्ता अपने इष्ट स्वर्ग को प्राप्त करता है। अतः आलोक टीका में कहा गया है— **स्वर्गकामशब्दस्य स्वर्गे लक्षणाङ्गीकारात् न दोषः'**।

साध्य स्वर्ग का साधन यागानुष्ठान है यह पहले कहा गया है। 'यजेत स्वर्गकामः' आदि विधिवाक्यों से विदित होता है कि यागादि से स्वर्गप्राप्ति होती हैं अतः साध्य स्वर्ग का याग साधन माना गया है।

---

१. 'प्रयोजनस्य स्वर्गादिरूपफलस्य येच्छा रागविशेषः फलेच्छा साधनमुपसङ्क्रामतीति न्यायात्तेन च रागविशेषेण जनितो यो यागादि क्रिया विषयः पुरुषस्य व्यापारविशेषः सार्थी भावनेत्यर्थः।

—अर्थकौमुदी, पृ० ३३.

साध्य एवं साधन सम्बन्धित चर्चा के अनन्तर आकाङ्क्षा होती है कि साध्य की सिद्धि किस प्रकार करे। इसे ही 'इतिकर्तव्यताकाङ्क्षा' कहा गया है। किस प्रकार करे? कथं भावयेत्?—का समाधान है—'प्रयाजादि अंग-समुदाय द्वारा स्वर्ग की प्राप्ति करे। भाव यह है कि 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इत्यादि वाक्यों द्वारा विहित पञ्च यागों को प्रयाज संज्ञा दी गई है। ये पाँचो याग दर्शपूर्णमास प्रकरण में पढे गये हैं परन्तु इनके अनुष्ठान से क्या फलप्राप्ति होगी? यह नहीं बताया गया है। दर्शपूर्णमासाभ्यां यजेत स्वर्गकामो' इस विधिवाक्य से 'दर्श' और 'पूर्णमास' याग का विधान स्वर्गप्राप्ति हेतु है। यह अङ्गीयाग अर्थात् प्रधान याग माना जाता है एवं इसमें स्वर्गरूपी फल का भी स्पष्टतः उल्लेख है। 'प्रायाजाः कर्तव्या' इस वाक्य द्वारा प्रयाजादि का भी अनुष्ठान विहित है और दर्शपूर्णमास प्रकरण में पठित होने के कारण ये प्रधान याग के अङ्ग हैं। अङ्गसहित ही अङ्गी फलवान् माना जाता है अतः आर्थीभावना में इस बात की आकाङ्क्षा होती है कि याग से फल किस प्रकार प्राप्त किया जाय? इसी प्रकार प्रयाजानुयाजादि भी फल साकाङ्क्ष होने पर दर्शपूर्णमास के द्वारा ही स्वर्गफल प्राप्ति में सहायक माने जाते हैं अतः 'इतिकर्तव्यता काङ्क्षा' होने पर प्रयाजादि अङ्गसमूह द्वारा अनुष्ठान करने की बात कही गई है।

## विधिमीमांसा

वेद के सभी विभाग विधिमूलक हैं। विधि के आश्रय से ही मन्त्र, नामधेय एवं अर्थवाद की सार्थकता है। विधि के विना इनका स्वरूप स्पष्ट नहीं होता, अतः ग्रन्थकार विधिरूप वेद के प्रथम विभाग का निरूपण किया है। अज्ञात अर्थ के ज्ञापक होने से ही उसे विधि कहा जाता है परन्तु अज्ञात ज्ञापन मात्र से ही विधि पुरुष को यागादि कर्म में प्रवृत्त करने में समर्थ नहीं होती, अपितु उस अज्ञात अर्थ को किसी प्रयोजन की भी सिद्धि करनी चाहिए। इस प्रकार वह विधिवाक्य स्वयं भी प्रयोजनवान् हो जाता है—अत एव कहा है—**'प्रमाणान्तरेणाप्राप्तं प्रयोजनवन्तश्चार्थं विदधानो विधिः स्वयं प्रयोजनवान् भवतीति'**—[ द्रष्टव्या आलोकटीका ]

## गुणविधिः

कभी-कभी विधिवाक्यों में केवल उस द्रव्य का विधान रहता है जिससे यज्ञानुष्ठान करना हैं और 'कर्म' ( धात्वर्थः—यज्ञकर्म ) का विधान किसी

अन्य वाक्य के द्वारा होता है। 'दध्ना जुहोति' इस विधि वाक्य में केवल 'दधि' मात्र का उल्लेख है जिससे यज्ञ करना है परन्तु मुख्य 'होम' 'अग्नि-होत्रं जुहोति' वाक्य द्वारा विहित है। इस प्रसङ्ग में यह भी ध्यातव्य है कि जो 'विधेय' होता है उसका ( भावना में ) करण रूप में एवं 'उद्देश्य' का कर्म रूप में अन्वय होता है। अतः 'दध्ना जुहोति' का वाक्यार्थ बोध 'दध्ना होमं भावयेत' हुआ। यहाँ होम क्रिया का साधन 'दधि' है अत एव 'दधि रूप गौण वस्तु विधायक वाक्य होने से 'दध्ना जुहोति' को गुणविधि माना जाता है।

## विशिष्टविधिः

अपूर्वविधि एवं गुणविधि का स्वरूप स्पष्ट करके ग्रन्थकार ने 'सोमेन यजेत' का उदाहरण देकर विशिष्ट विधि की व्याख्या की है।

'सोमेन यजेत' अन्यत्र विहित किसी भी यज्ञ कर्म में निर्दिष्ट नहीं है। अतः इसी वाक्य से [ सोम ] गुण एवं होम कर्म दोनों का ही विधान मानना होगा, परन्तु यह सम्भव कैसे है ? 'सोमेन यजेत' का वाक्यार्थबोध 'सोमवता = सोमविशिष्टेन यागेन इष्टं भावयेत ?' मानने पर समस्या का समाधान सम्भव है। क्योंकि 'सोमेन यागेन इष्टं भावयेत' से निर्दुष्ट अर्थ की प्रतीति नहीं हो सकती। सोमेन का अर्थ 'सोमवता' स्वीकार करने के लिए 'लक्षण' का आश्रय लेना होगा। यह सर्वमान्य सिद्धान्त है कि जब शब्द की अभिधाशक्ति से उपयुक्त अर्थ का ज्ञान नहीं होता तब लक्षणा को स्वीकार करना पड़ता है। 'सोमेन यजेत' में सोमवता अर्थ के लिए 'मत्वर्थलक्षणा' माननी पड़ती है। शास्त्रीय शब्दावली में इसे 'उपादानलक्षणा' या 'अजह-ल्लक्षणा' कहते हैं। अतः याग एवं सोम दोनों का विधान सम्भव है।

## उत्पत्तिविधिः

यागादि कर्म के स्वरूपमात्र बोधकविधि को उत्पत्तिविधि कहते हैं। जैसे 'अग्निहोत्रं जुहोति' इस विधि में अग्निहोत्र कर्म का करण अर्थात् साधन रूप से अन्वय होता हैं। [ अतः इस वाक्य से ] 'अग्निहोत्रहोमेनेष्टं भावयेत्' अर्थात् अग्निहोत्र नामक होम से इष्ट का सम्पादन करे, इस अर्थ का बोध होता है।

## विनियोगविधिः

अङ्गों का प्रधान ( अङ्गी ) के साथ सम्बन्धबोधक विधि को विनियोग विधि कहते हैं। द्रव्य देवता क्रियादि रूप अङ्गों का तत् तत् वाक्यों द्वारा

विधान होता है। जहाँ कर्मों में एक ही प्रधानता है उसका विधायक वाक्य भी एक ही होता है और जहाँ विविध कर्मों का प्राधान्य है वहाँ उनके विधायक वाक्य भी कई होते हैं अतः अङ्ग एवं अङ्गी या शेषशेषि भाव का सम्बन्ध प्रतिपादन ही विनियोगविधि संज्ञा से अभिहित होता है। यथा, 'दध्ना जुहोति' में 'दध्ना' तृतीया विभक्ति से अङ्गत्व का प्रतिपादन हो रहा है। इस अङ्ग का ( अङ्गी ) होम के साथ सम्बन्ध ही विनियोगविधि के द्वारा जाना जाता है।

'अङ्ग' का लक्षण करते हुए सूत्रकार जैमिनि ने कहा है—**'शेषः परार्थत्वात्'** इति। **'पर एव अर्थः प्रयोजनं यस्य स परार्थः'** अर्थात् दूसरे की स्वरूपसिद्धि ही जिसका प्रयोजन हो उसे ही 'शेष' कहेंगे। 'दध्ना जुहोति' वाक्य में 'जुहोति' द्वारा प्रतिपादित होम है, उद्दिष्ट देश में द्रव्य की प्रक्षेपरूपा क्रिया है, और उसका साधक दधिरूप द्रव्य है। इस प्रकार 'दधि' परार्थ होने से होम का अङ्ग हुआ एवं होम अङ्गी हुआ। इसी प्रकार 'व्रीहिभिर्यजेत' अर्थात् यागोद्देश से यवों का विधान होने से 'यव' या व्रीहि का यागाङ्गत्व सिद्ध है 'यजेत स्वर्गकामः' में भी स्वर्गोद्देश से याग का विधान होने से याग का स्वर्गाङ्गत्व सिद्ध है। अतः सूत्रकार द्वारा बताया गया 'अङ्गत्वलक्षण' पारार्थ्य है।

## विनियोगविधि के सहकारीभूत षट् प्रमाण

विनियोगविधि के सहकारी ( अङ्ग एवं अङ्गीभावबोधक ) षट् प्रमाण हैं—श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान और समाख्या। इनके सहयोग से यह विधि अङ्गत्व का बोध कराती है। अङ्गत्व पारार्थ्य का दूसरा ( अपर ) पर्याय शब्द है और अङ्गत्व का लक्षण है—परोद्देशप्रवृत्तकृतिसाध्यत्वम् अर्थात् ( परोद्देशप्रवृत्त ) स्वर्गादि फल के उद्देश्य से प्रवृत्त पुरुष का ( कृतिसाध्य ) यत्नव्याप्य जो हो उसी को अङ्ग कहते हैं।

### श्रुति

श्रुति-लक्षण में 'रव' पद का अर्थ शब्द है। प्रमाणान्तर की अपेक्षा किये बिना जो शब्द पदार्थ के विनियोग में समर्थ होता है उस शब्द को 'श्रुति' पद से कहा गया है। तात्पर्य यह है कि लिङ्गादि पञ्चप्रमाण अपने-अपने पूर्ववर्ती प्रमाण की सहायता से ही विनियोग करते हैं अतः उनमें अतिव्याप्ति के निवारणार्थ श्रुतिलक्षण में 'निरपेक्ष' पद का समावेश किया गया है। श्रुति में तीन प्रकार के शब्दों की अपेक्षा रहती है—विधिबोधक शब्द, विनियोग-

बोधक शब्द तथा विनियोगसम्बन्धबोधक शब्द। **विधत्ते इति विधात्री** इस व्युत्पत्तिलभ्य अर्थ से जिससे विधि का विधान विहित हो उसे विधात्री कहते हैं। 'दध्ना जुहोति, ज्योतिष्टोमेन स्वर्गकामो यजेत' आदि उदाहरणों में 'जुहोति' एवं 'यजेत' आदि पद विधात्री श्रुति है क्योंकि 'लट्' एवं 'विधि-लिङ्' लकारों द्वारा अग्निहोत्र एवं ज्योतिष्टोमादि यागों का विधान कर रहे हैं।

अभिधात्री ( अभिधया स्वार्थं प्रतिपादयित्री ) श्रुति में विधान या विनियोग अभिप्रेत नहीं हुआ करता, अपितु पदार्थ का उच्चारण (= अभिधान) द्वारा ही अपेक्षित वस्तु का ज्ञान होता है। यथा—'व्रीहीन् अवहन्ति, व्रीहीन् प्रोक्षति' आदि उदाहरणों में **'व्रीहि'** का अभिधान किया गया है।

विनियोक्त्री ( **यस्य च शब्दस्य श्रवणात् सम्बन्धः प्रतीयते सा विनियोक्त्री;** सा = सः ( शब्दः ), स शब्दो विनियोक्त्री ( श्रुतिरित्यर्थः )। श्रुति के लक्षण में श्रुति का निरपेक्षत्व **'श्रवणादेव'** पद से द्योतित हो रहा है तथा 'अङ्गाङ्गिभावबोधन' 'सम्बन्धः प्रतीयते' पद से ज्ञापित हो रहा है।

विनियोक्त्री श्रुति भी तीन प्रकार की है—( १ ) विभक्तिरूपा, ( २ ) एकाभिधानरूपा और ( ३ ) एकपदरूपा। विभक्तिश्रुति से अङ्गत्व का ज्ञान होता है जैसे 'व्रीहिभिर्यजेत' वाक्य में तृतीया विभक्ति से, व्रीहि याग का अङ्ग है, यह ज्ञान होता है। व्रीहि पुरोडाश की प्रकृति होने से याग का अङ्ग बनते हैं। यथा याग का अङ्गभूत पशुहृदयादिरूप हवि का प्रकृति होने से ही पशु अङ्ग होता है।

'पीली आँखों वाली एक रक्तवर्ण गाय से सोम का क्रय करें' इस वाक्य में आरुण्या, इस तृतीया श्रुति से रक्तवर्ण ( आरुण्य ) भी सोमक्रयण का अङ्ग होता है। आरुण्य अमूर्त है [ इससे क्रयण नहीं हो सकता है अतः साक्षात् अङ्ग भी नहीं हो सकता ] क्रयण का साक्षात् हेतुभूत गोरूप द्रव्य परिच्छेद द्वारा अङ्ग होता है।

आकृत्याधिकरण न्याय से अरुणाशब्द 'अरुणिम गुण' का वाचक है। यह वाक्य ज्योतिष्टोम याग में सोमलता के क्रय का विधान करता है अन्यथा क्रय के अप्राप्त होने से उसका विधायक होने से भावना में धात्वर्थ क्रयण का 'करणत्व' रूप से अन्वय होगा। 'क्रयणेन सोमं भावयेदिति'। आशय यह है

कि—कारक का क्रिया में ही अन्वय होता है [ द्रष्टव्य—**क्रियान्वयित्वं कारकत्वम्** ] इस प्रकार आरुण्य में तृतीया विभक्ति का श्रवण होने से प्रथमतः क्रयण क्रिया में ही साक्षात् अन्वय होगा परन्तु आरुण्य गुण से तो क्रय किया जाना सम्भव नहीं है अतः अपने आश्रय मूल गोरूप द्रव्य द्वारा परम्परा से ही उसका अन्वय होगा। [ द्रष्टव्य—**आरुण्यगुणस्य साक्षात्क्रयाङ्गत्वासम्भवेऽपि स्वाश्रयीभूतद्रव्य द्वारा परम्परया तस्य क्रयाङ्गत्वसम्भवात्** ]।

तृतीयाविभक्तिरूपा विनियोक्त्री श्रुति का प्रतिपादन करके ग्रन्थकार सम्प्रति द्वितीयाविभक्तिरूपा श्रुति पर विचार कर रहे हैं।

यहाँ शङ्का हो सकती है कि ग्रन्थकार को सर्वप्रथम द्वितीया श्रुति का उदाहरण देना चाहिए, उसने तृतीया श्रुति का प्रथमतः उदाहरण क्यों दिया ? इसका समाधान यह है कि अङ्गत्वबोधक प्रमाणों में श्रुति का स्थान सर्वप्रथम है। जहाँ उत्तर में तृतीया श्रुति का श्रवण होता है वहाँ वह उसके अङ्ग का बोध कराते हुए साक्षात् 'अङ्गत्व' का ग्रहण कराती है परन्तु द्वितीया श्रुति जिसके उत्तर में रहती है वहाँ वह सामानाधिकरण्य से उसके प्रधान का बोध कराते हुए उससे भिन्न अङ्ग का ग्रहण कराती है। जैसे 'व्रीहीन् प्रोक्षति' इस वाक्य में 'व्रीहि' पदोत्तर श्रूयमाण द्वितीया विभक्ति व्रीहियों का उद्देश्यबोध कराते हुए व्रीहिनिरूपित अङ्ग 'प्रोक्षण' का भी ज्ञान कराती है। तात्पर्य है कि व्रीहि के उद्देश्य से विधीयमान प्रोक्षण से उद्देश्यभूत व्रीहि का प्राधान्य समझा जाता है एवं विधेयभूत प्रोक्षण का अङ्गत्वबोध द्वितीयाश्रुति से होता है।

सप्तमी श्रुति का उदाहरण 'यदाहवनीये जुहोति' दिया गया है। यहाँ होम के उद्देश्य से आहवनीय का अधिकरण रूप में विधान किया गया है। आधान संस्कार द्वारा संस्कृत अग्नि को आहवनीय कहते हैं। यहाँ आधार आहवनीय अङ्ग है एवं आधेय 'होम' अङ्गी। अभीतक तृतीया, द्वितीया एवं सप्तमी विभक्तियों के ही उदाहरण ग्रन्थकार ने दिए हैं। चतुर्थी पञ्चमी षष्ठी विभक्तियाँ भी विनियोगविधि के प्रसङ्ग में जहाँ प्रयुक्त होती हैं वहाँ अङ्गत्व-बोध की सहायिका होती हैं। यथा चतुर्थी विभक्तिरूपा विनियोक्त्री श्रुति के उदाहरण **'मैत्रावरुणाय दण्डं प्रयच्छति'** में मैत्रावरुणसंज्ञक ऋत्विज 'दण्ड-प्रदान' क्रिया का अङ्ग है। **'अग्नेः तृणान्यपचिनोति'** में पञ्चम्यन्त प्रयुक्त अग्नि 'तृणापचयन' क्रिया का अङ्ग है। **'यजमानस्य याज्या'** में यजमान याज्या का अङ्ग है।

'पशुना यजेत' इस उदाहरण में 'टा' रूप एकत्वबाचक [ एकाभिधान ] श्रुति से एकत्व और पुंस्त्व ये दोनों [ कारण रूप ] कारक के अङ्ग हैं। 'पशुना' इस एक पद श्रुति से पशुरूप द्रव्य के अङ्ग होते हैं। इसी प्रकार 'यजेत' में आख्यात [ तिङ् ] का भावना एवं एकत्वसंख्य अर्थ है। अतः 'त' रूप एकाभिधान श्रुति से एकत्व संख्या भावना का अङ्ग होती है एवं 'यजेत' एणपदश्रुति से संख्या याग का अङ्ग है।

'शेष' लक्षण के प्रसङ्ग मे 'शेषशेषिभावबोधक' श्रुति, लिङ्ग, वाक्य प्रकरण स्थान एवं समाक्या ये विनियोग के कारण होते हैं ऐसा कहा गया है। अब इनमें कौन बलवान् है, कौन दुर्बल, इसका भी विचार किया गया है। एक ही विषय में श्रुति, लिङ्ग आदि किन्हीं दो के मध्य विनियोग सम्बन्धित विरोध उपस्थित होने पर 'पर' की अपेक्षा 'पूर्व' के प्रबल होने पर 'पर' का बाध हो जाता है अतः श्रुति के साथ लिङ्ग वाक्य प्रकरण स्थान एवं समाख्या के विरोध में श्रुति प्रबल होती है। इस प्रकार लिङ्ग के साथ वाक्य प्रकरण स्थान और समाख्या के विरोध में लिङ्ग ही प्रबल होता है और लिङ्ग के अनुसार अङ्ग का निरूपण होता है। इसी तरह वाक्य के साथ प्रकरण आदि के विरोध मे वाक्य, प्रकरण के साथ स्थान आदि के विरोध में प्रकरण स्थान और समाख्या के विरोध में स्थान प्रबल होते हैं। महर्षि जैमिनी ने **"श्रुतिलिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यम् अर्थ-विप्रकर्षात्"** ३-३१४ सूत्र में इस मान्यता का विशद निरूपण किया है। यद्यपि सूत्र में 'पारदौर्बल्यम्' ऐसा कहा गया है तथापि इससे पूर्व का प्रबल होना ही विवक्षित है। इसमें हेतु 'अर्थविप्रकर्षात्' है। क्योंकि श्रुत्यर्थ से लिङ्ग आदि विप्रकृष्ट है। वस्तुतः विधायकता शक्ति, एकमात्र श्रुति में ही है अन्य किसी में नहीं। लिङ्ग के श्रुतिकल्पना पूर्वक अङ्ग के बोधक होने से वह दुर्बल होता है और श्रुति प्रबल है। संक्षेपतः श्रुति, लिङ्ग, वाक्य, स्थान आदि में से श्रुति सदैव बाधिका है और समाख्या सदैव बाधित है। इस तरह लिङ्ग वाक्य आदि कभी बाध्य और कभी बाधक होते हैं। अत एव कुमारिलभट्ट ने कहा है—

**'बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।**
**मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥'**

## लिङ्ग-स्वरूपनिरूपणम्

श्रुति एवं उसके प्राबल्य का निरूपण करके ग्रन्थकार लिङ्गनामक द्वितीय प्रमाण का प्रतिपादन करने का उपक्रम कर रहा है। शब्द सामर्थ्य को लिङ्ग कहा गया है। सामर्थ्य से यहाँ 'अर्थाभिधानशक्ति' का बोध होता है। अतः भाष्यकार ने भी कहा है—**'यच्छब्दस्यार्थमभिधातुं सामर्थ्यं तल्लिङ्गमिति।'** वार्त्तिककार कुमारिल भट्ट का मत है कि—**"यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गम्"**। सामर्थ्य दो प्रकार का होता है—शब्दगत एवं अर्थगत। अर्थगत सामर्थ्य का निरूपण प्रथमाध्याय के अन्त में 'सामर्थ्याधिकरण' नामक अधिकरण में 'स्रुवेणावद्यति', 'स्वधितिनावद्यति' आदि उदाहरणों द्वारा स्पष्ट किया गया है।

लिङ्गस्वरूप निरूपण के अनन्तर अर्थसंग्रहकार ने क्रमशः वाक्य, प्रकरण, स्थान एवं समाख्या का भी निरूपण किया है जिनका विस्तारभय से यहाँ विशद विवेचन नहीं किया जा रहा है। श्रुत्यादि प्रमाणों का पारस्परिक प्राबल्य दौर्बल्य भाव भी अत्यन्त सरल रूप में समझाया गया है। क्रमप्राप्त प्रयोगविधि का भी प्रतिपादन यथास्थान किया गया है। इस विधि के निरूपण के अनन्तर श्रुति–अर्थ–पाठ–स्थान–प्रवृत्यादि क्रमों का भी प्रतिपादन है। मन्त्र, नामधेय, निषेधादि का व्याख्यान करके ग्रन्थकार ने अर्थवाद पर विचार प्रस्तुत किया है इनका विशद विवेचन अर्थालोक एवं लोचन टीकाओं में किया गया है।



॥ श्रीः ॥

महामहोपाध्यायलौगाक्षिभास्करप्रणीतः

# अर्थसङ्ग्रहः

## पण्डितराजश्रीपट्टाभिरामशास्त्रिकृतेन 'अर्थालोकेन' तदन्तेवासिना उपाध्यायश्रीवाचस्पतिकृतया 'अर्थालोकलोचन'-हिन्दीव्याख्यया च संवलितः

---

**मङ्गलाचरणम्**

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः ।
कुरुते जैमिनिनये प्रवेशायार्थसंग्रहम् ॥ १ ॥

काञ्चीकामदकामकोटिनिलयां श्रीराजराजेश्वरीं
कैवल्यामृतबिन्दुवर्षणपरां नत्वा परामम्बिकाम् ।
वाधूलान्वयभास्करं वरगुरुं शास्त्रार्थरत्नाकरं
श्रीश्रीवेङ्कटपूर्वकं हृदि भजे श्रीकार्तिकेयं महः ॥

**अर्थालोकः** ( संस्कृतव्याख्या )

प्रारीप्सितं ग्रन्थं निष्प्रत्यूहेन परिसमापयितुं ग्रन्थकृल्लौगाक्षिभास्करः शिष्टाचारतः परिप्राप्तं श्रेयस्साधनं मङ्गलमाचरन् इष्टदेवतां नमस्करोति—**वासुदेवमिति**। रमाया लक्ष्म्याः कान्तं प्रियमित्यर्थः। अनेन विशेषणेन वासुदेवस्य स्वेप्सितफलप्रदत्वं व्यज्यते। विरच्यमानग्रन्थस्य प्रयोजनं विषयञ्च निर्दिशति—**प्रवेशायेत्या**दिना। परमकारुणिकस्य भगवतो महर्षेर्जैमिनेः **नयः**—मीमांसाशास्त्रमित्यर्थः। स चातिगहनो विस्तृतश्च। तत्र बालानां प्रवेशो न सुकरः। सुखेन प्रवेशसिद्धये जैमिनिनयसिद्धानाम् **अर्थानाम्**—न्यायानां

सङ्ग्रहं कुरुत इत्यन्वयः । अर्थसंग्रह इति विरच्यमानग्रन्थस्यापि नामधेयम् । जैमिनिनयसिद्धनामर्थानां संग्रहो ग्रन्थस्य विषयः, तस्यातिगहनत्वेन सुखेन तत्र प्रवेशः प्रयोजनम्, प्रवेशश्च ज्ञानफलकः । जैमिनिनये प्रविविक्षुरधिकारी, प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इत्यनुबन्धचतुष्टयं बोधितम् ।

## विशेषार्थः

नवमाध्यायस्य प्रथमपादस्य पञ्चमे देवताधिकरणे देवतानां विग्रहादिपञ्चकं निराकृतम् । तेन देवतानमस्कारात्मकमङ्गलस्य यद्यपि नावसरः, तथापि श्रौतस्मार्तकर्मसमवेतानामेव देवतानां विग्रहादिपञ्चकस्य निराकरणात् ग्रन्थ-रचनावसरे आदौ मङ्गलाचरणस्य शिष्टाचारपरिगृहीतत्वेन तदनुसरणस्य शिष्टाचारप्रामाण्याधिकरणसिद्धत्वान्मङ्गलाचरणमावश्यकमिति न दोषः ।

## अर्थालोकलोचनम् ( हिन्दी व्याख्या )

लौगाक्षिभास्कर लक्ष्मीप्रिय विष्णु को प्रणाम करके वेद-वेदाङ्ग का अध्ययन करके धर्म में जिज्ञासा करनेवालों के जैमिनिप्रणीत मीमांसा दर्शन में प्रवेश हेतु 'अर्थसंग्रह' नामक ग्रन्थ की रचना करते हैं ।

ग्रन्थ के प्रारम्भ में 'मङ्गलाचरण' श्लोक लिखने की परम्परा अति प्राचीन है । ग्रन्थ-कारों का ऐसा विश्वास है कि मङ्गलाचरण ग्रन्थ की समाप्ति एवं अन्य विघ्नों के निवारणार्थ आवश्यक है । यह परम्परागत शिष्टाचार के पालन के साथ-साथ अध्यापक एवं छात्र के श्रेयस् प्राप्ति का भी साधन माना गया है । भगवत्पाद पतञ्जलि ने कहा है— 'मङ्गलादीनि प्रथन्ते वीरपुरुषकाणि भवन्ति ।
आयुष्मत्पुरुषकाणि च अध्येतारश्च सिद्धार्था यथा स्युः' ॥

—महाभाष्य-पस्पशाह्निक.

( द्रष्टव्य—'समाप्तिकामो मङ्गलमाचरेत्'—अन्नंभट्टकृत दीपिका ).

लौगाक्षिभास्कर ने 'विष्णु' को प्रणाम करके ग्रन्थारम्भ किया है । यद्यपि मीमांसा सम्प्रदाय में देवताविशेष के प्रति आग्रह सामान्य रूप से प्रचलित नहीं है क्योंकि देवता स्वरूप विचार प्रकरण में ( द्रष्टव्य जै० सू० ९, १, ५ ) विग्रहात्मक देवता का खण्डन किया गया है तथापि याज्ञिक सम्प्रदाय में 'अग्निर्वै देवानामवमो विष्णुः परमः' ( ऐतरेय ब्राह्मण १. १. ) अथवा 'अग्निर्वै विष्णुः' इत्यादि प्रमाणों के आधार पर विष्णु का महत्त्व अत्यधिक है अतः उनका 'स्मरण' साभिप्राय है ।

'नयः' शब्द का तात्पर्य 'सिद्धान्त' या मत से है । 'नीयते पुरुषः अनेन इष्टप्राप्तिं प्रति इति नयः' या—नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः' इस प्रकार की व्युत्पत्ति से भी निष्कर्ष यही निकलता है कि जैमिनि द्वारा प्रतिपादित सिद्धान्तों के परि-पालन से धर्मस्वरूप इष्ट की प्राप्ति सर्वथा सम्भव है । 'वेदार्थनिर्णयसाधनं अधिकरणात्मक-

पदार्थः न्यायः' यह परिभाषा ब्राह्मणों तथा श्रौतसूत्रों के उद्देश्य को दृष्टिगत करके लिखी गई हैं।

सामान्यतः महर्षि जैमिनि को ही मीमांसा दर्शन का आदि प्रणेता माना जाता है परन्तु जैमिनि-सूत्रों में पूर्वाचार्यों का भी उल्लेख मिलता है। सिद्धान्तचद्रिका में लिखा है—

'ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च बशिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनिनये, स च स्वोपदेशादनन्तरमिमं न्यायं ग्रन्थे निबद्धवान् इति' ॥

'अर्थसंग्रह' नामकरण का अभिप्राय है—'अर्थानां मीमांसाशास्त्रप्रतिपादितानां विषयाणां संग्रहः' मीमांसशास्त्र में प्रतिपादित विषयों का एकत्र संग्रह। इसी विचार को दृष्टि में रखकर इस ग्रन्थ की 'पुष्पिका' में लौगाक्षिभास्कर ने **'पूर्वमीमांसार्थसंग्रह-नामकं प्रकरणम्'** लिखा है—

'सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनम्।
विनाऽनुबन्धं ग्रन्थादौ मंगलं नैव शस्यते' ॥

विद्वानों के अनुसार ग्रन्थ के आरम्भ में अनुबन्ध चतुष्टय—अर्थात् विषय, सम्बन्ध, अधिकारी और प्रयोजन का प्रतिपादन आवश्यक है।

कुमारिलभट्ट ने भी लिखा है—

'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' ॥

अतः इस ग्रन्थ का स्पष्टतः धर्मस्वरूप विचारोपयोगी जैमिनीय सिद्धान्तों का विवेचन 'विषय' है। विषय की गम्भीरता को दृष्टिगत रखते हुए उसका सरल एवं बोधगम्य शैली के माध्यम से वेद का अध्ययन किये हुए जिज्ञासु का अल्प प्रयास द्वारा धर्मविचार में प्रवेश इस ग्रन्थ का प्रयोजन है। अधीत वेद-वेदाङ्ग, धर्मजिज्ञासु अर्थात् जैमिनि-सिद्धान्तों के ज्ञान का इच्छुक ही अधिकारी है। ग्रन्थ एवं उसमें निरूपित विषय का प्रतिपाद्य-पादकभाव सम्बन्ध है।

## तन्त्रारम्भसूत्रावतरणम्

अथ परमकारुणिको भगवान् जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं **प्रणिनाय**। तत्रादौ धर्मजिज्ञासां सूत्रयामास—'अथातो धर्मजिज्ञासा' [जै. सू. १. १. १.] इति। अत्र 'अथ' शब्दो वेदाध्ययनानन्तर्यवचनः। 'अतः' शब्दो हि वेदाध्ययनस्य **दृष्टार्थत्वं** ब्रूते। 'स्वाध्यायोऽध्येतव्यः' [ तै. आ. २. १५. ७; श. ब्रा. ११. ५. ६. ३. ] इत्यध्ययनविधौ तदध्ययनस्यार्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात्।

## अर्थालोकः

जिज्ञासाधिकरणार्थं संग्रहेण प्रतिपादयितुमुपक्रमते—**अथेत्यादिना**। **परम-कारुणिकः**—अव्याजकरुणायुक्तः। धर्मस्वरूपतदर्थविषये लोका बहुधा विप्रतिपन्नाः—अन्तःकरणवृत्तिविशेषं केचन धर्ममाहुः। विज्ञानवासनां धर्मं वदन्ति कतिपये, पुद्गलाख्यान् परमाणून् धर्ममेके मन्यन्ते, आत्मनो विशेषगुणं धर्मं प्रवदन्त्यपरे, अपूर्वं धर्ममित्येके मेनिरे, चैत्यवन्दनं धर्ममितमन्ये, आत्मदर्शनमेव धर्म इत्यन्ये। एवं विप्रतिपद्यमानेषु लोकेषु सञ्जातकरुणो भगवान् जैमिनिः **धर्मविवेकाय**—निष्कृष्टधर्मस्वरूपतदर्थज्ञानाय **द्वादशलक्षणीम्** लक्षणशब्दोऽध्यायपरः। द्वादशानां लक्षणानामध्यायानां समाहारः द्वादशलक्षणी ताम् द्वादशाध्यायात्मकं शास्त्रमित्यर्थः। प्रणिनाय निर्मितवान्।

## विशेषार्थः

ननु धर्मस्वरूपपरिज्ञानाय द्वादशाध्यायसूत्रात्मकग्रन्थस्य काऽऽवश्यकता? 'यतोऽभ्युदयनिःश्रेयससिद्धिस्स धर्मः', 'आचारः प्रथमो धर्मः', 'अयश्च परमो धर्मः यद्योगेनात्मदर्शनम्', 'अथातो धर्मं व्याख्यास्यामः' इत्यादिप्रमाणैरेव धर्मस्वरूपे ज्ञायमानेऽतिविपुलस्य ग्रन्थस्य निर्माणे महर्षिजैमिनेः कुतः प्रवृत्तिरिति चेच्छृणु, 'न हि प्रतिज्ञामात्रेण वस्तुसिद्धिः' इति न्यायेन पूर्वं प्रदर्शितैः प्रमाणैः धर्मप्रतिज्ञैव कृता, न धर्मस्वरूपमग्रे परीक्षितम्। जागतानां पदार्थानामुद्देशो लक्षणम् तत्परीक्षैवाग्रे समुपलभ्यते, न पुनरध्यात्मशोधनाय वेदप्रतिपादितो धर्म इतिकर्तव्यतादिभिस्सम्यग्विवेचित इति सर्वथा धर्मानुष्ठातृभिः जैमिनिविरचितमिदं विपुलं शास्त्रमेव शरणीकरणीयम्। तथाहि—शास्त्रेऽस्मिन् द्वादशस्वध्यायेषु क्रमेण धर्मस्वरूपतत्प्रमाण-भेद-शेषत्व-प्रयुक्ति-क्रमा-धिकार-सामान्यातिदेश-विशेषातिदेशो-ह-बाध-तन्त्र-प्रसङ्गरूपा धर्मसम्बन्धिनो विषया विवेचिताः। स्वर्गादिफलाय यथा यागादिः करणम्, प्रयाजादयश्चेतिकर्तव्यता तथा धर्मे फले साधनीये वेदः करणम् मीमांसा चेतिकर्तव्यता। तदुक्तं भट्टपादैः—

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति'॥ इति।

तत्र प्रथमाध्याये धर्मस्वरूपतत्प्रमाणानि-विध्यर्थवाद-मन्त्र-स्मृत्याचार-नामधेय-वाक्यशेष-सामर्थ्यरूपाण्यष्टौ निरूपितानि। एतैः प्रमाणैस्सिद्धेऽपि प्रमेये तद्भेदपरिज्ञानं विना प्रमेयसिद्धिरपूर्णैवेति द्वितीयेऽध्याये भेदप्रमाणानि षट् शब्दान्तरा-भ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणि विशदीकृतानि। यथा-प्रयाज-

विधायकवाक्येषु 'समिधो यजति' 'तनूनपातं यजति' इत्यादिषु पञ्चकृत्वः श्रूयमाणो यजतिः अनन्यपरविधिपुनःश्रवणरूपादभ्यासात् कर्मभेदमवगमयति, तथा 'य एवं विद्वानमावास्यायां यजेत', 'य एवं विद्वान् पौर्णमास्यां यजेत' इत्यत्र विधिपुनःश्रवणे सत्यपि न कर्मभेदः। अत्र यदि कर्मभेदमङ्गीकृत्य यागानुष्ठानं भवेत् तर्हि तदनुष्ठानं धर्माय न स्यात्। अतश्च धर्माधर्मपरिज्ञानाय भेदाध्याय आवश्यकः। तृतीयेऽध्याये शेषशेषिभावविचारः। सोऽपि धर्माधर्मज्ञानोपयोगी। तत्रापि षट् प्रमाणानि-श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। यः फली स शेषी, यश्च फलरहितस्स शेषः। 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायः। दर्शपूर्णमासयागः फलवान् अधिकारविधिना तस्य फलवत्त्वावगमात्। प्रयाजादयोऽफलाः। तत्र विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा प्रयाजादीनामपि फलवत्त्वं परिकल्प्यानुष्ठानं यदि क्रियेत तर्हि तदधर्माय स्यात्, दर्शपूर्णमासाङ्गत्वेनैव तदनुष्ठानं धर्माय कल्पेत। अतः शेषशेषिभावविचारोऽपि धर्मसम्बन्धी। अङ्गत्वबोधकप्रमाणैः—इमान्यङ्गानि अयञ्चाङ्गी इति ज्ञाते चतुर्थाध्यायेऽङ्गाङ्गिभावसम्बन्धी प्रयोज्यप्रयोजकभावविचारः कृतः। अनुष्ठाप्यानुष्ठापकभावः प्रयोज्यप्रयोजकभावः। सर्वत्राङ्गं प्रयोज्यं भवति प्रयोजकश्चाङ्गी। यद्यदङ्गं तत्तत्प्रयोज्यम् इति व्याप्तिः, न तु यो योऽङ्गी स स प्रयोजक इति। एवं प्रयोज्यप्रयोजकभावमवगत्यैवाङ्गानामङ्गिनो वानुष्ठानं धर्माय भवेत्, व्युत्क्रमेणानुष्ठानेऽधर्माय स्यात्। यथा—'पुरोडाशकपालेन तुषानुपवपति' इति वाक्येन यागसाधनीभूतव्रीहिष्ववहतेषु ये तण्डुला निष्पद्यन्ते तत्र संल्लग्नानां तुषाणामपाकरणं विधीयते। तत्र च साधनं पुरोडाशकपालः। साधनत्वाच्च तस्याङ्गत्वं सिद्धम्। साध्यत्वाच्च तुषोपवापस्याङ्गित्वमविप्रतिपन्नम्। एवमङ्गाङ्गिभावे सत्यपि पुरोडाशकपालतुषोपवापयोः प्रयोज्यप्रयोजकभावस्तु न स्वीक्रियते, कपालस्य 'कपालेषु श्रपयति' इत्यनेन श्रपणप्रयुक्तत्वात्। अर्थात्कपालः श्रपणप्रयुक्तः। श्रपणं प्रयोजकम् कपालश्च तत्प्रयोज्यः। तेन तुषोपवापं प्रति कपालस्याङ्गत्वे सत्यपि न तुषोपवापप्रयुक्तत्वं कपालस्य। कपालस्य तुषोपवापप्रयुक्तत्वमङ्गीकृत्यानुष्ठाने सति यत्र कपालेषु हविःश्रपणं नास्ति तुषोपवापश्च वर्तते यथा चरुद्रव्यकयागे तत्रापि कपालस्योपादानं स्यात्। तदिदमधर्माय भवेत्। तत्र तुषोपवापः ऐच्छिकद्रव्येणैव। अतश्च प्रयोज्यप्रयोजकविचारोऽपि धर्मस्वरूपनिर्णायकः। पञ्चमे प्रधानोपकारायाङ्गेषु युगपत्प्राप्तेषु तेषां कश्चन नियतः क्रमः प्रतिपादितः। तत्र क्रमबोधकानि प्रमाणानि षट्—श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपाणि। एभिः प्रमाणैस्सिद्धं क्रममादाय पदार्थना-

मनुष्ठानं धर्माय, व्युत्क्रमेणानुष्ठानमधर्माय भवेत् । यथा—प्रधानक्रमेणाङ्गानामनुष्ठानक्रमः मुख्यक्रमः । येन क्रमेण प्रधानान्यनुष्ठीयन्ते तेनैव क्रमेण तदङ्गानामनुष्ठाने समानविप्रकर्षः । व्युत्क्रमेणानुष्ठाने समानविप्रकर्षो न स्यात् । अतः क्रमबोधकप्रमाणद्वारा यः क्रमो नियतः, तमतिक्रम्यानुष्ठाने तदधर्माय स्यादिति क्रमविचारोऽपि धर्मसम्बन्धी । षष्ठेऽधिकारो निरूपितः । कस्मिन् कर्मणि कस्याधिकारः? स्त्रीशूद्राणां श्रौतकर्मस्वधिकारोऽस्ति न वा? यद्यस्ति तत्र नियामकं किम्, अधिकारिविशेषणानि कानि? इत्यादयो धर्मसम्बन्धिनः पदार्था विचारिताः । पूर्वषट्कमिदमुपदेशाध्यायात्मकम् । 'तदिदं कर्तव्यम्' इत्युपदेशः । उत्तरषट्के सप्तमाष्टमनवमदशमेषु अतिदेशः तत्सम्बन्धिनश्च विषया विवेचिताः । एकादशद्वादशयोरध्याययोः सर्वसाधारण्येन तन्त्रप्रसङ्गौ विषयौ विवेचितौ । तदिदमुत्तरषट्कमतिदेशाध्यायात्मकम् । तद्वदिदं कर्तव्यमित्यतिदेशः । तत्र सप्तमे सामान्यातिदेशः अष्टमे विशेषातिदेशः, नवमे ऊहः, दशमे च बाध इति सर्वेऽपीमे विषया धर्मसम्बन्धिनः । अतः द्वादशलक्षणी समग्रा धर्मविवेकायैव जैमिनिना प्रणीता । साधारणतयैकैकस्मिन् अध्याये चत्वारः पादाः, तृतीयषष्ठदशमाध्यायेष्वष्टौ पादाः । एकैकस्मिन् पादे बहून्यधिकरणानि । प्रत्येकाधिकरणे बहूनि सूत्राणीत्यतिविस्तृतस्य शास्त्रस्य धर्मतत्त्वप्रतिपादकस्य विरचने जैमिनेः करुणाविशेषमन्तरा प्रवृत्तिर्न स्यादिति 'परमकारुणिकः' इति जैमिनेर्विशेषणं सङ्गतमिति बोध्यम् ।

**तत्र**—स्वप्रणीतद्वादशलक्षण्याम् **आदौ**—प्रथमम् 'अथातो धर्मजिज्ञासा' इति सूत्रयामास । 'अन्वाहार्ये च दर्शनात्' इत्यन्तिमं सूत्रम् । सूत्रं व्याचष्टे—**अत्रे**त्यादिना । **अत्र**—जिज्ञासासूत्रे । नन्वथशब्दस्य वेदाध्ययनानन्तर्यपरत्वेऽतशशब्दस्य निर्वृत्तवेदाध्ययनस्य हेतुत्वार्थकत्वे किं प्रमाणम्? लोकेऽथशब्दः आनन्तर्यार्थकः, अतशशब्दश्च हेतुत्वसामान्यार्थकः । उभयत्र वेदाध्ययनमेव कुतस्सम्बध्यते? इति चेत्तत्र प्रमाणं दर्शयति—**स्वाध्याय इति** । इदं जिज्ञासाधिकरणविषयवाक्यम् । वाक्यस्यायमर्थः—स्वश्चासावध्यायश्च स्वाध्यायः । स्वपदं स्वकुलपरम्परावाचकम् । अधीयत इत्यध्यायः शाखा । स्वकुलपरम्परागता शाखेत्यर्थः । अधिपूर्वकेङ् धातोः कर्मणि तव्यप्रत्ययः । लिङ्लोट्लेट्तव्यप्रत्ययानां प्रवर्तना अर्थः । प्रवर्तना च प्रवृत्त्यनुकूलव्यापारः । प्रवृत्तिश्चाख्यातवाच्येति मीमांसकसरणिः । तव्यप्रत्यये प्रवृत्तिवाचकाख्याताभावेऽपि प्रवृत्तिमन्तरानुपपन्ना तव्यप्रत्ययवाच्या प्रवर्तना प्रवृत्तिमाक्षिपति । तस्याश्च प्रवृत्तौ धात्वर्थस्याध्ययनस्य-गुरुमुखोच्चारणानूच्चारणस्य करणत्वेनान्वयः । तथा च गुरुमुखोच्चारणानूच्चारणेन स्वकुल-

परम्परागता शाखा अवाप्तव्येति। अत्र तव्यप्रत्ययवाच्या प्रवर्तना, विधेयेऽध्ययने गुरुमुखोच्चारणानूच्चारणरूपे पुरुषं प्रवर्तयति। सर्वत्र विधिः यस्मिन् पुरुषं प्रवर्तयति तस्यैव विधेयत्वम्। अध्ययनस्य विधेयत्वे तत्र पुरुषप्रवृत्तिर्वाच्या। पुरुषश्च समीहितसाधनत्वबुद्धिमन्तरा न प्रवर्तेत। इदं मत्समीहितसाधनमिति बुद्धौ सत्यां पुरुषस्य प्रवृत्तिरिति लोकानामनुभवः। प्रकृतेऽध्ययनस्य गुरुमुखोच्चारणानूच्चारणरूपस्य साधनता स्वाध्यायनिरूपिता वक्तव्या। स्वाध्यायस्य चाक्षरसमूहरूपत्वेन तन्निरूपिताध्ययननिष्ठसाधनतायां पुरुषस्य समीहितसाधनत्वबुद्धिर्दुरुपपादा, अध्ययनद्वारा प्राप्यस्य स्वाध्यायस्याक्षरराश्यात्मकस्य समीहितत्वाभावात्। अतोऽदृष्टार्थमध्ययनमिति वक्तव्यम्। तथा सति विचारात्मकधर्मजिज्ञासाया आरम्भो व्यर्थस्स्यात्। यदि स्वाध्यायविधिना विधीयमानमध्ययनं दृष्टार्थज्ञानफलकं भवेत् तर्हि फलभूतार्थज्ञानस्य विचार्य निर्णेयत्वात् विचारशास्त्रारम्भस्सफलस्स्यात्। तदयमत्र विषयवाक्ये संशयः—किं विधीयमानमध्ययनमदृष्टफलकम्? उत दृष्टार्थज्ञानफलकम्? तत्र पूर्वः पक्षः—स्वाध्यायविधिना विधीयमानमध्ययनमश्रूयमाणफलकम् इति तावन्निश्चितम्। अश्रूयमाणफलकेषु कर्मसु विश्वजिन्न्यायः प्रवर्तते—'स स्वर्गस्स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति। यत्र फलं न श्रूयते, तत्र विधेः प्रवर्तकत्वसिध्यर्थं तत्कल्पनीयम्, तत्र सर्वाभिलषितत्वेन स्वर्गः फलं कल्प्यते। तन्न्यायेन प्रकृतेऽपि स्वर्गः फलं कल्प्यते। तच्चादृष्टरूपम्। अतोऽदृष्टार्थमेवाध्ययनं विधीयते। अथवा रात्रिसत्रन्यायेनार्थवादिकं फलं कल्प्यताम्। 'यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा वहन्ति' इत्याद्यर्थवादः पयःकुल्यावहनादि फलं प्रतिपादयति। विश्वजिन्न्यायेन त्वश्रूयमाणं फलं कल्पनीयम्, आर्थवादिकन्तु फलं श्रूयमाणम् तदर्थमेवाध्ययनमस्तु। ननु दृष्टफलेऽर्थज्ञानरूपे लभ्यमाने किमित्यदृष्टं फलं कल्प्यते? अध्ययनं तावदर्थज्ञानाय भवति। न ह्यदृष्टलाभाय कोऽप्यधीते। अतश्च दृष्टार्थत्वमेवाध्ययनस्य भवत्विति चेन्न; विनाप्यध्ययनेन प्रकारान्तरद्वारार्थज्ञानसम्पादनं सुशकमिति तदर्थं विधेरावश्यकत्वाभावात्, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्। न चापूर्वविधित्वाभावेऽपि 'व्रीहीनवहन्ति' इतिवन्नियमविधिरस्तु—अध्ययनेनैवार्थज्ञानं सम्पादयेदिति वाच्यम्, प्रकरणस्य कस्यचनात्र नियामकाभावात्। अवहनननियमे तु दर्शपूर्णमासप्रकरणं नियामकम्, अध्ययनविधेरनारभ्याधीतत्वेन प्रकरणाभावात्। अतश्चादृष्टफलकमेवाध्ययनमिति विचारशास्त्रारम्भो व्यर्थ इति। सिद्धान्तस्तु—अर्थज्ञानफलकमेवाध्ययनम्। प्रकारान्तरेणार्थज्ञानफले सम्पद्यमानेऽपि अध्ययनविधेर्नियमविध्याश्रयणात् न दोषः। न चास्यानारभ्या-

धीतत्वेन न किञ्चित् प्रकरणं नियामकमिति वाच्यम्, उत्तरक्रतुविधीनां नियामकत्वात् । क्रत्वनुष्ठानं प्रत्यर्थज्ञानं लिङ्गादङ्गम् । तत्तत्फलाय विधिभिर्विधीयमानानां क्रतूनामनुष्ठानेनैव फलसम्पादकत्वं तावत्सिद्धम् । तत्सम्पादकत्वञ्च क्रतूनां साङ्गानामेव । एकेनाप्यङ्गेन विहीनः क्रतुः फलसाधने न क्षमः । अत उत्तरक्रतुविधयः साङ्गान् क्रतूननुष्ठापयन्तोऽर्थज्ञाननियामकाः—अध्ययनसम्पादितेनैवार्थज्ञानेन क्रतवोऽनुष्ठेयाः, तदैवापूर्वं भवेदिति । एवञ्च 'दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात्' इति न्यायेन दृष्टार्थज्ञानफलकमेवाध्ययनमिति ।

**अनुवाद**—परम कारुणिक भगवान् जैमिनि ने वेदाध्ययन के अनन्तर धर्म एवं अधर्म के विचार हेतु द्वादशाध्यायात्मक मीमांसा शास्त्र की रचना की तथा धर्मजिज्ञासा को 'अथातो धर्मजिज्ञासा' इस प्रथम सूत्र के द्वारा प्रतिपादित किया। इस सूत्र में अथशब्द वेदाध्ययन की अनन्तरता का वाचक है, तथा 'अतः' शब्द वेदाध्ययन की दृष्टार्थकता का बोधक है। 'स्वाध्यायोऽध्येतव्यः' इस अध्ययन विधि के प्रथमाधिकरण प्रकरण में यह निश्चित किया गया है कि वेदाध्ययन का दृष्ट प्रयोजन वेदार्थज्ञान है।

## अर्थालोकलोचन

'अथातो धर्मजिज्ञासा' सूत्र में 'अतः' पद से अध्ययन का नियमविधित्व माना गया है। 'अथ' शब्द का अर्थ आनन्तर्य है। अनन्तर कहने से किसी पूर्ववर्त्ती की आकांक्षा होती है यहाँ वेदाध्ययन ही पूर्ववर्त्ती कर्म हो सकता है। उसके अनन्तर ही धर्मजिज्ञासा अर्थात् वेदार्थविचार करना चाहिए। वेदाध्ययन के बिना वेदार्थविचार रूप धर्मजिज्ञासा का उदय नहीं हो सकता। अतः 'अथ' शब्द के सामर्थ्य से ही वेदाध्ययन पूर्ववर्ती कर्म होकर धर्मजिज्ञासा का हेतु बन जाता है। यद्यपि सामान्य दृष्टि से सूत्र में प्रयुक्त 'अतः' पद निरर्थक प्रतीत होता है परन्तु पूज्यमहर्षि द्वारा प्रणीत कोई भी पद निरर्थक नहीं हो सकता। यदि कहा जाय कि "अथ" शब्द का तात्पर्य मङ्गलाचरण है तो यह उपयुक्त नहीं है। 'अथ' शब्द वस्तुतः मङ्गल का सूचक है वाचक नहीं है। अतः 'अथ' शब्द आनन्तर्य बोधक होने के साथ-साथ वेदार्थ विचार का हेतु भी है।

परम्परा के अनुसार मीमांसाशास्त्र जिसे वेदार्थ विचार भी कहा जाता है—'स्वाध्यायोऽध्येतव्यः' इस विधि से नियन्त्रित है। इस विधि वाक्य का अभिप्राय यह है कि अपने अधिकार के अनुसार प्रत्येक व्यक्ति को अपनी अपनी शाखा का अध्ययन गुरु से अर्थज्ञानपूर्वक परम्परानुसार करना चाहिये।[1] 'अर्थज्ञान' को ही दृष्टार्थ कहा गया है। क्योंकि 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना' अर्थात् दृष्टफल के रहते हुये अदृष्ट फल की कल्पना न्यायोचित नहीं है। अतः यह शंका स्वाभाविक है कि 'स्वाध्यायोऽध्येतव्यः' इस विधि का फल क्या है ? पूर्वपक्ष के

१. द्रष्टव्य :—'प्रथमं तावत् 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ॥ 'आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते'—श्रीभाष्य, पृ० ३.

मत में विश्वजित् न्याय के अनुसार स्वर्ग ही हो सकता है। विधिवाक्य के रहते यदि श्रुति समर्पित फल न हो तो इस प्रकार के स्थल में स्वर्गरूप फल की कल्पना कर लेनी चाहिए। (द्रष्टव्य :—स स्वर्गः स्यात् सर्वान् प्रत्यविष्टत्वात्) परन्तु यह ठीक नहीं है क्योंकि स्वाध्यायविधि का अक्षरग्रहणात्मक—अध्ययन रूप अर्थ किया गया है। जिसका तात्पर्य केवल अक्षरमात्र के ग्रहण से नहीं अपितु अक्षर के साथ-साथ अर्थ के ग्रहण से भी है। अतः अर्थावबोध अर्थात् अर्थ का ज्ञान अध्ययन का दृष्ट फल होता है। दृष्टफल के होने पर अदृष्टफल की कल्पना उचित नहीं क्योंकि अर्थज्ञानरूप प्राप्त फल का परित्याग कर अप्राप्त स्वर्गरूप फल की कल्पना करने से कल्पना गौरव दोष भी आ जाता है, अतः स्वर्ग 'स्वाध्यायविधि' का फल नहीं हो सकता अर्थज्ञान ही उसका फल है और यह अर्थज्ञान अध्ययन सापेक्ष है। अध्ययन गुरु के समीप रहकर वेदार्थ विचारपूर्वक किया जाना चाहिए।

## धर्मविचारशास्त्रस्यारम्भसिद्धिः

तथा **च**—वेदाध्ययनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययनम्, अतो हेतोर्धर्मस्य वेदार्थस्य जिज्ञासा 'कर्तव्या' इति शेषः। जिज्ञासापदस्य विचारे लक्षणा। अतो धर्मविचारशास्त्रमिदमारम्भणीयमिति शास्त्रारम्भसूत्रार्थः।

## अर्थालोकः

तमिमं जिज्ञासाधिकरणसिद्धान्तं निर्दिशति—**तदध्ययनस्येत्यादिना**। व्यवस्थापनात् जिज्ञासाधिकरण इति शेषः। अतशब्दार्थमाह—**तथा-चेत्यादिना**। धर्मजिज्ञासां प्रति हेतुः वेदाध्ययनस्यार्थज्ञानरूपदृष्टार्थकत्वम्। यतः कृतं वेदाध्ययनम् अर्थज्ञानरूपदृष्टफलकम् अतो धर्मजिज्ञासेति। इह शास्त्रे प्रत्यधिकरणं वेदवाक्यान्युदाहृत्य विचार्यन्ते धर्मविवेकाय। निष्कृष्टवेदवाक्यार्थश्च क इति च निर्णीयते। एवं विचारे क्रियमाणे प्रथमं वेदवाक्यानामध्ययनं सामान्यतस्तदर्थज्ञानञ्च यदि न स्यातां तर्हि निर्णयात्मकविचारस्य क्वावसरः? अतो वेदाध्ययनस्य दृष्टफलार्थकत्वं जिज्ञासां प्रति हेतुः। सौत्रधर्मजिज्ञासापदं विगृह्णाति—**धर्मस्येति। वेदार्थस्येति**। वेदार्थ एव धर्मः, धर्म एव वेदार्थः। सर्वो वेदार्थः धर्मसम्बन्धी वा। साक्षात्परम्परया च सर्वोऽपि वेदभागो धर्मे प्रमाणमित्युक्ते तत्प्रमेयस्य धर्मस्य वेदार्थत्वे का हानिरिति तात्पर्यम्। **जिज्ञासा**—ज्ञातुमिच्छा। अत्र शेषपूरणं करोति—**कर्तव्येति**। नन्विच्छायाः कर्तव्यत्वं कथं सङ्गच्छेत? अत आह—**विचारे लक्षणेति**। 'जिज्ञासा' इत्यत्र ज्ञा धातुः इच्छार्थकस्सन्प्रत्ययश्चेत्यवयवद्वयम्। तत्र धातोः ज्ञानसामान्यमर्थः। तस्य च विषयो धर्मः। धर्मविषकं ज्ञानं धर्मसम्बन्धि वा ज्ञानमित्यर्थः। प्रत्ययस्य चेच्छा अर्थः। तथा च धर्मविषयकज्ञानेच्छा, धर्म-

सम्बन्धिज्ञानेच्छा वेति सम्पन्नम्। तत्र विषयभूतस्य सम्बन्धिनो वा धर्मस्य ज्ञातत्वे प्रसिद्धत्वे वा तज्ज्ञानेच्छा नोपपद्यते, ज्ञातत्वात् प्रसिद्धत्वाद्वा। यदि वा विषयस्य सम्बधिनो वा धर्मस्याज्ञातत्वमप्रसिद्धत्वं वा तदा सर्वथा जिज्ञासाया अनुपपत्तिः। अतो विचारे लक्षणा जिज्ञासापदस्येत्यर्थः। ननु विचारे लक्षणायां स्वीकृतायामपि प्रसिद्धत्वाप्रसिद्धत्वादेरुपपत्तिः का? यदि धर्मः प्रसिद्धो ज्ञातो वा न तद्विचारस्यावसर इति चेच्छृणु? केनचिदंशेन ज्ञातस्य प्रसिद्धस्य वा अंशान्तरेणाज्ञातस्याप्रसिद्धस्य वा पदार्थस्यैव विचारो भवति। धर्मविषये बहुविदो बहुधा विप्रतिपन्नाः। तदुक्तं भट्टपादैः—

'अन्तःकरणवृत्त्यादौ वासानायाञ्च चेतसः।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि'॥

इत्यादिना। अतो धर्मस्वरूपं विचार्यैव निर्णेतुं शक्यत इति विचारे लक्षणा। तत्रापि ज्ञानसामान्यबोधकज्ञाधातोः अनुष्ठानोपयोगिज्ञाने, प्रत्ययस्य चेच्छासाध्ये विचारे च लक्षणा। एवञ्च शास्त्रविदामुक्तिभिर्धर्मस्वरूपे ज्ञातेऽपि धर्मस्यानुष्ठानोपगिज्ञानसिद्धये विचारः कर्तव्य इति तदर्थं विचारात्मकं शास्त्रमारम्भणीयम्, तच्च वैधम् इति सिद्धम्। तदिदमुपसंहरन्नाह—**अत** इत्यादिना। यतोऽध्ययनविधिः दृष्टार्थज्ञानफलकस्सन् शास्त्रारम्भप्रयोजकः, अत इत्यर्थः।

**अनुवाद**—इस प्रकार—वेद के अध्ययन का दृष्ट फल अर्थज्ञान है इसलिए वेदाध्ययन के अनन्तर धर्म अर्थात् वेदार्थ की जिज्ञासा करनी चाहिए यह सूत्रार्थ हुआ। यहाँ पर 'कर्त्तव्या' इस पद का अध्याहार कर जिस हेतु से वेदाध्ययन का अर्थ ज्ञानरूप दृष्ट प्रयोजन है इसलिये वेदाध्ययन के अनन्तर वेदार्थ की जिज्ञासा करनी चाहिए।

## अर्थालोकलोचन

प्राभाकरमत के अनुसार 'स्वाध्यायोऽध्येतव्यः' यह विधि मीमांसारूप विचारशास्त्र का प्रयोजक नहीं है। क्योंकि ऐसा स्वीकार करने पर 'वेदमधीत्य स्नायात्' अर्थात् वेद का अध्ययन करके समावर्त्तन स्नान करें—यह विधि बाधित होती है। परन्तु कुमारिल भट्ट का मत इससे भिन्न हैं। उनके मत में वेदाध्ययन का फल अर्थज्ञानरूप दृष्ट है। अतः यह विधि ही प्रयोजक है।

धर्मजिज्ञासा पद का लाक्षणिक अर्थ धर्मविचार है। 'ज्ञा' धातु का अर्थ ज्ञान और 'सन्' प्रत्यय का अर्थ इच्छा है इसलिये ज्ञानार्थक 'ज्ञा' धातु का अजहल्लक्षणा से अनुष्ठानोपयोगि ज्ञान अर्थ समझना चाहिए और इच्छार्थक 'सन्' प्रत्यय का जहल्लक्षणा से विचार अर्थ समझना चाहिए। इसलिए 'इस धर्मविचारशास्त्र का आरम्भ करना चाहिए" यहाँ शास्त्रारम्भ (अथातो धर्मजिज्ञासा) सूत्र का अर्थ हुआ।

इस प्रसंग में शास्त्रदीपिकाकार श्रीपार्थसारथि मिश्र का निम्न मत द्रष्टव्य है :—

'धर्मग्रहणं चोपलक्षणार्थम्। अधर्मस्यापि हानाय जिज्ञास्यत्वात्। अकार प्रश्लेषेण वा सूत्रमधर्मजिज्ञासायामपि व्याख्येयमिति निरवद्यम्॥'

भाव यह है कि—'धर्म' पद यहाँ उपलक्षण है। अतः अधर्म भी गृहीत होता है। अधर्म भी जिज्ञासा का विषय इसलिए होता है कि उसका स्वरूप जानकर परित्याग करना इष्ट होता है। इस प्रकार की व्याख्या में अकार का प्रश्लेष करके सूत्र को अथातो धर्मजिज्ञासा ( अथातोऽधर्मजिज्ञासा ) रूप भी किया जा सकता है।

## धर्मलक्षणम्

अथ को धर्मः, किं तस्य लक्षणम् ? इति चेत्, उच्यते–यागादिरेव धर्मः। तल्लक्षणम्—वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः इति। प्रयोजनेऽतिव्याप्तिवारणाय 'प्रयोजनवत्' इति। भोजनादावतिव्याप्तिवारणाय 'वेदप्रतिपाद्यः' इति। अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणाय 'अर्थः' इति।

## अर्थालोकः

नन्विदमयुक्तम्, स्वमते धर्मः क इत्यद्यापि न प्रमाणेन निरूपितम्, न वा तल्लक्षणमभिहितम्। न हि प्रमाणेन लक्षणेन च विना वस्तुसिद्धिः, 'मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात्' इति न्यायात्। अतः कथं धर्मजिज्ञासा क्रियत इति पृच्छति—**अथेति**। **किमि**–त्यादिना लक्षणं पृच्छति। प्रश्नस्योत्तरम्—**उच्यत** इति। **यागादिरेवेति**। आदिपदेन[1] होमदानद्रव्यगुणजातयो ग्राह्याः। एवकारेणान्तःकरणवृत्त्यादीनां व्यावृत्तिः।

## विशेषार्थः

ननु तावत् कथमियं प्रतिज्ञा—यागादिरेव धर्मो नान्य इति, यावत् शास्त्रविद्भिरन्तःकरणवृत्त्यादौ धर्मत्वमभ्युपगतम् इति चेद् ब्रूमः—श्रुतिः श्रेयस्करत्वेन यं धर्मं ब्रवीति सोऽस्माकं धर्मः। श्रुतिश्च 'तानि धर्माणि प्रथमान्यासन्' इति यागादीनामेव धर्मत्वं प्रतिपादयति। अत एव भाष्यकारः- 'तादृशीन्तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यो या वेदाध्ययनमन्तरेण न सम्भवति' इति प्रतिपादयन् सूचयति—यद्वेदार्थ एव धर्मः स जिज्ञास्य

---

१. 'श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैस्साध्या तस्मात्तेष्वेव धर्मता॥
अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते'॥ इत्यादिवार्तिकसन्दर्भो द्रष्टव्यः।

इति। वेदार्थश्च यागादिः। अत एव यो यागमनुतिष्ठति स धार्मिक इति लौकिकास्समाचक्षते। शास्त्रान्तरापेक्षया मीमांसाशास्त्रमिदं सुमहद्वैलक्षण्यमावहति। तत्र हि धर्मशब्दानुल्लेखेन शास्त्रस्य न्यूनतेति दृष्ट्या धर्मशब्द उपात्तः, न तदुपरि तस्य कापि चर्चा, जागतिकाध्यात्मिकपदार्थनिरूपणायैव तानि प्रवृत्तानि, इदन्तु शास्त्रं वेदवाक्यार्थनिर्णयव्याजेन धर्मतत्त्वं प्रतिपादयितुं प्रवृत्तमिति यो वेदार्थस्स धर्मः स च यागादिरेव।

धर्मलक्षणमाह—**तल्लक्षणञ्चेति**। वेदप्रतिपाद्यत्वे सति प्रयोजनवत्त्वे च सति अर्थत्वं धर्मस्य लक्षणम्। यागादौ लक्ष्ये लक्षणमिदं समन्वेति। तथाहि—'यजेत स्वर्गकामः', 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिवेदवाक्यैः प्रतिपाद्यमाना यागादय इति तेषु वेदप्रतिपाद्यत्वमस्ति। एवं ते स्वर्गादिप्रयोजनवन्तश्च। तेषां श्रेयस्साधनत्वेनार्थत्वमपीति समन्वयः। नित्यनैमित्तिककर्मसु फलाभावेऽपि अकरणे प्रत्यवायात् तन्निवृत्तिरूपप्रयोजनवत्वमस्तीति न तत्राव्याप्तिः। व्रीह्यादिद्रव्याणां पर्णत्वादिजातीनाम् आरुण्यादिगुणानाञ्च वेदप्रतिपाद्यत्वं तत्तत्क्रियानिर्वर्तनरूपप्रयोजनवत्वम् अर्थत्वञ्चास्तीति समन्वयः। द्वितीयसत्यन्तविशेषणस्य व्यावर्त्यमाह—**प्रयोजन**इति। प्रयोजनं स्वर्गादिकम्। तत्र 'स्वर्गकामः', 'पुत्रकामः', 'पशुकामः' इत्यादि वेदप्रतिपाद्यत्वमस्ति अर्थत्वञ्च वर्तत इत्यतिव्याप्तिः। प्रयोजनवत्वविशेषणेन सा व्यावर्त्यते, स्वयं तस्य प्रयोजनत्वेन प्रयोजनस्य प्रयोजनान्तराभावात्। प्रथमदलस्य व्यावर्त्यं प्रदर्शयति—**भोजन**इति। भोजनस्य तृप्तिफलकत्वमर्थत्वञ्चास्तीत्यतिव्याप्तिः। वेदप्रतिपाद्यत्वेति विशेषणेन सा व्यावर्त्यते। न हि भोजनं वेदप्रतिपाद्यम्। यदि तथा तर्हि रुग्णेनापि कर्तव्यं स्यात्। तथासत्यनिष्टमापद्येत। क्षुधं निवर्तयितुं पुरुषस्य प्रवृत्तिर्भोजने दृश्यते, न तु वेदप्रतिपाद्यं भोजनमिति पुरुषः प्रवर्तते। यद्यपि 'अष्टौ ग्रासा मुनेर्भक्ष्याः' इत्यादिस्मृतिवचनानि श्रुतिमूलकानि भक्षणविधायकानीव दृश्यन्ते, तथापि तेषां रागप्राप्ते भक्षणे ग्रासनियामकत्वे तात्पर्यमिति न दोषः। अर्थपदव्यावर्त्यमाह—**अनर्थेत्यादि**। 'श्येनेनाभिचरन् यजेत' इति वेदवाक्येन श्येननामको यागोऽभिचारफलको विहितः। अभिचारश्च शत्रुवधानुकूलव्यापारः। वधश्चानर्थः। तत्फलकत्वाच्छ्येनस्याप्यनर्थत्वम्। वेदप्रतिपाद्यत्वं प्रयोजनवत्वञ्चास्तीति श्येनयागोऽपि धर्मस्स्यात्। तद्वारणाय **अर्थ** इति। आदिपदेन वज्रेषुप्रभृतयो ग्राह्याः। श्येनादेरित्यत्र श्येनपदेन तत्फलत्वेन गम्यमानाभिचारात्मिका वैरिमरणानुकूलशस्त्रघातादिरूपा हिंसा लक्षणयोच्यते। सा च 'न हिंस्यात्' इति निषेधविषया प्रत्यवायसाधनीभूतेति तद्वारणायार्थ-

पदमिति भावः। अत्र श्येनयागे कृते न शत्रवो म्रियेरन्, किन्तु यागं यथाविध्यनुष्ठाय शस्त्रादिना संग्रामे क्रियमाणे शत्रवो म्रियेरन्। अतस्साक्षाच्छ्येनयागो न हिंसारूपः, स च न निषेधविषयः, किन्तु तत्साध्यं फलमेव तथा। फलस्यानर्थत्वात् तत्साधनस्यापि तथा व्यवहार इति ध्येयम्। तस्मात्—वेदप्रतिपाद्यत्वे प्रयोजनवत्वे च सत्यर्थत्वं धर्मत्वमिति धर्मलक्षणमुपपन्नम्।

**अनुवादः**—अब धर्म क्या है?[1] उसका लक्षण क्या है? इस प्रकार के प्रश्न का उत्तर है—यागादि ही धर्म हैं।[2] जो वेद द्वारा प्रतिपादित हो, प्रयोजन वाला हो और अर्थ हो उसी को धर्म कहते हैं। इस लक्षण में 'प्रयोजनवत्' शब्द का प्रयोग इसलिये किया गया है कि इस पद को न देने से स्वर्गादि रूप (प्रयोजन) अर्थ में अतिव्याप्ति होगी। 'भोजन' आदि में अतिव्याप्ति के निवारणार्थ 'वेदप्रतिपाद्यः' पद का सन्निवेश है। अर्थपद नहीं देने से अनर्थभूत श्येनादि में अतिव्याप्ति होगी।

## अर्थालोकलोचन

'अथातो धर्मजिज्ञासा' इस सूत्रस्थ 'अथ' 'अतः' एवं जिज्ञासा पदों की व्याख्या करने के अनन्तर ग्रन्थकार 'धर्म' का लक्षण करने में प्रवृत्त हुआ है। धर्म का लक्षण है—'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः', इस लक्षण में प्रत्येक पद की सार्थकता है अन्यथा लक्षण अव्याप्ति, अतिव्याप्ति एवं असम्भवादि दोष से युक्त हो जायगा। इस लक्षण में तीन पद हैं—वेदप्रतिपाद्यः, प्रयोजवान् एवं अर्थः। स्वर्गकामः यजेत इत्यादि वाक्यों में यज्ञविधान स्वर्ग प्राप्ति हेतु किया गया है। 'याग' वेद से विहित है। अतः वेद प्रतिपाद्य हैं। स्वर्ग प्राप्ति का प्रयोजन इससे सिद्ध होता है अतः 'प्रयोजनवान्' भी है अभिलषित वस्तु होने के कारण यह 'अर्थ' भी है। इस प्रकार यागादि को धर्म मानने में कोई दोष नहीं है। धर्म का लक्षण करने के अनन्तर ग्रन्थकार लक्षण में प्रयुक्त पदों की सार्थकता का विचार करता है। प्रथमतः 'प्रयोजनवत्' पद पर विचार करने से ही स्पष्ट है कि इस लक्षण में प्रयोजनवत् पद नहीं देने से स्वर्गादि रूप (प्रयोजन) अर्थ में अतिव्याप्ति होगी क्योंकि स्वर्ग वेदप्रतिपाद्य और अर्थ है। प्रयोजनवत् पद देने पर स्वर्गादि सुखादिरूप है इसलिए इसका प्रयोजनान्तर नहीं है। अतः अतिव्याप्ति नहीं हुई। इसी प्रकार वेदप्रतिपाद्य पद नहीं देने पर भोजनादि में अतिव्याप्ति होगी क्योंकि भोजन तृप्त्यादि रूप प्रयोजन वाला और अर्थ भी है। परन्तु इस पद के सन्निवेश से भोजन

---

१. (क) यदाहि धर्मजिज्ञासा कर्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते तदा नूनमिदं शास्त्रं धर्मज्ञानप्रयोजनमित्यवगम्यते॥ —शास्त्रदीपिका।

(ख) धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्॥—श्लोकवार्तिक।०॥

२. (क) यागादिरेवेत्येवकारेण चैत्यवन्दनादेर्धर्मत्वं वारयति न चैत्यवन्दनादिर्धर्मस्तत्र प्रमाणाभावादित्यर्थः अर्थकौमुदी, पृ० १३.

(ख) आदिपदेन दानहोमादयो द्रव्यगुणादयश्च गृह्यन्ते। —सारविवेचिनी, पृ० २.

राग प्राप्त है, अतः अतिव्याप्ति नहीं होगी। 'अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम्। द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणाम्' इत्यादि विधिविहित वाक्यों को ग्रास नियम परक माना जाता है। अतः 'वेदप्रतिपाद्य' पद के ग्रहण से उसका निषेध हो जाता है।

अर्थ पद भी साभिप्राय है। इसका तात्पर्य है 'सर्वथा इष्टफलजनकत्वेन अर्थ्यते प्रार्थ्यते इति अर्थः'। अर्थ पद नहीं प्रयुक्त करने पर अनर्थभूत श्येनादि में अतिव्याप्ति[1] होगी। श्येनादि याग "श्येनेनाभिचरन् यजेत' इत्यादि वाक्य द्वारा वेदप्रतिपादित एवं शत्रुवधरूप होने के कारण प्रयोजनवान् भी है। चतुर्थाध्याय में महर्षि जैमिनि ने इष्ट साधन के रूप में वेदबोधित श्येन कर्म को धर्म कहा है। अतः 'अर्थ' पद का व्यावर्त्य श्येन नहीं हो सकता। शत्रुवध नरकजनक होने के कारण श्येन कर्म भी अनर्थ है। केवल वेद्यमात्र के अभिप्राय से वेदबोधित श्येन कर्म को धर्म कहा है। वस्तुतः वह अनिष्ट जनक है, अतः उसके वारणार्थ 'अर्थ' पद का सन्निवेश आवश्यक है।

श्येन याग की अनर्थकता के सम्बन्ध में निम्नलिखित टिप्पणियाँ द्रष्टव्य है—

'श्येनफलस्य शत्रुवधस्य नरकजनकत्वेन अनर्थत्वात् श्येनोऽपि तद् द्वारा अनर्थ एव, तस्यापि शत्रुवधद्वारा नरकजनकत्वादिति भावः' रामेश्वरभिक्षुकृत अर्थकौमुदी 'यद्यपि श्येनस्य शत्रुवधः फलं ननु नरकः, तथापि तस्य वधस्य नरकहेतुत्वात् वधद्वारा श्येनोऽनर्थः जैमिनीन्यायमालाविस्तरः पृ० १५.

## वेदस्य धर्मप्रतिपादकत्वम्

न च—'चोदनालक्षणोऽर्थो धर्मः' (जै० सू० १. १. २.) इति सौत्रतल्लक्षणविरोधः, चोदनापदस्य विधिरूपवेदैकदेशपरत्वात् इति वाच्यम्। तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात्। वेदस्य सर्वस्य धर्मतात्पर्यवत्त्वेन धर्मप्रतिपादकत्वात्।

## अर्थालोकः

ननु सूत्रकारेण जैमिनिना धर्मस्यान्यथालक्षणं कृतम्, तेनास्य लक्षणस्य विरोध इत्याशङ्क्य परिहरति—**न चेति**। कथं विरोध इति चेदाह—**चोदनापदस्येति**। 'चोदना चोपदेशश्च विधिश्चैकार्थवाचकः' 'चोदनेति क्रियायाः प्रवर्तकं निवर्तकञ्च वाक्यमुच्यते' इत्यादिप्रमाणैः चोदनापदं विधि-

---

१. (क) लक्ष्यैकदेशे लक्षणस्य अवर्तनम् अव्याप्तिः। यथा शिखासूत्रवान् ब्राह्मणः इत्यस्य संन्यासिनि अव्याप्तिः, तस्य ब्राह्मणत्वेऽपि शिखासूत्रवत्वाभावात्।

(ख) अलक्ष्ये लक्षणगमनम् अतिव्याप्तिः। यथा मनुष्यो ब्राह्मण इति लक्षणस्य शूद्रेऽतिव्याप्तिः तस्यापि मनुष्यत्वात्।

(ग) लक्ष्ये अवर्तनम् असंभवः। यथा शृङ्गवान् ब्राह्मणः। न तस्य शृङ्गवत्त्वं कस्मिंश्चिदपि ब्राह्मणे दृश्यते।

वाक्यवाचकम्, लक्षणे च वेदपदं प्रयुक्तम्। वेदपदन्तु विध्यर्थवादमन्त्रनामधेय-निषेधबोधकम्। वेदशब्दस्तु व्यापकार्थवाची, चोदनाशब्दश्चैकदेशवाची। अतो विरोध इति भावः। परिहारहेतुमाह—**तत्रापीति**। सूत्रेऽपीत्यर्थः। **वेदमात्र-परत्वादिति**। चोदनाशब्दो विधिनिषेधवाक्यपर एव, विधिनिषेधानाञ्च वेदैकदेशत्वमेव, तथापि वेदमात्रपरश्चोदनाशब्दः। वेदश्च विध्यर्थवादमन्त्रनाम-धेयनिषेधात्मना विभक्तः। तत्र विधेरन्यैर्वेदभागैरर्थवादादिभिर्नियतस्सम्बन्धः अर्थवादानां विध्येकवाक्यत्वम्, मन्त्राणाञ्च विधेययागादिसमवेतार्थप्रकाशकत्वेन विधिसम्बन्धः, नामधेयानाञ्च विध्येकदेशत्वम्, निषेधानाञ्च विधिरूपत्वमिति चोदनाशब्दो वेदमात्रपर इति भावः। चोदनाशब्दस्य वेदमात्रपरत्वे सिद्धे निर्गलितमर्थमाह—**वेदस्य सर्वस्येत्यादिना**। **धर्मतात्पर्यवत्वेन**—धर्मे महातात्पर्य-वत्त्वेनेत्यर्थः। अवान्तरतात्पर्येणार्थवादानां स्तावकत्वेन, मन्त्राणां कर्मसमवेत-द्रव्यदेवताप्रकाशकत्वेन, नामधेयानां विधेयार्थपरिच्छेदकत्वेन, निषेधानां निवर्तकत्वेन च सर्वो वेदो धर्मप्रतिपादक इत्यर्थः।

**विधिवाक्यस्य विधायकत्वप्रकार :—**

**अनुवाद**—'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः' और जैमिनिकृत 'चोदनालक्षणोऽर्थो धर्मः' इनकी विभिन्नता प्रतीत हो रही है क्योंकि मीमांसादर्शन सूत्रस्थ 'चोदना' शब्द वेद के एक अंश विधि मात्र का प्रतिपादक है, सम्पूर्ण वेद का नहीं, ऐसा नहीं कहा जा सकता, क्योंकि जैमिनि सूत्र में 'चोदना' पद सम्पूर्ण वेद के वाचक रूप में प्रयुक्त है केवल मात्र विधि अर्थ में नहीं। अतः चोदना प्रकरण पठित समस्त वेदों के धर्म में तात्पर्य होने से समस्त वेद धर्म प्रतिपादक ही है।

## अर्थालोकलोचन

लौगाक्षिभास्कर के अनुसार 'वेदप्रतिपाद्यः प्रयोजनवदर्थः धर्मः' यह धर्म का लक्षण है और जैमिनि महर्षि ने 'चोदनालक्षणोऽर्थो धर्मः'[1] यह लक्षण किया है। इस अवतरण में ग्रन्थकार ने दोनों लक्षणों में आपाततः प्रतीयमान विभिन्नता का परिहार किया है। वेद परम्परा के अनुसार पाँच भागों में विभक्त माना जाता है—यथा-विधि, मन्त्र, नामधेय, निषेध एवं अर्थवाद।[2] पूर्वपक्ष का आशय यह है कि सूत्रकार जैमिनि के मत में केवल विधि को ही धर्म का प्रवर्त्तक स्वीकार किया गया है अर्थसंग्रहकार ने समग्र वेद (विधि मन्त्र नामधेयादि पञ्चक) को धर्म का प्रतिपादक माना है। अतः इस असामञ्जस्य

१. (क) चोदनेति क्रियायाः प्रवर्त्तकवचनमाहुः—शाबरभाष्य.
(ख) चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः—श्लोकवार्तिक.
(ग) चोदनपदस्य विधिरूपवेदैकदेशपरत्वात्—अर्थसंग्रह.

२. स च विधिमन्त्रन्नामधेयनिषेधार्थवादभेदात् पञ्चविधः—अर्थसंग्रह विभाग-१२.

का परिहार कैसे हो सकता है ?[1] इस शङ्का का समाधान करते हुये ग्रन्थकार ने कहा है—'तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात्—अर्थात् सूत्रकारीय धर्मलक्षण में चोदना पद का चोदना ( विधि ) तत्सम्बन्धी सभी वेदभागों का सूचक है। 'प्राधान्येन व्यपदेशा भवन्ति' इस न्याय से प्रधान के उल्लिखित होने पर तदतिरिक्त अन्य का भी ग्रहण हो जाता है।

अतः सूत्रकार के मत से भी वेद प्रतिपाद्य घटित ही धर्म का लक्षण है। अतः विभिन्नता नहीं होगी। **भाव यह है कि**—चोदना पद से पञ्चविधात्मक वेद ही ग्राह्य है।[2] क्योंकि विधि या चोदना साक्षात् धर्म के प्रतिपादक हैं मन्त्र नामधेय आदि विधि के सहकारी हैं, अतः साक्षात् धर्म के प्रवर्त्तक न होते हुये भी उनके द्वारा परम्परा से धर्मावबोध होता है। अतः उनकी भी धर्म प्रतिपादकता मानी गई है।

## विधिवाक्यस्य विधायकत्वप्रकारः

स च यागादिः 'यजेत स्वर्गकामः' इत्यादिवाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते। तथा हि—'यजेत' इत्यत्रास्त्यंशद्वयम् 'यजि' धातुः, प्रत्ययश्च। प्रत्ययेऽप्यस्त्यंशद्वयम् 'आख्यातत्वं लिङ्त्वं च। तत्राख्यातत्वं दशलकारसाधारणम्, लिङ्त्वं पुनर्लिङ्मात्रे।

## अर्थालोकः

एवं धर्मस्य लक्षणे निरूपिते तत्र प्रमाणं दर्शयितुमुपक्रमते—**स चेत्यादिना**। यागादिरित्यर्थः। प्रमाणं यजेतेतिवाक्यम्। अत्र स्वर्गकामपदमुद्देश्यम्, यजतिपदञ्च विधेयं समर्पयति—स्वर्गमुद्दिश्य यागो विधीयत इति तदर्थस्सम्पद्यते। यद्यपि स्वर्गकामशब्दः स्वर्गं कमयत इति व्युत्पत्त्या पुरुषवाचकः, तथापि तस्य स्वर्गे लक्षणाङ्गीकारादुद्देश्यत्वमित्याह—**स्वर्गमुद्दिश्येति**। **पुरुषं प्रति**-पुरुषाय। विधानप्रकारं दर्शयितुं विधायकपदं विभजते—**अंशद्वयमिति**। धात्वंशः प्रत्ययांशश्चेति द्वयमित्यर्थः। उभावप्यंशौ पृथक्पृथगर्थवाचकौ। तत्र प्रकृत्यंशो यागवाचकः। प्रत्ययांशस्यार्थद्वयवाचकत्वेन तदुपपादनाय प्रत्ययांशं विभजते—**अंशद्वयमिति**। अत्रांशपदं धर्मपरम्। प्रत्ययस्यैकत्वेऽपि तत्र धर्मद्वयं वर्तत

१. चोदनालक्षणोऽर्थो धर्मः "इति जैमिनिसूत्रप्रतिपादितधर्मलक्षणेनवेद प्रतिपाद्यः प्रयोजनवदर्थो धर्मः" इत्यस्मद् धर्मलक्षणस्य विरोध इति पूर्वपक्षहृदयम्। वस्तुतस्तु तन्न तथा।

२. (क) प्रयोगसमवेतार्थस्मारका मन्त्राः—विभाग ६१. ( अ० सं० )
(ख) नामधेयानाञ्च विधेयार्थपरिच्छेदतयार्थवत्त्वम्—विभाग–६७.
(ग) पुरुषस्य निवर्तकं वाक्यं निषेधः—विभाग–७५.
(घ) प्रवृत्तौ वा या शब्दश्रवणेन धीः सा चोदना—श्लोकवार्तिक.

इत्यर्थः। प्रत्ययो वाचकः तत्र वाचकतावच्छेदकधर्मद्वयं वर्तत इति यावत्। धर्मद्वयं प्रदर्शयति—**आख्यातत्वं लिङ्त्वञ्चेति**। तिङ्प्रत्यानां सर्वेषामाख्यातत्वेन व्यवहारः, तत्रैव विध्याद्यर्थेषु भूतभविष्यद्वर्तमानेष्वर्थेषु च विवक्षितेषु लादेशा भवन्ति। तेषां धर्मा लट्त्वलङ्त्वादयः। तत्र 'यजेत' इत्यत्र प्रत्यये आख्यातत्वं लिङ्त्वञ्चेति वाचकतावच्छेदकधर्मद्वयम्।

**अनुवाद**—'यजेत स्वर्गकामः' अर्थात् स्वर्गाभिलाषी पुरुष को यज्ञ करना चाहिए, इत्यादि वाक्य स्वर्ग प्राप्ति हेतु पुरुष के लिये याग का विधान करता है। यथा—'यजेत' इस तिङन्त पद में दो अंश है—'यज्' धातु एवं 'त' प्रत्यय। 'त' प्रत्यय में भी दो अंश है—आख्यातत्व एवं लिङ्त्व। आख्यातत्व धर्म (तिङ्त्व) दश लकारों में विद्यमान रहता है एवं लिङ्त्व धर्म केवल लिङ् में।

## अर्थालोकलोचन

धर्म का लक्षण प्रतिपादित करके ग्रन्थकार उसकी सिद्धि के लिये 'यजेत स्वर्गकामः' इत्यादि वैदिक वाक्यों के उद्धरण द्वारा प्रमाण उपस्थित कर रहा है। प्रस्तुत वाक्य में 'स्वर्गकाम' पद उद्देश्य समर्पक एवं 'यजेत' पद विधेय समर्पक हैं। अतः स्वर्ग को उद्देश्य करके याग का विधान करता है ऐसा स्पष्टार्थ है। विधान प्रकार के सम्यक् ज्ञान के लिये निम्न पट्टिका द्रष्टव्य है।




यजेत पद में धात्वंश एवं प्रत्ययांश दो धर्म हैं। धात्वर्थ याग वाचक है। प्रत्यय यद्यपि एक ही है तथापि उसके भी आख्यातत्व एवं लिङ्त्व दो धर्म हैं। तिङादि समस्त प्रत्ययों का व्यवहार 'आख्यात' पद से होता है। यह आख्यात 'या' लिङ् धर्म लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ् (विधि, एवं आशीः) लङ् दशलकारों में विद्यमान रहता है। किन्तु लिङ् धर्म लिङ्त्व मात्र लिङ् लकार में ही रहता है। अतः यह सिद्धान्त सर्वमान्य है कि आख्यात तथा लिङ्त्व इन दोनों से भावना का बोध होता है और इसी के कारण स्वर्गफल प्राप्ति हेतु पुरुष की यज्ञादि कर्मों में प्रवृत्ति होती है। अत एव भगवान् भाष्यकार शबरस्वामी का मत है—

'यो हि यागादिकमनुतिष्ठति तं धार्मिकं इति समाचक्षत इति तथा न केवलं लोके वेदेऽपि यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्निति यजति शब्दवाच्यमेव धर्मं समामनन्ति' इति।

## भावनासामान्यलक्षणम्—

उभाभ्यामप्यंशाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः। सा द्विधा--'शाब्दीभावना', 'आर्थीभावना' चेति।

## भावनासामान्यलक्षणम्—

### अर्थालोकः

तत्राख्यातत्वं सर्वलकारसाधारणम्, लिङ्त्वन्तु लिङ्मात्रगतमिति स्थिते आख्यातत्वावच्छिन्नस्य लिङ्त्वावच्छिन्नस्य च प्रत्ययस्य शक्तताऽवच्छेदकभेदेन भिन्नार्थवाचकत्वमुपपादयन् प्रथमं सामान्यमर्थमाह—**उभाभ्यामिति**। लिङ्त्वाख्यातत्वाभ्यामित्यर्थः। सामान्यार्थं निर्दिशति--**भावनैवेति**। एवकारः आख्यातार्थः कर्तेतिवादिनां पक्षं व्यावर्तयति। तदिदमग्रे स्फुटीभविष्यति। ननु केयं भावना नामेति जिज्ञासायां तत्सामान्यलक्षणमाह--**भवितुरिति**। भवितुः—जायमानस्य, भवनं-जननं तदनुकूलः—तज्जनकः, भावयितुः क्वचित्प्रयोज्यस्य क्वचिच्च प्रयोजकस्य व्यापारविशेषः—कृतीच्छादिरूपो भावनेत्यर्थः। भावयतीति भावनेति व्युत्पत्तिः। 'गामानय' इत्यत्र जायमानं गवानयनम्, गवानयने प्रवृत्तिर्वा जायमाना, गवानयनजननानुकूलव्यापारः प्रयोज्यव्यापारः, गवानयने प्रवृत्तिजननानुकूलव्यापारः प्रयोजकव्यापारः एकत्रायं व्यापारः गवानयनं भावयति, इतरत्र च गवानयने प्रवृत्तिं भावयतीति भावना। भावनां विभजते **सेति**। शाब्दीभावना--लिङ्त्वावच्छिन्नप्रत्ययवाच्या, आर्थीभावना-आख्यातत्वावछिन्नप्रत्ययवाच्येति द्वेधा॥

**अनुवाद**—आख्यातत्व और लिङ्त्व इन दोनों अंशों से भावना ही का बोध होता है। (भवितुः) उत्पन्न होने वाले का भवनानुकूल, उत्पत्तिजनक जो (भावयितुः) प्रयोजक का व्यापार विशेष है वही भावना है। भावना के दो भेद होते हैं। (i) शाब्दीभावना एवं (ii) आर्थीभावना।

### अर्थालोकलोचन

'भावनैव'—भावना सामान्य का लक्षण 'भवितुर्भावनानुकूलो भावयितुर्व्यापारविशेषः' किया गया है। इस लक्षण में शाब्दी-भावना एवं आर्थीभावना (जिनका विस्तारपूर्वक निरूपण आगे किया गयाहै) दोनों का ही स्वरूप स्पष्ट है। इस लक्षण के दो भाग किये जा सकते हैं—(i) भवितुर्भावनानुकूलः (ii) भावयितुर्व्यापारविशेषः। इन दोनों भागों में अभिव्यक्त आशय को 'यजेत स्वर्गकामः' विधिवाक्य को दृष्टान्त मानकर निम्न प्रकार से हृदयङ्गम किया जा सकता है। इस वाक्य में भावयिता (= प्रयोजक) 'यजेत' पद का लिङ् अंश है कोई पुरुष विशेष नहीं हैं। इस वाक्य का श्रवण करके 'स्वर्गकामः' व्यक्ति

यज्ञादि में प्रवृत्त होता है अतः यागविषयक प्रवृत्ति को ही 'भविता' से कहते हैं। प्रकृत लक्षण में भवितुः[1] का अर्थ है उत्पन्न होने वाला या उत्पद्यमान। यहाँ यागानुष्ठान के प्रति उन्मुखता ही 'भविता' या उत्पन्न होना कहा गया है। [ 'भवन' से तात्पर्य है[2] 'उत्पत्ति अनुकूल = सहायक, या कारण, भूत, भावयितुः,—भावयिता = उत्पादयिता ] 'गामानय' इस लौकिक उदाहरण में यज्ञदत्त ने देवदत्त से कहा—गाय लाओ। देवदत्त यज्ञदत्त का 'गामानय' वाक्य सुनकर सोचता है कि यज्ञदत्त मुझ में गवानयन की प्रवृत्ति उत्पन्न करना चाहता है जिससे प्रेरित होकर मैं गाय लाऊँ। तदनुसार 'गवानयनानुकूल व्यापार' में देवदत्त प्रवृत्त हो जाता है। इस परिस्थिति के विश्लेषण से यह स्पष्ट होता है कि गवानयनविषयक देवदत्त की प्रवृत्ति उत्पन्न होने में सहायकभूत यज्ञदत्त का अभिप्राय-विशेष = व्यापारविशेष भावना है।

भाव्यते इति भविता अर्थात् जिसे होने के लिये प्रेरित किया जाये वह भविता है। एवं भवति इति भवनम् अर्थात् 'होना' भवन है।

भाव यह है—'भावयिता भावनया भवितारं भावयति अर्थात् भावयिता भावन के द्वारा 'होनेवाले' 'होने' के लिये प्रेरित करता है। ( द्रष्टव्य—अर्थबोधिनी, पृ० २० टिप्पणी )

## शाब्दीभावना

तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङ्त्वांशेनोच्यते। लिङ्श्रवणे 'अयं मां प्रवर्तयति,' 'मत्प्रवृत्त्यनुकूलव्यापारवानयम्' इति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्। यथा-'गामानय' इत्यस्मिन् वाक्ये गोशब्दस्य 'गोत्वम्'।

## अर्थालोकः

**शाब्दीभावना**—शाब्दीभावनास्वरूपं प्रतिपादयति—**तत्रेति**। तयोर्भावनयोर्मध्ये शाब्दीभावनेत्यन्वयः। पुरुषस्य-प्रयोज्यस्य या प्रवृत्तिः तदनुकूलः भावयितुः-प्रयोजकस्य वेदस्य आचार्यादेर्वा व्यापारविशेषः—अयमत्र प्रवर्तताम्-इत्याकारकेच्छाविशेषः शाब्दीभावना प्रवर्तनेत्यर्थः। 'यजेत' इत्यत्र शाब्दीभावनाया वाचकमंशं प्रदर्शयति—**लिङ्त्वांशेनेति**। लिङ्त्वेनेत्यर्थः। लिङ्त्वा-

---

१. भवितृ—भवितुः षष्ठी एकवचन।

२. भावयिता भावना, भविता, भवन, आदि पद सत्तार्थक 'भू' धातु से निष्पन्न हैं। 'भाव्यते अनया इति भावना' अर्थात् जिससे ( उत्पन्न ) होने के लिये प्रेरणा की जाय उसे 'भावना कहेंगे। 'भावयति इति भावयिता जो ( उत्पन्न ) होने के लिये प्रेरित करता है वह भवयिता है।

वच्छिन्नप्रत्ययेनेति यावत् । **उच्यते**—अभिधया प्रतिपाद्यते । तस्या लिङर्थत्वेऽन्वयव्यतिरेकात्मकानुभवं दर्शयति—**लिङ्श्रवण** इति । लिङ्पदं लोट्-लेट्-तव्यानामुपलक्षकम् । लिङ्लोट्लेट्तव्येषु श्रूयमाणेषु सर्वो लोकः मामयं प्रवर्तयतीति बुध्यते, लडादिषु श्रूयमाणेषु तथा न बुध्यते । अतोऽन्वयव्यतिरेकात्मकानुभवेन प्रवर्तनापरपर्यायशाब्दीभावना लिङादीनामर्थः । तमिममनुभवमभिनयति—**मदिति** । मम या प्रवृत्तिः गवानयनादौ तदनुकूलव्यापारवानयं प्रयोजक इत्यर्थः । **नियमेन**-अन्वयव्यतिरेकाभ्याम् **प्रतीतेः** अनुभवादित्यर्थः । नियमेन प्रतीतेरिति हेतुः । यस्माद्धेतोर्नियमेनैवं प्रतीतिः तस्मालिङाद्यर्थश्शाब्दीभावनेत्यर्थः । अनेनेदमनुमानमुक्तं भवति—लिङादिः विधायकप्रत्ययः शाब्दीभावनावाचकः, लिङादिश्रवणे प्रवृत्त्यनुकूलव्यापारस्य नियमेन प्रतीतेरिति । अस्मिन्नर्थे व्याप्तिं दर्शयति—**यदिति** । यद्यत् शब्दान्नियमतः प्रतीयते तत्तस्य वाच्यमिति व्याप्तेराकारः । मीमांसकमतसिद्धमत्रोदाहरणमाह—**यथेत्यादिना** । गामानयेत्यत्र गोशब्देन गोत्वं प्रतीयत इति गोशब्दस्य गोत्वमर्थः । 'आकृतिस्तु शब्दार्थः' इत्याकृत्यधिकरणसूत्रेण जैमिनिः आकृतेः ( जातेः ) शब्दार्थत्वं व्यवस्थापयामास । सोऽयं सिद्धान्तः 'गोत्वम्' इति वदता ग्रन्थकारेण स्फोरितः । तथा च लिङादीनां विधायकानां प्रवृत्त्यनुकूलव्यापारे शक्तिः । प्रवृत्त्यनुकूलव्यापार एव प्रवर्तनेत्युच्यते । प्रवर्तनैव च शाब्दीभावनेति सिद्धम् ।

**अनुवाद**—शब्दभावना एवं अर्थभावना इन दोनों में ( प्रयोज्य ) पुरुष की प्रवृत्ति के अनुकूल प्रयोजक वेद या आचार्य ( भावयितुः ) के व्यापारविशेष को शाब्दी भावना कहते हैं । यह शाब्दीभावना लिङ् का ( वाच्य ) अर्थ है । क्योंकि 'लिङ्' अंश के सुनने पर ( प्रयोज्य ) पुरुष को यह सदा बोध होता है कि यह ( प्रयोजक पुरुष ) मुझे कार्य में प्रवृत्त कराना चाहता है अर्थात् यह प्रयोजक पुरुष मत्प्रवृत्तिजनक व्यापार वाला हैं । यही व्यापार 'लिङ्वाच्य' शाब्दीभावना है क्योंकि जो जिस शब्द से नियमतः प्रतीत होता है वह उस शब्द का ( वाच्य ) अर्थ है । जैसेः—'गामानय' गाय लाओ इस 'वाक्य' में गो शब्द का अर्थ 'गोत्व' है ।

## अर्थालोकलोचन

भावना सामान्य का लक्षण एवं उसके दो भेदों—शाब्दी एवं आर्थी भावना का विवेचन प्रस्तुत करने के अनन्तर ग्रन्थकार शाब्दीभावना का स्वरूप विशदरूप में प्रतिपादित कर रहे हैं—

शाब्दी भावना का लक्षण है—'पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः' 'यजेत स्वर्गकामः' इत्यादि वैदिक वाक्यों में 'यजेत' पद को सुनकर पुरुष में स्वर्गादि प्राप्ति के लिये यज्ञादि कार्यों में प्रवृत्ति देखी जाती है । शङ्का होती है कि यह प्रवृत्ति क्यों उत्पन्न

हुई ? मीमांसक की दृष्टि से इसका समाधान प्रकृत सन्दर्भ में दिया गया है—जो शाब्दी भावना के स्वरूप को भी स्पष्ट करता है। प्रयोज्य पुरुष की प्रवृत्ति के अनुकूल प्रयोजक वेद वाक्य या आचार्य के वाक्य ( भावयितुः ) के व्यापार विशेष को शाब्दी भावना कहा गया है। शाब्दी भावना 'लिङ्त्व' के 'त' प्रत्ययांश से ( जानी जाती ) अवबोधित होती है। लौकिक व्यवहार में जब भी हम प्रयोक्ता द्वारा 'उपासीत, स्नायात् या यजेत' आदि का प्रयोग सुनते हैं तब हमारे मन में यह भावना उत्पन्न होती है कि यह प्रयोक्ता हमें किसी कर्म में प्रवृत्त कर रहा है। इसी प्रसङ्ग को ग्रन्थकार ने 'अयं मां प्रवर्त्तयति, मत्प्रवृत्त्यनुकूलव्यापारवान् अयम्' इत्यादि पंक्तियों में व्यक्त किया है। तात्पर्य यह—

[ अयम् लिङ्प्रयोजकः पुरुषः, मत्प्रवृत्त्यनुकूलव्यापारवान् मम या प्रवृत्तिः कांचित् क्रियामधिकृत्य मनसः प्रवणता, तस्या अनुकूलः जनकः व्यापारः मानसी क्रिया अभिप्रायात्मिका, स विद्यते अस्य ] अर्थात् प्रयोजक पुरुष प्रयोज्य की प्रवृत्ति के अनुकूल व्यापारविशेष करता है अर्थात् प्रयोज्य को यह बोध होने लगता है कि प्रयोजक पुरुष में भावना विद्यमान है जिससे मुझ में उपासना, स्नान या यज्ञादि कर्म करने की प्रवृत्ति उत्पन्न हो। वस्तुतः यह अनुभव 'लिङ्' शब्द के सुनने से ही होता है। परन्तु ऐसा क्यों होता है ? इसका समाधान ग्रन्थकार ने 'यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्', अर्थात् जो जिस शब्द से नियमतः प्रतीत होता है वह उस शब्द का वाच्य ( अर्थ ) है, इन पंक्तियों द्वारा प्रस्तुत किया है।

इस नियम को समझाने की दृष्टि से जैमिनि के 'आकृतिस्तु शब्दार्थः' सूत्र ( आकृत्यधिकरण ) के आधार पर गो शब्द से 'गोत्व' ( आकृति को ) समझना चाहिये, यह भी प्रतिपादित किया है। इस प्रकार लिङादि विधायक वाक्यों का प्रवृत्ति के अनुकूल व्यापार में शक्ति स्वीकार करनी चाहिए। प्रवृत्त्यनुकूलव्यापार ही प्रवर्तना है और यह प्रवर्तना ही शाब्दी भावना है, ऐसा सिद्ध होता है।

## शाब्द्या लौकिकवैदिकभेदौ

स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव। अत एव 'शाब्दी-भावना' इति व्यवह्रियते।

## अर्थालोकः

ननु प्रवृत्त्यनुकूलव्यापारः किं लोकवेदयोस्समानः ? उत भिन्नः ? इति संशये तत्र विद्यमानं कश्चिद्भेदं प्रदर्शयति—**स चेत्यादिना**। **लौकिक-वाक्ये**-गामानयेत्यादौ। पुरुष आचार्यो राजा वा शिष्यद्वारा भृत्य भृत्यद्वारा वा गवानयनमभिप्रैति—शिष्यस्य भृत्यस्य वा गवानयने प्रवृत्तिर्भवतु, शिष्यो भृत्यो वा गामानयतु इति। एवं प्रथममभिप्रेत्यानन्तरं 'चैत्र गामानय' इति चैत्रं प्रेष्यति। गृहीतपदपदार्थसंगतिकश्चैत्रस्तथा करोति। प्रेषक आचार्यादिः

स्वगततादृशाभिप्रायमेव लोटा लिङादिना वाविष्करोति । अतश्च पुरुषनिष्ठाभिप्रायविशेषरूपव्यापार एव लोके लिङादीनामर्थ इति सिद्धम् । अयञ्च व्यापारः 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३-३-१६३ इति सूत्रेण पाणिनिना विविधो निर्दिष्टः । एतेषु वैविध्ये सत्यपि व्यापारत्वेनैकरूप एव । अयञ्च व्यापारविशेषश्चेतनधर्मः । वेदे पुनरयं व्यापारविशेषश्शब्दनिष्ठ इत्याह—**वैदिकवाक्य इत्यादिना** । शब्दनिष्ठत्वे हेतुः **पुरुषाभावादिति** । पुरुषकर्तृकत्वाभावादित्यर्थः ।

पुरुषस्य वेदेन सह कर्तृत्वसंबन्धः चतुर्धा भवितुमर्हति—पदपदार्थसंबन्धकर्तृत्वद्वारा, शब्दकर्तृत्वद्वारा, वाक्यवाक्यार्थसंबन्धकर्तृत्वद्वारा, ग्रन्थस्यैव निर्मातृत्वद्वारा वा । तत्र न प्रथमः कल्पः; शब्दतदर्थसंबन्धानामौत्पत्तिकसूत्रे नित्यत्वव्यवस्थापनात् । शब्दस्य पुरुषकर्तृकत्वं शब्दनित्यत्वाधिकरणे निराकृतम् । वाक्येषु तैस्तैः पदैरुपस्थापिताः पदार्था एव वाक्यार्थ इति वाक्याधिकरणे व्यवस्थापितमिति न वाक्यवाक्यार्थसंबन्धकरणद्वारा वेदे पुरुषानुप्रवेश इति न तृतीयः कल्पः । अत एव न चतुर्थः कल्पः । भारतादिग्रन्थस्येव वेदस्यापि पुरुषकर्तृकत्वं वक्तव्यम्, तच्च न संभवति । भारतादौ या वाक्यानामानुपूर्वी सा स्वसमानजातीयानुपूर्वीसापेक्षा न भवति, किन्तु निरपेक्षा । 'सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते' इति यानुपूर्वी सा एतत्सदृशानुपूर्व्यन्तरमपेक्ष्य न व्यासाचार्येण प्रवर्तिता, किन्तु निरपेक्ष्यैव । वेदगतवाक्येषु तु न तथा । अत्र वाक्येषु यानुपूर्वी सा एतत्सदृशानुपूर्व्यन्तरमपेक्ष्यैव प्रवर्तत इति सम्प्रत्यध्ययनपरम्परायामनुभूयते । वेदस्य पौरुषेयत्वं नानुमानेनापि साधयितुं शक्यते । तत्साधनञ्च वाक्यत्वहेतुना वक्तव्यम्—वेदः पौरुषेयः, वाक्यत्वात् भारतादिवदिति । तच्च न संभवति–साध्याभावसाधकहेत्वन्तरस्य सत्वात्–वेदो न पौरुषेयः कर्तुः स्मर्तव्यत्वे सत्यस्मरणात् । यदि वेदस्य कश्चन कर्ता स्यात्तर्हि सोऽवश्यं लोकैस्स्मर्येत । ये हि लोकाः तेषु तेषु ग्रन्थेषु सुदूरवर्तिनमपि कर्तारं स्मरन्ति, ते वेदस्य कर्तारं कथमिव न स्मरेयुः ? अतः स्मर्तव्यत्वे सत्यस्मरणात् वेदस्य कर्ता नास्तीति सिध्यति । अन्ततः सृष्ट्यादौ परमेश्वरः जगत्सृजन् वेदानपि ससर्जेति स्वीकर्तव्यम्, तथापि वेदस्य पौरुषेयत्वं न सिध्यति, 'धाता यथापूर्वमकल्पयत्' इति न्यायेनेश्वरस्यापि पूर्वपूर्वकल्पानुपूर्वीसापेक्षत्वस्य तदवस्थत्वात् बीजाङ्कुरन्यायेनेश्वरस्यापि सृष्टिकर्तृत्वं सिध्यतीत्यनादित्वे वेदस्य न व्याघातः । वेदस्यापौरुषेयत्वं नाम पूर्वकालत्वव्यापकसमानानुपूर्वीकाध्ययनविषयत्वे सति अस्मर्यमाणकर्तृकत्वम् अथवा पुरुषसमवेतमानान्तरजन्यज्ञानानपेक्षोत्पत्तिकानुपूर्वीकत्वे

सत्यध्ययनविषयत्वम् । **अस्मिन्नर्थे श्लोका भवन्ति भट्टपादीयाः, ते ध्यान-महन्ति—**

आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता ।
न शक्याध्यवसातुं हि मनागपि सचेतनैः ॥
दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः ।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ॥
प्रपाठकचतुष्षष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति ॥
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येतन्नृवचः कथम् ॥
किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम् ।
रचयेत्पुरुषो वाक्यं किञ्चोद्दिश्य प्रयोजनम् ॥
अग्नेः पुरोहितत्वञ्च क्व दृष्टं येन कीर्त्यते ।
ईळेशब्दप्रयोगश्च क्व दृष्टः श्रोत्रगोचरः ॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते ॥
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम् ।
होतृत्वमपि यज्ञस्य देवताह्वानहेतुकम् ॥
रत्नधायितमत्वञ्च तन्नरैर्ज्ञायते कथम् ।
अविज्ञातगुणानाञ्च कल्पते स्तवनं न तु ॥
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।
.........................................

सामवेदे यदोग्नाईप्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्नत्वं नाभिप्रेयोऽस्ति कश्चन ॥
तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् ।
त शब्दस्य तोशब्दं ये शब्दस्याइरूपताम् ॥
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते' ॥ इति ।

**अत एव**—शब्दनिष्ठत्वादेव । तथाचोक्तम्—'अभिधाभावनामाहुः अन्यामेव लिङादयः' इति । अभिधीयतेऽर्थोऽनेनेत्यभिधा शब्दः तद्व्यापाररूपां भावनां लिङादयोऽन्यामाहुः । अन्यत्वञ्च शब्दभावनाया आर्थीभावनातो बोध्यम् ।

लिङादिषु शब्देषु आख्यातत्वांशेनार्थीभावनाबोधकत्वमस्ति, ततोऽन्यां शब्दगत-व्यापाररूपां प्रवर्तनापरपर्यायां शाब्दीभावनामाहुर्लिङादय इत्यर्थः ।

**अनुवाद**—वह व्यापारविशेष लौकिक वाक्य में प्रवर्त्तक पुरुषनिष्ठ अभिप्राय विशेष है। वैदिक वाक्य में प्रवर्त्तक पुरुष के अभाव के कारण लिङादि शब्दनिष्ठ ही है। अत एव शब्दनिष्ठ होने के कारण यह शाब्दीभावना से व्यवहृत होता है।

## अर्थालोकलोचन

प्रवृत्ति के अनुकूल व्यापार क्या लोक एवं वेद में समान है अथवा भिन्न-भिन्न है ? इस संशय का समाधान प्रस्तुत अवतरण में किया गया है। लौकिक 'गामानय' इत्यादि वचनों में राजपुरुष अथवा आचार्य भृत्य या शिष्य को गवानयन में प्रवृत्त कराता है। भृत्य या शिष्य भी पद-पदार्थ का ज्ञान करके गवानयन में प्रवृत्त होता है। स्पष्ट है कि प्रयोजक आचार्यादि अपने अभिप्राय को लोट्, लिङादि से अभिव्यक्त करते हैं अतः सिद्ध होता है कि पुरुषनिष्ठ व्यापार विशेष ही लोक में लिङादि का अर्थ समझा जाता है। इस प्रसङ्ग में यह ध्यातव्य है कि आज्ञादि रूप प्रवर्त्तनाएँ चाहे ज्ञानरूप हो, चाहे इच्छारूप, परन्तु चेतन का ही धर्म है, अचेतन का नही। वेद में भी विधिवाक्यों से प्रवृत्त होकर 'मैं यज्ञ करता हूँ' इत्यादि व्यवहार प्रसिद्ध ही है। परन्तु वेद स्वयं अचेतन है इससे उसमें आज्ञारूप प्रवर्त्तना नहीं बन सकती। वेद का कोई कर्त्ता नहीं, अत एव कर्ता के अभाव में परम्परासम्बन्ध से भी आज्ञादि नहीं हो सकते। तथापि 'मैं वेदविधि की प्रेरणा से यज्ञ करता हूँ' इत्यादि रूप व्यवहार होने से वैदिक लिङादिशब्दों में उक्त आज्ञादि से भिन्न प्रवर्त्तनारूप धर्म सिद्ध होता है। वही 'चोदना, प्रवर्त्तना, प्रेरणा, विधि, उपदेश, शब्दभावना' आदि शब्दों से कहा जाता है। यह शाब्दी भावना ज्ञान-इच्छादि-रूप चेतन धर्मों से भिन्न है अतः भट्टपाद ने भावार्थाधिकरण में कहा है—

'अभिधा भावनामाहुरन्यामेव लिङादयः।'

अर्थात् लिङादि विधिरूप आख्यात का अर्थ अभिधा भावना है, यह लिङादिरूप आख्यात का ही अर्थ है। लिङादि विधि आख्यात भी है किन्तु उसमें आख्यातांश का अर्थ आर्थी भावना है, लिङांश का अर्थ शाब्दी या अभिधा भावना है। वेद अपौरुषेय है अतः वहाँ प्रवर्त्तयिता कोई पुरुष नहीं है। वैदिक व्यवहार में वेद ही प्रवर्तक समझा जाता है। अत-एव वैदिक विविध वाक्यों में आख्यातांश का अर्थ आर्थीभावना होता है तथा लिङांश का अर्थ शाब्दीभावना होता है।

## शब्दभावनाया अंशत्रयम्

**सा च भावनांशत्रयमपेक्षते**—साध्यम्, साधनम्, इतिकर्तव्यतां च। किं भावयेत्? केन भावयेत्? कथं भावयेत्—इति।

तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थीभावना साध्यत्वेनान्वेति, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। संख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः।

साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति। तस्य करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याः शब्दे सत्त्वात्, किन्तु शब्दभावनाभाव्यनिर्वर्तकत्वेन।

इतिकर्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यमितिकर्तव्यतात्वेनान्वेति।

## अर्थालोकः

एवं तावच्छाब्दीभावनां प्रतिपाद्य तस्या अंशत्रयं निरूपयितुमुपक्रमते—**सा चेत्यादिना**। अंशत्रयम्-आकांक्षात्रयम्। पुरुषप्रवृत्त्यनुकूलव्यापारस्य साध्यसाधनेतिकर्तव्यताकांक्षेत्यर्थः। आकांक्षात्रयमभिनयति—**किं भावयेदित्यादिना**। **तत्र**—आकांक्षात्रये। **वक्ष्यमाणेति**। अनुपदमेवेति शेषः। वक्ष्यमाणा या साध्याद्यंशत्रयेणोपेता आर्थीभावना-आख्यातत्वरूपधर्मावच्छिन्नप्रत्ययोपात्ता प्रवृत्त्यपरपर्याया सा साध्यत्वेनान्वेति-साध्याकांक्षां पूरयतीत्यर्थः। प्रवृत्त्यनुकूलव्यापारात्मिकायाश्शाब्दीभावनायाः प्रवृत्तिरेव साध्या। अप्रवृत्तप्रवर्तनं विधेरर्थः। 'गामानयेत्' इत्याचार्यः गवानयनेऽप्रवृत्तं चैत्रं प्रवर्तयति चैत्रस्य गवानयने प्रवृत्तिर्भवत्विति। अतः चैत्रादेः प्रवृत्तिरेव प्रवर्तनायास्साध्या। प्रवृत्तिरेव चार्थीभावना। ततश्च किं भावयेदित्याकांक्षायां प्रवृत्तिं भावयेदिति सम्पद्यते। अत्र प्रमाणं दर्शयति—**एकेति**। एकश्चासौ प्रत्ययश्चैकप्रत्ययः तेनोभे प्रवृत्तिप्रवर्तने गम्येते इत्येकप्रत्ययगम्यत्वमुभयोर्वर्तते। 'यजेत' 'आनयेत्' इत्यादौ धातोरनन्तरं यः प्रत्ययः स धर्मद्वयोपेतः। आख्यातत्वमपि तत्र वर्तते लिङ्त्वमपि। धर्मद्वयावच्छिन्नः प्रत्यय एकः। एक एव 'त' इति प्रत्ययो वाचकः। तत्र वाचकतावच्छेदकञ्च धर्मद्वयम्—आख्यातत्वं लिङ्त्वञ्चेति। उभाभ्यामपि धर्माभ्यामवच्छिन्नस्स प्रत्ययोऽर्थद्वयं प्रतिपादयति। अर्थद्वये च तत्प्रतिपाद्यत्वमस्तीत्येकप्रत्ययगम्यत्वं द्वयोरिति भावः। नन्वस्त्वेकप्रत्ययगम्यत्वम्, तेन किं जायत इत्यत्राह—**समानाभिधानश्रुतेरिति**। अभिधीयतेऽनेनेत्यभिधानं शब्दः। समानञ्च तदभिधानञ्च समानाभिधानम् अर्थद्वयस्य वाचकश्शब्द एक इत्यर्थः। तद्रूपा श्रुतिः समानाभिधानश्रुतिः। विनियोगविधिनिरूपणावसरे विषयोऽयं स्पष्टीभविष्यति। समानाभिधानश्रुतेः प्रमाणात् आर्थीभावना स्वांशत्रयोपेता शाब्दीभावनायां साध्यत्वेनान्वेति। यदन्वेति तदुपसर्जनम्,

यत्रान्वेति तत्प्रधानम् उपसर्जनप्रधानयोस्सम्बन्धे किञ्चित्प्रमाणं वक्तव्यम् । तदत्र समानाभिधानश्रुतिः प्रमाणमिति भावः ।

एकप्रत्ययगम्यत्वं यथा आर्थीभावनायास्तथा संख्याया अपि सत्वात्तस्यास्तत्र साध्यत्वेनान्वयः भवत्वित्याशंक्य परिहरति—**संख्यादीनामिति** । संख्याया-स्साध्यत्वेनान्वयाभावे हेतुः—**अयोग्यत्वादिति** । कृतिसाध्यत्वाभावादित्यर्थः । द्वित्वादीनामपेक्षाबुद्धिजन्यत्वमेव न कृतिसाध्यत्वम् । एकत्वन्तु केवलान्वयि । अतो न संख्यायास्तथान्वय इति भावः ।

शाब्दीभावनायाः करणाकांक्षां पूरयति—**लिङादिज्ञानमिति** । आदिपदं लोट्-लेट्-तव्यानां ग्राहकम् । घटनिरूपितदण्डनिष्ठकरणत्वमिव नात्र करणत्व-मित्याह—**तस्य चेत्यादिना** । **तस्य**-लिङादिज्ञानस्य । घटस्योत्पादको दण्डः । अतस्तत्रोत्पादकत्वरूपं करणत्वम् । तद्वदत्र शाब्दीभावनायाः लिङादिज्ञानं नोत्पा-दकम् । तत्र हेतुमाह—**तत्पूर्वमपीति** । लिङादिज्ञानात्पूर्वमपि **तस्याः** शाब्दी-भावनायाः, **सत्वात्** विद्यमानत्वात् । यथा हि निखिलसामग्र्या सह दण्डसत्वे घटसत्वम्, निखिलसामग्रीसत्तादशायामपि दण्डाभावे घटाभाव इत्यन्वय-व्यतिरेकौ भवतः, तथा न प्रकृते । लिङादिज्ञानाभावेऽपि शब्दधर्मभावनाया-स्सत्वात् । लिङ्त्वावच्छिन्नः प्रत्ययः शाब्दीभावनाया वाचकः । वाचकात्पदाद् गृहीतपदपदार्थसङ्गतिकस्य पुरुषस्यार्थावबोधो भवति । शब्दस्य वाच्येन सह वाच्यवाचकभावस्संबन्धो नित्यः । यश्च गृहीतपदपदार्थसङ्गतिकः तस्मै शब्दोऽर्थ-मवबोधयति, सोऽर्थं जानाति । यो वा न तादृशः सः श्रुतादपि शब्दादर्थं न जानाति । तावता शब्दस्यार्थावबोधकत्वसामर्थ्यं नास्तीति न वक्तुं शक्यते, ( तच्च सामर्थ्यमविदित्वा स पुरुषः केवलं शब्दं शृणोति । तावता शब्दस्य को दोषः । अतः ) पदपदार्थसम्बन्धज्ञानात्पूर्वमपि वाच्यवाचकसंबन्धानां सत्वात् न लिङादिज्ञानस्योत्पादकत्वरूपं करणत्वम् । ननु यद्युत्पादकत्वरूपं करणत्वं नाभिप्रेयते तर्हि करणत्वं कीदृशमिति चेदाह—**भावनाज्ञापकत्वे-नेति** । अयं भावः—लिङ्ज्ञानमित्यस्य लिङर्थज्ञानमित्यर्थः । यस्मिन्नर्थे लिङो विधानं तज्ज्ञानमिति यावत् । लिङर्थश्च प्रवर्तनापरपर्याया शाब्दी-भावना । सा च प्रवृत्त्यनुकूलव्यापारः । अनेन व्यापारेण प्रवृत्तिस्साध्यते, मत्प्रवृत्त्यनुकूलव्यापारवानयमित्यवगमात् । 'गां नयति' 'गां निनाय' इति निशम्य न कोऽप्यवगच्छति—यन्मत्प्रवृत्त्यनुकूलव्यापारवानिति । लिङादिकं श्रुत्वैव तथावगच्छतीति निर्विवादम् । तथा च प्रवृत्त्यनुकूलव्यापारार्थकलिङ्ज्ञानं प्रवृत्तिज्ञापकम् त्वया प्रवर्तितव्यमिति, त्वं प्रवर्तस्वेति वा । प्रवृत्तिश्चार्थी-

भावना । सा च शाब्दीभावनासाध्या । शाब्दीभावनासाध्यार्थीभावनाज्ञापकत्वेन लिङ्ज्ञानं करणमिति । अथवा शब्दभावनाभाव्यार्थभावनानिर्वर्तकत्वेन लिङ्-ज्ञानस्य पारिभाषिकं करणत्वमिति । इतिकर्तव्यताकांक्षां पूरयति—**अर्थवादेति ।** विधेः शेषोऽर्थवादः । विधिसन्निधौ श्रूयमाणं वाक्यमर्थवाद इति यावत् । 'वायव्यं श्वेतमालभेत भूतिकामः' इति विधिवाक्यम् । भूतिं धनमिच्छता पुरुषेण वायुदेवताकः श्वेतगुणकद्रव्यकयागः कर्तव्य इति वाक्यस्य साधारणोऽर्थः । तत्सन्निधौ 'वायुर्वै क्षेपिष्ठा देवता' इत्यादिराम्नायते । वायुः— देवता क्षेपिष्ठा-क्षिप्रगामिनी, यो यजमानः स्वीयद्रव्येण यजते तस्मै वायुः क्षिप्रं फलं प्रापयति इति वाक्यशेषार्थः । अनेन वाक्येन वायुगतो गुणः कीर्तितः । वायुगत-क्षिप्रगामित्वं सर्वैरनुभूयत एव । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनाप्राप्तार्थ-बोधकत्वाभावात् नास्य प्रयोजनवत्वं प्रतीयते । ज्ञातस्यार्थस्य ज्ञापनेन नास्माकं किमपि प्रयोजनमिति वैयर्थ्यमार्थवादानां प्राप्तम् । तच्चायुक्तम्, स्वाध्यायविधिपरिगृहीतत्वात् । सर्वो वेदः प्रयोजनवदर्थपर्यवसायीत्यध्ययनविधि-र्बोधयति । तदिदमसङ्गतं स्याद्यदि विधिशेषाणां वैयर्थ्यं स्यात् । अतः स्वाध्याया-ध्ययनविधिपरिगृहीतत्वेनार्थवादानामप्यर्थवत्वं प्रतिपादनीयम्, अन्यथा अर्थवा-दानामप्यध्ययनकर्तव्यतां विधिर्न बोधयेत् । एवं स्थितौ वायव्ययागविधिः पुरुषं कर्मणि प्रवर्तयन्नपि, यदि पुरुष आलस्यादिना न प्रवर्तते तं तत्र कथमपि प्रवर्तयितुं पुरुषगतालस्यादिकञ्च निवारयितुं समुचितं साधनमपेक्षते । विधेः स्वातन्त्र्येण प्रवर्तकत्वशक्तौ विद्यमानायामपि सा शक्तिः यत्र कार्यं साधयितुम-क्षमा तत्रेतरसाहाय्येन स्वनिष्ठप्रवर्तकत्वशक्तिं परिवर्द्धयितुं विधिः कांक्षते । ननु विधिगतप्रवर्तकत्वशक्तेरक्षमत्वं कुतः? कुतश्चेतरसाहाय्यापेक्षा? इति चेच्छृणु ! पुरुषः स्वस्वाभिलषितं फलं साधयितुं साधनमपेक्षमाणो वेदोदितानि साधनानि पश्यन् तत्रेष्टसाधनत्वबुद्धौ जातायामपि तद्गतनियमक्लेशव्ययादिक-मवगत्य स्वाभिलषितेष्टापेक्षया तत्साधनेऽधिकक्लेशजनकत्वं निश्चिन्वानस्तूष्णी-मास्ते । 'साधनकथनावसरे साचीकुर्वन्ति वक्त्राणि' इति खल्वभियुक्तोक्तिः । तमेतादृशं पुरुषं कर्मणि प्रवर्तयितुं स्वयमक्षमो विधिरभिलषितेष्टापेक्षया साधन-गतक्लेशस्योत्कटत्वं नास्तीति बोधयितुं साहाय्यमपेक्षमाणोऽर्थवादमाश्रयते । अर्थवादोऽपि भूतार्थप्रतिपादनेन प्रयोजनविहीनः प्रयोजनवन्तं प्रकृतं विधिमा-श्रयते । तत्र शक्यार्थप्रतिपादनेन विधेराश्रयो न लभ्येत इति लक्षणया विधेय-गतप्राशस्त्यमवबोधयन् विध्येकवाक्यतामवाप्य विधिगतशक्तिप्रवर्द्धने साहाय्य-

माचरति। क्षिप्रगामिदेवताकत्वादयं यागः क्षिप्रमेव फलप्रदः, अतः प्रशस्त इत्यवगमयन्नर्थवादो विधिनिष्ठप्रवर्तकत्वशक्तिसमुपबृंहणे विधेस्सहायकः। इदमेवार्थवादज्ञाप्यं प्राशस्त्यम्। **इतिकर्तव्यतात्वेनेति**। विधेः कर्तव्यं यत् प्रवर्तनारूपं कार्यं तत्प्रकारबोधनमेवेतिकर्तव्यता। स्वविधेये यागे इष्टसाधनताज्ञानवन्तमप्यप्रवृत्तं पुरुषं कथमहमेनमस्मिन् कर्मणि प्रवर्तयेयमित्याकांक्षायुक्तस्य विधेः कर्तव्यप्रकारं प्राशस्त्यज्ञानजननद्वारा बोधयन्नर्थवाद इतिकर्तव्यतात्वेनान्वेतीत्यर्थः। तथा च—अर्थभावनाभाव्यका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दीभावनेति संपद्यते।

**अनुवादः**—यह शाब्दीभावना तीन अंशों की अपेक्षा करती है। ये तीन अंश हैं—(१) साध्य (२) साधन एवं (३) इतिकर्त्तव्यता। इस अपेक्षात्रय का स्वरूप क्रमशः यह है—(i) किं भावयेत्? क्या किया जाये, (ii) केन भावयेत्? किससे किया जाये? एवं कथं भावयेत्? कैसे किया जाये।

[क] शाब्दीभावना के साध्य की आकांक्षा होने पर आर्थीभावना का अन्वय साध्य रूप में होता है। आर्थी भावना भी अंशत्रयवती होती है जिसका निरूपण आगे किया जायेगा। शाब्दीभावना और आर्थीभावना दोनों एक ही (लिङ्) प्रत्यय 'त' के द्वारा जानी जाती है अतः आर्थीभावना शाब्दीभावना की साध्य होती है। यद्यपि लिङ्वाच्य संख्या और काल भी एक प्रत्यय से जाने जाते हैं तथापि योग्यता के अभाव के कारण शाब्दीभावना के साध्य रूप में अन्वित नहीं होते।

[ख] जब शाब्दी भावना में साधन अर्थात् करण की आकांक्षा होती है तब 'लिङादिके ज्ञान' का अन्वय करण रूप में होता है। लिङादि ज्ञान का करणत्व रूप में ग्रहण शाब्दीभावना के उत्पादक रूप में नहीं किया जाता क्योंकि लिङादि ज्ञान से पहले भी शब्द में शाब्दीभावना विद्यमान है [अतः शाब्दीभावना का कभी भी उत्पादक लिङादिज्ञान नहीं हो सकता] किन्तु [यहाँ] [भावनाज्ञापकत्वेन] भावना का प्रकाशक होने के कारण लिङादिज्ञान में साधनत्व अथवा करणत्व स्वीकार किया गया है अथवा [यह भी कहा जा सकता है कि] लिङादिज्ञान से शाब्दी भावना के साध्य आर्थीभावना की उत्पत्ति होती हैं अतः लिङादिज्ञान का शाब्दीभावना के करणत्व रूप में ग्रहण किया जा सकता है।

[ग] इतिकर्त्तव्यता की आकांक्षा होने पर अर्थवाद के द्वारा ज्ञात होने वाली प्रशंसा का इतिकर्त्तव्यता के रूप में ग्रहण होता है।

## अर्थालोकलोचन

प्रस्तुत अवतरण में शाब्दी भावना के स्वरूप विवेचन के अनन्तर उसके अंशत्रय—साध्य, साधन, इतिकर्त्तव्यता पर विशद विचार किया जा रहा है। वस्तुतः प्रवृत्त्यनुकूलव्यापारवती शाब्दीभावना का साध्य प्रयोज्य की प्रवृत्ति है जो आर्थीभावना के

द्वारा सम्पन्न होती है। अप्रवृत्त को प्रवृत्त कराना ही विधि का प्रयोजन है। आचार्य चैत्र को गवानयन में प्रवृत्त कराना चाहता है अतः चैत्रादि की प्रवृत्ति ही प्रवर्त्तना की सिद्धि है और यह प्रवृत्ति ही आर्थीभावना है। एवञ्च, किं भावयेत् ? का समाधान 'प्रवृत्ति भावयेत्' होगा। इस सिद्धान्त को पुष्ट करने हेतु ग्रन्थकार ने लिखा है—**'एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः'**—भाव यह है कि 'यजेत', 'आनयेत्' इत्यादि धातुओं के अनन्तर जो 'त' प्रत्यय है उसके दो धर्म है—आख्यातत्व एवं लिङ्त्व—परन्तु प्रत्यय एक ही है और ये दोनों धर्म दो अर्थ के प्रतिपादक हैं। अर्थात् लिङ्त्व से शाब्दीभावना का बोध होता है एवं आख्यात से आर्थीभावना का। शाब्दीभावना के साध्य को आकांक्षा होने पर आर्थीभावना का अन्वय साध्य रूप में इसलिये होता है क्योंकि दोनों का ही विधान एक ही प्रत्यय से किया गया है [ आर्थी भावना शाब्द्या भावनायाः साध्यं कस्मात् भवति। समानाभिधानश्रुतेः। समानाभिधान-श्रुतिश्च कस्मात्। शाब्दीभावना आर्थीभावना च एकप्रत्ययगम्ये स्तः इत्यतः ]

इस प्रसङ्ग में यह संशय होता है कि शाब्दीभावना के साध्य रूप में आर्थीभावना का अन्वय इसलिये किया जाता है दोनों ही एक प्रत्ययगम्य हैं एवं समान श्रुति से प्राप्त हैं, परन्तु 'त' प्रत्यय से केवल आर्थीभावना का ही बोध नहीं होता अपितु उससे संख्या, काल, पुरुष का भी बोध होता है अतः इन्हें भी शाब्दीभावना का साध्य क्यों न माना जाय ?




इस शङ्का का समाधान करते हुये लिखा है—

'अयोग्यत्वान्न साध्यत्वेनान्वयः' अर्थात् यद्यपि तिङ्वाच्य संख्या एवं काल भी एक 'त' प्रत्यय गम्य है तथापि ये दोनों शाब्दीभावना के साध्य नहीं हो सकते हैं क्योंकि इन दोनों में 'कृतिसाध्यत्व' अर्थात् पुरुषसाध्यत्व का अभाव है अतः साध्यत्व रूप में अन्वय नहीं हो सकता।

शाब्दीभावना की करणाकांक्षा होने पर लिङादिज्ञान का करणरूप में अन्वय होता है। यहाँ 'लिङादि' में आदि पद से लोट्, लेट्, तव्यादि प्रत्ययों का ग्रहण होता है। 'दण्डेन घटः' आदि वाक्यों में घट के उत्पादक रूप में दण्ड का करणत्व अभिप्रेत है उस प्रकार 'करण' यहाँ नहीं है इस शङ्का के निवारणार्थ कहा गया है कि लिङादिज्ञान शाब्दीभावना का उत्पादक नहीं है क्योंकि लिङादिज्ञान से पहले भी शब्द में शाब्दी-भावना विद्यमान है। लिङ्त्वधर्म से अवच्छिन्न प्रत्यय शाब्दीभावना का वाचक है। वाचक

पद से पद-पदार्थ का सम्यग्ज्ञान करके ही पुरुष को 'अर्थ' का ज्ञान होता है। शब्द का वाच्य के साथ वाच्यवाचकभावरूपी सम्बन्ध नित्य है। अतः पदपदार्थ के सम्बन्ध ज्ञान के पूर्व भी वाच्यवाचकसम्बन्ध की विद्यमानता के कारण लिङादिज्ञान को उत्पादकस्वरूप में करण नहीं माना जा सकता।[1] भाव यह है कि 'गां नयति, 'गां निनाय' इत्यादि वाक्यों को सुनकर किसी भी व्यक्ति में प्रवृत्त्यनुकूल व्यापाररूपी क्रिया नहीं होती अपितु 'नय, आनय' आदि प्रयोगों से ही प्रवृत्ति होती है। यह प्रवृत्ति ही आर्थीभावना है जो कि शाब्दीभावना द्वारा साध्य है।

उपरिलिखित विवेचन से यह शङ्का स्वाभाविक है कि जनसामान्य की प्रवृत्ति लिङादिज्ञान से यागादि में क्यों नहीं होती ? इस शङ्का का समाधान 'इतिकर्त्तव्यता...........' आदि के द्वारा किया गया है। 'इतिकर्त्तव्यता' पद में इतिशब्द का प्रकार अर्थ है [ इति अनेन प्रकारेण, कर्त्तव्यं साध्यम्, उत्पादनीयम् इति इतिकर्त्तव्यम्, तस्य भावः इतिकर्त्तव्यता ] अर्थात् यागादि करने की प्रक्रिया का बोध इतिकर्त्तव्यताज्ञान से होता है। प्रकृत सन्दर्भ में सामान्य से विशेष को अलग करने वाले पद को ही 'प्रकार' शब्द से अभिव्यक्त किया गया है अतः लिङादिज्ञानरूपकर्त्तव्य सामान्य माना जायगा एवं उसका भेदक जो कर्मप्राशस्त्यरूप विशेष है उसका ग्रहण 'इतिकर्त्तव्यता' रूप में होगा। भाव यह है कि जिस पुरुष को यागादिरूपी कर्म में प्राशस्त्य[2] का ज्ञान होगा उसी को ही 'लिङादिश्रवण' से कर्म में प्रवृत्ति होगी परन्तु जिसे प्राशस्त्यज्ञान नहीं होगा उसकी प्रवृत्ति नहीं होगी। यह अन्वयव्यतिरेक सिद्धान्त से स्पष्ट है। वैदिक कर्म के प्राशस्त्य का बोध अर्थवाद [ अर्थस्य वादः ] वाक्यों से होता है।[3] यथा—'वायव्यं श्वेतमालभेत भूतिकामः' यह विधि वाक्य है। अर्थात् धन की इच्छा रखने वाले पुरुष को वायु देवता श्वेत गुण युत द्रव्य द्वारा याग करना चाहिए। इस वाक्य के सन्निकट 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति, स एव एनं भूतिं गमयति' इत्यादि वाक्य आम्नात है।[4] विधिवाक्य 'वायव्य ···' आदि में भूति आदि पदों से फल स्वरूप का बोध होता है। कर्मप्राशस्त्य का बोध तो 'वायुर्वै क्षेपिष्ठा—[ वायुशीघ्रगामी देवता है। वह शीघ्र ही उसे ऐश्वर्य देती है, जो उसके भागधेय श्वेत पशु से उसका आराधन करते हैं ] इस अर्थवाद से होता है। यद्यपि अर्थवादों का वाच्यार्थ प्रशंसा नहीं हैं तथापि लक्षणा से प्रशंसा अर्थ निकलता ही है। अतः प्राशत्यविशिष्ट लिङादिज्ञान से याग में प्रवृत्ति करनी चाहिए।

---

१. यथा कुठारः पुरुषसाध्यछेदनव्यापारं निर्वर्तयन् पुरुषस्य करणमित्युच्यते, एवं लिङादिज्ञानमपि शब्दभावनाभाव्यार्थभावनां निर्वर्तयत् शब्दभावनाकरणमित्युच्यते। —सारविवेचनी.

२. प्राशस्त्यं कर्मप्राशस्त्यमित्यर्थः।

३. अर्थवादैः स्तुतिपरैः वाक्यैः ज्ञाप्यं यत् प्राशस्त्यम्।

४. यतः क्षिप्रगामिस्वभवतया शीघ्रफलप्रदो वायुरस्य पशोर्देवता, ततः प्रशस्तमिदं वायव्यं पशुमालभेत। —जैमिनीयन्यायमाला विस्तर, पृ॰ २३.

उपरिलिखित विवेचन को संक्षेपतः पट्टिका द्वारा निम्न तरह से व्यक्त किया जा सकता है--




प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थीभावना। सा चाख्यातत्वांशेनोच्यते, आख्यात्वसामान्यस्य व्यापारवाचित्वात्।

## आर्थीभावनालक्षणम्

### अर्थालोकः

'वक्ष्यमाणांशत्रयोपेता' इति पूर्वं प्रतिज्ञातामार्थीभावनां लक्षयति **प्रयोजनेति**। प्रयोजनम्--स्वर्गपशुपुत्रादिकम्, तद्विषयिण्येच्छया रागविशेषेण जनितः यो विधेयक्रियाविषयः प्रयोज्यपुरुषव्यापारः सार्थीभावना। अयं व्यापारः कैश्चित्प्रयत्न इत्यभिधीयते, कैश्चिच्चान्योत्पादनानुकूलात्मा कथ्यते। प्रयत्नपक्षे तस्य चेतनगतत्वेन 'रथो गच्छति' इत्यादिप्रयोगेषु वोढ्श्वादिगतप्रयत्नमादायोपपत्तिः कर्तव्या भवति। द्वितीयपक्षे अन्योत्पादनानुकूलव्यापारस्य रथे गमनव्यतिरिक्तस्याभावात् गमनस्य च धात्वर्थत्वात् 'रथो गच्छति' इत्यादि प्रयोगा अनुपपन्ना इव भान्ति, तथापि--रथस्तथा गमनेन पूर्वोत्तरावान्तरदेशविभजनसंयोजनरूपेण व्याप्रियेत यस्मिन् व्यापारे कृते गमनेन ग्रामप्राप्तिर्भवेत् इत्यर्थस्वीकारेण न दोषः। पक्षद्वयमिदं नवीनप्राचीनमीमांसकमतभेदेन प्रचलतीति बोध्यम्। ननु पचति गच्छतीत्यादौ धात्वर्थातिरेकेण प्रयत्नो वा अन्योत्पादनानुकूलव्यापारो वा न प्रतीयते, न वा तद्वाचकशब्दो दृश्यते। अतः कथं प्रयोज्यपुरुषव्यापारत्वेनार्थीभावना? इति चेदाह—**आख्यातसामान्यस्येति**। पचतीत्यादिषु पाकं करोति गमनं करोति इति करोतिना विवरणमनुभूयते। तत्र घञन्तपाकशब्देन ल्युडन्तगमनशब्देन पाकगमनादयो धात्वर्था अभिहिताः। 'करोति' शब्देन विवरणपरेण कश्चन व्यापारोऽभिधीयत इति निर्विवादम्। कस्येदं विवरणं करोतिना क्रियत इति समाधातव्यम्। करोतिना यो व्यापारो बोध्यते स न धातोरर्थः। धातुं ( प्रकृतिं ) परित्यज्य

प्रत्ययोऽवशिष्यते । परिशेषात्प्रत्ययस्याख्यातस्यैव तद्विवरणमिति पर्यवस्यति । विवरणपरककरोतेः प्रयत्नार्थकत्वं केचनाङ्गीकुर्वन्ति, अन्ये तु 'चैत्रो गच्छति' 'रथो गच्छति' इत्यादिषु चेतनाचेतनकर्तृकाख्यातसमानार्थकस्य करोतेः प्रयत्नार्थकत्वस्यासंभवात् अन्योत्पादनानुकूलव्यापार एव सर्वाख्यातानामर्थ इति वदन्ति । **व्यापारवाचित्वादिति ।** अन्योत्पादनानुकूलव्यापारसामान्यवाचित्वादित्यर्थः । अयमेव व्यापार आर्थीभावनेति यावत् ।

**अनुवाद**—स्वर्गादि प्रयोजन को लक्ष्य करके यागादि कर्म को सम्पादित करने का यजमान [ पुरुष ] में जो मानसिक व्यापार उत्पन्न होता है उसे आर्थी भावना कहते है ।[1] यह आर्थीभावना आख्यात अंश अर्थात् तिङ् का अर्थ है क्योंकि व्यापार या क्रिया का वाचक आख्यात सामान्य ही होता है ।

## अर्थालोकलोचन

'यजेत स्वर्गकामः' आदि विधिवाक्य के श्रवण करने के अनन्तर श्रोता यजमान में स्वर्गरूप फल प्राप्ति हेतु यागादि कर्मानुष्ठान की प्रवृत्ति होती है । पुरुष की यागविषयक मानसिक व्यापार को ही आर्थीभावना कहते हैं । इस व्यापार को कुछ लोग 'प्रयत्न' के नाम से अभिहित करते हैं और कुछ **'अन्योत्पादनानुकूलात्मा'** कहते हैं । प्रयत्न पक्ष में 'रथो गच्छति' आदि प्रयोगों में 'गमनानुकूलव्यापार' चेतन का ही धर्म हो सकता है अतः वाहक अश्वादि में चेतन धर्म मान कर असंगति का निवारण है परन्तु द्वितीय पक्ष में 'रथो गच्छति' इत्यादि प्रयोग असाधु प्रतीत होते हैं तथापि इसका समाधान यह हो सकता है कि रथ के गमन करने से पूर्व देश संयोग का नाश होकर, उत्तर देश के साथ संयोग होने पर गन्तव्य ग्राम देश की प्राप्ति होती है अतः प्रयोग में दोष नहीं होगा । यह पक्षद्वय नवीन एवं प्राचीन मीमांसक के नाम से प्रचलित है । तात्पर्य यह है कि व्यापार रूप भावना प्रायः चेतन में ही रहती है; परन्तु चेतन में ही रहने का सर्वथा नियम नहीं है । अतएव 'रथो गच्छति' ( 'रथ जाता है' ) इत्यादि वाक्यों में चक्रभ्रमणरूप भावना अचेतन की ही है इसलिए 'रथो गच्छति' के 'ति' आख्यात का भी भावनारूप मुख्यार्थ है ।

इससे पूर्व यह कहा गया है कि विधिवाक्यों में लिङ्, लोट्, तव्य प्रत्यय अवश्य होते हैं । उनका **भावना** ही अर्थ होता है । वह भावना भी दो प्रकार की होती है—शाब्दीभावना एवं आर्थीभावना । यथा 'यजेत' में 'यज्' प्रकृति है और लिङ् प्रत्यय है । लिङ् में लिङ्त्व और आख्यातत्व ये दो धर्म हैं । आख्यातत्व दस लकारों में रहता है किन्तु लिङ्त्व धर्म लिङ् में ही रहता है । आख्यात का अर्थ है—आर्थी भावना एवं लिङ् का अर्थ है शाब्दी

---

१. प्रयोजनस्य स्वर्गादिरूपफलस्य येच्छा रागविशेषः फलेच्छा साधनमुपसङ्क्रामतीति न्यायात्तेन च रागविशेषेण जनितो यो यागादिक्रियाविषयः पुरुषस्य व्यापारविशेषः सार्थीभावनेत्यर्थः । —अर्थकौमुदी, पृ० ३३.

भावना। 'अर्थयते इति अर्थः' इस व्युत्पत्ति के अनुसार फलकामनायुत पुरुष ही 'अर्थ' शब्द का वाच्य है। उसी की भावना आर्थीभावना कही जाती है। अतः भावयिता पुरुष में रहने वाला वह यत्नविशेष आर्थीभावना कही जाती है, जिससे 'फलभावना' उत्पन्न होती है। 'दशलकार साधारण' होने से आख्यात को 'सामन्य' कहा गया है। इसका विग्रह 'आख्यातं सामान्यं' न करके, 'आख्यातमेव सामान्यं' करना उचित है।

## आर्थीभावनाया अंशत्रयम्

साप्यंशत्रयमपेक्षते—साध्यम्, साधनम्, इतिकर्त्तव्यताञ्च—किं भावयेत्? केन भावयेत्? कथं भावयेत्? इति।

तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति।

साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति।

इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति।

## अर्थालोकः

अस्या अपि शाब्दीभावनावदंशत्रयं प्रदर्शयितुमुपक्रमते—**सापीत्यादिना**। इत्यपेक्षत इत्यन्वयः। **तत्र**—अंशत्रयमध्ये। **स्वर्गादिफलमिति**। 'यजेत स्वर्गकामः' इत्यत्राख्यातवाच्यार्थीभावनायां स्वर्गकाम इति पदोत्तपात्तस्वर्गरूपफलस्य साध्यत्वेनान्वयः—स्वर्गरूपफलं भावयेदिति। ननु स्वर्गकामपदं पुरुषवाचकम्, पुरुषस्य विशेषणं फलपदम्। परुषविशेषणं सत् तत्कथं साध्यत्वेनान्वियात्? इतिचेत्—स्वर्गकामशब्दस्य स्वर्गे लक्षणाङ्गीकारात् न दोषः। ननु 'यजेत' इत्येकं पदम् प्रकृत्या धात्वर्थं प्रत्ययेन च भावनामाचष्टे। प्रत्यायार्थभावनायास्साध्याकाङ्क्षायां सन्निकृष्टत्वात् धात्वर्थ एव समानपदश्रुत्यान्वेतु; कथं भिन्नपदेनोपात्तस्य स्वर्गस्य तथान्वयस्स्वीक्रियत इति चेन्न; धात्वर्थस्यापुरुषार्थत्वात् भिन्नपदोपात्तस्यापि फलस्यैव पुरुषार्थत्वात्। अतः स्वर्गं भावयेदिति बोधः। **साधनाकाङ्क्षायाम्** आर्थीभावनाया इति शेषः। **करणत्वेनेति**। अत्रापि पारिभाषिकं करणत्वं स्वभाव्यनिर्वर्तकत्वरूपं बोध्यम्। आर्थीभावनायाः करणाकाङ्क्षा, आर्थीभावना च पुरुषप्रवृत्तिरूपा। तस्या यागादिः करणं कथं स्यात्? न हि यागेन पुरुषप्रवृत्तिस्साध्यते। अत उत्पादकत्वरूपं करणत्वं नाभिप्रेतम्, किन्तु पारिभाषिकमेव स्वभाव्यनिर्वर्तकत्वरूपम्। स्वं आर्थीभावना, तद्भाव्यं स्वर्गादिफलम्, तन्निर्वर्तकत्वं यागादावस्ति। तथा च यागेन स्वर्गं भावयेत् इति बोधः। **तृतीयाकाङ्क्षां पूरयति—प्रयाजादीति**। 'समिधो यजति', 'तनूनपातं यजति', 'इडो यजति', 'बर्हिर्यजति', 'स्वाहाकारं

यजति' इति विहिताः पञ्च यागाः प्रयाजाः कथ्यन्ते। आदिपदेनानूयाजादयो ग्राह्याः। इमे पञ्च यागाः दर्शपूर्णमासप्रकरणे समाम्नाताः फलरहिताः। दर्शपूर्णमासयागस्तु फली, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्याम्नानात्। यः फली स प्रधानम्। फलवदपि प्रधानं न तेन केवलेन फलं सम्पादयितुं शक्यम्, किन्त्वङ्गसहितेनैव तेन फलं सम्पादनीयम्, अतः फलभाव्यकभावनेयं यागेन फलं कथं संपादनीयमित्याकाङ्क्षावती भवति। एवं फलविहीनाः प्रयाजानूयाजादयः फलाकाङ्क्षावन्तः—किमस्माकं भाव्यमिति। अत उभयेषां परस्पराकाङ्क्षावत्वात् मिथस्संबन्धः—प्रायाजानूयाजादिभिरुपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति। अतः प्रजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेतीति सिध्यति। तथा च स्वर्गादिफलभाव्यका यागादिकरणिका प्रयाजादीतिकर्तव्यताका आर्थीभावनेति बोधः। छात्राणां सुखेनावबोधाय पट्टिका प्रदर्श्यते—




**अनुवाद**—यह आर्थीभावना भी अंशत्रय अर्थात् साध्य, साधन और इतिकर्त्तव्यता की आकांक्षा करती है। [ इस आकांक्षात्रय का स्वरूप इस प्रकार है—( १ ) क्या करे? ( २ ) किससे करे? एवं ( ३ ) कैसे करे? इन तीनों में से ( i ) जब साध्यरूप की आकांक्षा होती है तब 'स्वर्गादिरूप फल' का साध्यरूप में अन्वय होता है। ( ii ) साधन की आकांक्षा होने पर यागादि कर्म का साधन या करण रूप में अन्वय होता है। ( iii ) इतिकर्त्तव्यता की आकांक्षा होने पर प्रयाजादि जो अङ्ग ( जात ) समुदाय है अर्थात् क्रिया समूह है वे इतिकर्त्तव्यता रूप में अन्वित होते हैं।

## अर्थालोकलोचन

इससे पूर्व यह विवेचना की गई है कि भावयितः पुरुष में रहने वाला वह यत्न-विशेष आर्थीभावना कहा जाता है, जिससे फलभावना पैदा होती है। उस आर्थीभावना के तीन अंश होते हैं—'किं भावयेत्', केन भावयेत्' कथं भावयेत्, अर्थात् साध्य, साधन एवं इति-कर्त्तव्यता ( प्रक्रिया )। स्वर्ग आदि से साध्याकांक्षा पूरी होती है, याग से साधनविषयक एवं प्रयाज आदि रूप अङ्गों से 'इतिकर्त्तव्यता' की आकांक्षा पूरी होती है।

आर्थीभावना

| साध्यम् | साधनम् | इतिकर्त्तव्यता |
|---|---|---|
| (किं भावयेत् ?) = कुर्यात्-जनयेत्-[1]स्वर्गादिफलं भावयेत् | (केन भावयेत् ?) यागादिना भावयेत् | (कथं भावयेत् ?) प्रयाजाद्यङ्गजातोपकृतेन यागादिना भावयेत् |

भाव यह है कि-आर्थीभावना से ही देवदत्तादि की प्रवृत्ति यागादि में होती है इसके अनन्तर स्वर्गादिरूप फल की प्राप्ति होती है। वस्तुतः स्वर्ग की उत्पत्ति यागजन्य नहीं है क्योंकि स्वर्ग की विद्यमानता पहले से ही है अपितु याग सम्पादन द्वारा यज्ञकर्त्ता अपने इष्ट स्वर्ग को प्राप्त करता है। अतः आलोक टीका में कहा गया है—'स्वर्गकामशब्दस्य स्वर्गे लक्षणाङ्गीकारात् न दोषः'।

साध्य स्वर्ग का साधन यागानुष्ठान है यह पहले कहा गया है। 'यजेत स्वर्गकामः' आदि विधिवाक्यों से विदित होता है कि यागादि से स्वर्गप्राप्ति होती है अतः साध्य स्वर्ग का याग साधन माना गया है। यहाँ एक प्रश्न उपस्थित होता है। क्या यागानुष्ठान के अनन्तर, 'फलायोगव्यवच्छिन्नं करणम्'' ( अर्थात् साधन को उस फल के, जिसे वह उत्पन्न करता है, ठीक पूर्ववर्ती होना चाहिये, ) इस सिद्धान्तानुसार यज्ञकर्त्ता को तुरन्त फल मिल जाता है ? या क्रिया एवं फल प्राप्ति में व्यवधान होता है। मीमांसक इस समस्या का समाधान 'अपूर्व' के द्वारा देता है। मीमांसासिद्धान्त के अनुसार यागादि क्रिया के सम्पन्न हो जाने पर यजमान में 'अपूर्व' नामक गुण विशेष की उत्पत्ति होती है और मृत्यु के बाद उसी अपूर्व के बल से उसे स्वर्ग प्राप्ति होती है।[2]

साध्य एवं साधन सम्बन्धित चर्चा के अनन्तर आकांक्षा होती है कि साध्य की सिद्धि किस प्रकार करे। इसे ही 'इतिकर्त्तव्यताकांक्षा' कहा गया है। किस प्रकार करे ? कथं भावयेत् ?—का समाधान है—'प्रयाजादि अंगसमुदाय द्वारा स्वर्ग की प्राप्ति करे।

१. 'दुःसाध्यात्मकस्य यागस्य ईप्सिततमस्वरूपकर्मत्वायोगात्, स्वर्गस्य तु आनन्दात्मकत्वेन ईप्सिततमतया कर्मत्वेन अन्वययोग्यत्वात्'। —**मीमांसान्यायप्रकाशः।**

२. 'यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः। तं गुणविशेषं अपूर्वमिति मीमांसका वदन्ति। प्रारब्धकर्म इति वेदान्तिनः। धर्माधर्मौ इति नैयायिकाः। अदृष्टम् इति वैशेषिकाः। पुण्यपापे इति पौराणिकाः।'—न्यायकोश, पृ० ६०.

भाव यह है कि—'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति', स्वाहाकारं यजति' इत्यादि वाक्यों द्वारा विहित पञ्च यागों को प्रयाज संज्ञा दी गई है। ये पाँचों याग दर्शपूर्णमास प्रकरण में पढ़े गये हैं परन्तु इनके अनुष्ठान से क्या फलप्राप्ति होगी? यह नहीं बताया गया है। 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामो' इस विधिवाक्य से 'दर्श' और 'पूर्णमास' याग का विधान स्वर्गप्राप्ति हेतु है। यह अङ्गीयाग अर्थात् प्रधान याग माना जाता है एवं इसमें स्वर्गरूपी फल का भी स्पष्टतः उल्लेख है। 'प्रयाजाः कर्त्तव्याः' इस वाक्य द्वारा प्रयाजादि का भी अनुष्ठान विहित है। और दर्शपूर्णमास प्रकरण में पठित होने के कारण ये प्रधानयाग के अङ्ग हैं। अङ्गसहित ही अङ्गी फलवान माना जाता हैं अतः आर्थी भावना में इस बात की आकांक्षा होती है कि याग से फल किस प्रकार प्राप्त किया जाय? इसी प्रकार प्रयाजानुयाजादि भी फल साकांक्ष होने पर दर्शपूर्णमास के द्वारा ही स्वर्गफल प्राप्ति में सहायक माने जाते हैं। अतः 'इतिकर्त्तव्यताकांक्षा' होने पर प्रयाजादि अङ्गसमूह द्वारा अनुष्ठान करने की बात कही गई है।

## वेदलक्षणविचारः

अथ को वेद इति चेदुच्यते—अपौरुषेयं वाक्यं वेदः। स च विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पञ्चविधः।

## अर्थालोकः

एवं तावत् विचारशास्त्रारम्भस्य स्वाध्यायाध्ययनविधिप्रयुक्तत्वम् धर्मलक्षणम् तत्प्रसङ्गेन भावनाद्वयस्वरूपञ्च समुपपाद्य स्वाध्यायविधिपरिगृहीतस्य वेदस्य विध्यर्थवादादिरूपेण विभागं प्रदर्शयिष्यन् वेदस्वरूपं पृच्छति—**अथेति**। उत्तरयति—**अपौरुषेयमिति**। अपौरुषेयत्वे प्रमाणञ्च पौरुषेयत्वाभाव एव। तदिदं प्राङ् निरूपितम्। **वेद** इति लक्ष्यनिर्देशः। वाक्यत्वं रघुवंशादिष्वप्यस्तीति तद्वारणाय अपौरुषेयमिति। अपौरुषेयत्वमात्रोक्तौ ब्रह्मण्यतिव्याप्तिस्स्यात्। अतः वाक्यमिति। तथाचापौरुषेयत्वे सति वाक्यत्वं वेदस्य लक्षणं सम्पन्नम्। तं विभजते—**स चेति**। पञ्चानां विधानां निरूपणेन ग्रन्थस्यास्य समाप्तिरपि भविष्यतीति बोध्यम्।

**अनुवाद**—'वेद क्या है'? यह प्रश्न होने पर, उत्तर देते हैं कि 'अपौरुषेय वाक्य' को वेद कहते है। वेद के पाँच भेद हैं—विधि, मन्त्र, नामधेय, निषेध और अर्थवाद।

## अर्थालोकलोचन

वेदापौरुषेयत्व सम्बन्धी विचार प्रस्तावना में द्रष्टव्य है।

## विधिमीमांसा

तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते। यथा—'अग्नि-

होत्रं जुहुयात्स्वर्गकामः' इति विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः ।

### अर्थालोकः

सर्वे वेदविभागा विधिमूलकाः । विधिमुपजीव्यैव मन्त्रादीनां प्रवृत्तिः । विधिरहितस्य मन्त्रस्य वार्थवादस्य वा नामधेयनिषेधयोर्वा न स्वरूपलाभ इति प्रथमं विधिरूपं वेदविभागं लक्षयति—**तत्रेति** । तत्र-पञ्चसु प्रकारेषु मध्ये । **अज्ञातेति** । अज्ञातश्चासावर्थश्चाज्ञातार्थः अप्राप्तार्थः तस्य ज्ञापको बोधको यो वेदभागः वेदस्यांशः स विधिरित्यर्थः । अज्ञातार्थज्ञापकत्वं विधेर्लक्षणं सम्पन्नम् । तदिदं विशदयति—**स चेत्यादिना** । सः विधिरूपो वेदभाग इत्यर्थः । अज्ञातज्ञापनमात्रेण विधिः पुरुषं प्रवर्तयितुं न समर्थः । अतो लक्षणे किञ्चित् समावेशयति—**तादृशेत्यादिना** । प्रयोजनवत्वे सत्यप्राप्तप्रापकत्वं विधेर्लक्षणं पर्यवस्यति । प्रयोजनमस्यास्तीति प्रयोजनवान् प्रयोजनवांश्चासावर्थश्च प्रयोजनवदर्थः, तादृशश्चासौ प्रयोजनवदर्थश्च तादृशप्रयोजनवदर्थः तस्य विधानेन । तादृशश्च कीदृशः ? यश्च प्रमाणान्तरेणाप्राप्तः । ईदृशमर्थं यो विधत्ते स विधिः । अर्थात्–प्रमाणान्तरेणाप्राप्तः प्रयोजनवांश्च योऽर्थः तादृशार्थविधानेनेति । एवं रूपस्य विधेः परिणामं निर्दिशति—**अर्थवानिति** । प्रयोजनवानित्यर्थः । प्रमाणान्तरेणाप्राप्तं प्रयोजनवन्तश्चार्थं विदधानो विधिः स्वयं प्रयोजनवान् भवतीति यावत् । अत्रोदाहरणं दर्शयति—**यथेति** । 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति अधिकारविधिरयम्, 'अग्निहोत्रं जुहोति' इति पृथगुत्पत्तिविधेस्सत्वात् । अग्निहोत्रमिति कर्मणो होमस्य नामधेयम् । स्वर्गमुद्दिश्याग्निहोत्रसंज्ञको होमोऽनेन विधिना विधीयते । विधिलक्षणं सङ्गमयति—**मानान्तरेणेति** । प्रकृतवाक्यं परित्यज्येतरप्रमाणेनेत्यर्थः । अप्राप्तम्—अज्ञातम् अग्निहोत्रहोमे कृते स्वर्गो भवतीत्यज्ञातमित्यर्थः । स्वर्गः प्रयोजनं यस्य सः स्वर्गप्रयोजनवान् स चासौ होमश्च तम् होमं विधत्त इत्यर्थः । अत्र निष्पन्नं बोधं दर्शयति—**अग्निहोत्रेति** । अप्राप्तविधिस्थले आख्यातार्थभावनायां कर्म करणत्वेनान्वेतीति नियमं दर्शयितुम्—**अग्निहोत्रहोमेनेत्युक्तम्** । 'जुहुयात्' इत्यत्र धात्वर्थो होमः आख्यातार्थो भावना । अस्य विवरणे क्रियमाणे धात्वर्थस्य करणत्वे विवक्षिते तृतीयायां सत्यां होमेन भावयेत् इति किं भावयेत् **स्वर्गम् इति च सिध्यति** । तथाच-अग्निहोत्रहोमेन स्वर्गं भावयेदिति बोधः । **अयमपूर्वविधिरिति व्यवह्रियते** ।

**अनुवाद**—[ वेद के इन पाँचों भेदों में ] अज्ञात अर्थ को अवबोधित करानेवाले वेद भाग को विधि कहते हैं । वह विधि—जो अर्थ दूसरे प्रमाण [प्रमाणान्तर] से ज्ञात नहीं

हैं उसका विधान करती है इसलिये प्रमाणान्तर से अज्ञात एवं प्रयोजनयुत अर्थ के विधान से ही विधि की सार्थकता होती है। उदाहरणार्थ--'अग्निहोत्रं जुहुयात्स्वर्गकामः', अर्थात् स्वर्गरूपी फल प्राप्ति करने के लिये अग्निहोत्र करना चाहिए—यह विधिवाक्य, अन्य प्रमाण से [ मानान्तरेण ] अप्राप्त स्वर्ग फलयुत होम का विधान करता है। इस विधि-वाक्य का अर्थावबोध 'अग्निहोत्रहोमेन स्वर्गं भावयेत्' अर्थात् अग्निहोत्र होम से स्वर्ग का उत्पादन करे, इस प्रकार होता है।

## अर्थालोकलोचन

वेद सभी विभाग विधि मूलक हैं। विधि के आश्रय से ही मन्त्र, नामधेय, निषेध, एवं अर्थवाद की सार्थकता है। विधि के विना इनका स्वरूप स्पष्ट नहीं होता, अतः ग्रन्थकार विधिरूप वेद के प्रथम विभाग का निरूपण कर रहे हैं। आज्ञात अर्थ के ज्ञापक होने से ही उसे विधि कहा जाता है परन्तु अज्ञात ज्ञापन मात्र से ही विधि पुरुष को यागादि कर्म में प्रवृत्त करने में समर्थ नहीं होती, अपि तु उस अज्ञात अर्थ को किसी प्रयोजन की भी सिद्धि करनी चाहिए। इस प्रकार वह विधिवाक्य स्वयं भी प्रयोजनवान् हो जाता है—अत एव कहा है—'प्रमाणान्तरेणाप्राप्तं प्रयोजनवन्तश्चार्थं विदधानो विधिः स्वयं प्रयोजनवान् भवतीति'—[ द्रष्टव्या आलोकटीका ]

'अग्निहोत्रं जुहोति' इस उत्पत्तिविधि के अन्यत्र पठित होने से 'अग्निहोत्रं जुहुयात् स्वर्गकामः' को अधिकार विधि माना जाता है। होम कर्म का नामधेय 'अग्निहोत्र' है। इस विधि द्वारा स्वर्ग को उद्देश्यकरके 'अग्निहोत्रसंज्ञक'[1] होम का विधान किया गया है।

विधि के लक्षण की संगति प्रकृत उदाहरण में स्पष्ट करते हुए कहा गया है—'माना-न्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते'—भाव यह है कि अग्निहोत्र होम करने से स्वर्ग लाभ होता है यह पहले अज्ञात है परन्तु विधिवाक्य में स्वर्ग प्रयोजनवान् होम का विधान किया गया है अतः इस विधान के कारण अज्ञात अर्थ का ज्ञापक विधि वाक्य हो गया। प्रसंग क्रम से यह भी स्पष्ट किया गया है कि विधि में कर्म का ही करण रूप से अन्वय करके 'अग्निहोत्रहोमेन स्वर्गं भावयेदिति' अर्थात् अग्निहोत्र होम से स्वर्ग का उत्पादन करे' यह अर्थ समझना चाहिये। 'जुहुयात्' इस पद में 'धात्वर्थ' होम है एवं आख्यातार्थ 'भावना' है। अतः करण में तृतीया की विवक्षा से 'होमेन भावयेत्' यह वाक्यरूप होगा।[2] एवं 'किं भावयेत्'? का उत्तर 'स्वर्ग' होगा। अतएव इसे 'अपूर्वविधि' कहते हैं।

---

१. द्रष्टव्य—'यावज्जीवमग्निहोत्रं जुहोति'—'
अग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेन अनुष्ठेयस्य कर्मणः 'अग्निहोत्रम्' इति यौगिकं नामधेयम्।—जैमिनीयन्यायमालाविस्तर, पृ० ४५.

२. 'अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करणत्वेऽपि ततः पूर्वं साध्यत्वाकारं वक्तुम् 'अग्निहोत्रम्' इति द्वितीयाया युक्तत्वात्।'
—जैमिनीयन्यायमालाविस्तर, पृ० ४५-४६.

## गुणविधिः

यत्र कर्म मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते। यथा—'दध्ना जुहोति' इत्यत्र होमस्य 'अग्निहोत्रं जुहुयात्' इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं 'दध्ना होमं भावयेत्' इति।

## अर्थालोकः

विधेः प्रकारान्तरमप्यस्तीति निरूपयति—**यत्रेति**। **कर्म**-धात्वर्थः, **माना-न्तरेण**-उत्पत्तिविधिना, **प्राप्तं**-ज्ञातम् **तत्र तदुद्देशेन**—प्राप्तकर्मोद्देशेन **गुण-मात्रम्**-उपसर्जनभूतं द्रव्यादिकमित्यर्थः। उदाहरति-**दध्नेति**। **जुहोतीति** लेडन्तम् जुहुयादित्यर्थः। अत्र विधिः स्वसन्निकृष्टं धात्वर्थं न विधत्ते इत्याह—**प्राप्त-त्वादिति**। अप्राप्तप्रापको विधिरिति पूर्वमभिहितत्वात्। अत्र होमस्य 'अग्निहोत्रं जुहोती'ति वाक्यान्तरेण प्राप्तत्वात्स न विधीयत इत्यर्थः। ननु किमुद्दिश्य किं विधीयत इत्यत्राह—**होमोद्देशेनेति**। होमस्य प्राप्तत्वात्तमुद्दिश्येत्यर्थः। प्राप्तस्य होमस्यानुवादमात्रमत्र क्रियते। विधेयश्च दधि। एवमुद्देश्यविधेयभावे ज्ञाते निष्पद्यमानं बोधं दर्शयति—**दध्नेति**। सर्वत्र यद्विधेयं तद्भावनायां करणत्वेन, यदुद्देश्यं तत्कर्मत्वेन चान्वेतीति साधारण्येनावगन्तव्यम्। अयमेव गुणविधिः कथ्यते।

**अनुवादः**—जहाँ पर यागादि कर्म का विधान किसी अन्य प्रमाण से सिद्ध हो वहाँ पर उस विधि कर्म को उद्देश करके गुणमात्र [ अर्थात् अङ्गभूत द्रव्य या देवता ] का विधान होता है—उदाहरणार्थ—'दध्ना जुहोति' इस वाक्य में होम का विधान, अग्निहोत्रं जुहुयात्.' इस विधि से सिद्ध है अतः होम को उद्देश करके केवल मात्र दधि ( गुण ) का विधान हुआ है। 'दध्ना जुहोति' वाक्य से दधि से हवन करे, यह बोध होता है।

## अर्थालोकलोचन

अपूर्वविधि के निरूपण के अनन्तर गुणविधि के स्वरूप को बोधगम्य बनाने के लिये 'दध्ना जुहोति' का उदाहरण प्रस्तुत किया गया है। कभी-कभी विधिवाक्यों में केवल उस द्रव्य का विधान रहता है जिससे यज्ञानुष्ठान करना है और 'कर्म' (धात्वर्थः—यज्ञकर्म ) का विधान किसी अन्य वाक्य के द्वारा होता है। 'दध्ना जुहोति' इस विधि-वाक्य में केवल 'दधि' मात्र का उल्लेख है जिससे यज्ञ करना है परन्तु मुख्य 'होम' 'अग्नि होत्रं जुहोति' वाक्य द्वारा विहित है। इस प्रसङ्ग में यह भी ध्यातव्य है कि जो 'विधेय' होता है उसका ( भावना में ) करण रूप में एवं 'उद्देश्य' का कर्म रूप में अन्वय होता है। अतः 'दध्ना जुहोति' का वाक्यार्थ बोध 'दध्ना होमं भावयेत्' हुआ। यहाँ होम क्रिया का साधन 'दधि' हैं अतएव 'दधि' रूप गौण वस्तु विधायक वाक्य होने से 'दध्ना जुहोति' को गुणविधि माना जाता है।

## विशिष्टविधिः

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते। यथा 'सोमेन यजेत' इत्यत्र सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेत् इति वाक्यार्थबोधः।

## अर्थालोकः

विधेरन्यः प्रकारोऽप्यस्तीति दर्शयति—**यत्र त्विति**। उभयम्-उपसर्जनं प्रधानञ्च। **अप्राप्तम्** पृथक्पृथग्वाक्येनाविहितम्। **विशिष्टम्** उपसर्जनविशिष्टं प्रधानमित्यर्थः। उदाहरति—**सोमेनेति**। सोमशब्दः क्षीरिण्यां लतायां रूढः। स सोमो वाक्यान्तरेणाविहितः। यजेतपदं नानुवादकम् वाक्यान्तरेणाप्राप्तत्वात्। अतश्चानेन वाक्येन सोमोऽपि विधातव्यः यागोऽपि। विधिप्रत्यय एकः। एकेन द्वौ कथं विधीयेयाताम्? अत आह—**सोमेति**। सोमविशिष्टयागस्य विधाने विधेयमेकं भवतीति न विधिप्रत्ययस्यैकस्यावृत्त्यादिदोष इति भावः। विशिष्ट-विधौ विद्यमानं कञ्चन विशेषमाह—**सोमपद इति**। 'सोमेन' इत्यत्र प्रकृतौ, न तु प्रत्यय इत्यर्थः। **मत्वर्थलक्षणया** सोमशब्दस्य सोमवति लक्षणया। निष्पन्नं वाक्यार्थं प्रदर्शयति—**सोमवतेत्यादि**। 'सोमेन यजेत' इत्युत्पत्तिवाक्यम्। उत्पत्तिवाक्ये च धात्वर्थस्य कर्मणः करणत्वेन भावनायामन्वयनियमः। तेन भावनायाः करणाकाङ्क्षायां शान्तायां सोमस्य तत्र करणत्वेनान्वयो न भवति। अन्वयानुपपत्त्या च लक्षणां स्वीकृत्य सोमवता यागेनेत्यन्वयस्तस्य सूपपन्नः। ननु मत्वर्थलक्षणां विनैव यागसामानाधिकरण्येनैव सोमस्यान्वयोऽस्तु—सोमेन यागेनेष्टं भावयेदिति चेन्न; सोमयागयोस्सामानाधिकरण्येनान्वये सत्युभयो-र्निरपेक्षतया विधानं स्यात्। विधायकप्रत्ययस्त्वेकः। स एकवारमेकं विधाय पुनरन्यं विदध्यात्। अन्यस्य विधानाय विधायकप्रत्ययस्यावृत्तिस्स्यात्—सोमनेष्टं भावयेत् यागेनेष्टं भावयेदिति। तथा सति वाक्यभेदः। स च दोषाय भवेत्। न च त्वयापि लक्षणादोषस्स्वीक्रियत एव, तथा वाक्यभेदोऽपि मन्मते दोषो भवत्विति वाच्यम्। लक्षणा हि पददोषः, वाक्यभेदस्तु वाक्य-दोषः। पदवाक्ययोर्मध्ये 'गुणे त्वन्याय्यकल्पना' इति न्यायेन पद एव दोष-कल्पना समुचिता न वाक्ये। किञ्च भावनायाः करणाकाङ्क्षायां समानपदोपात्त-धात्वर्थेनैव शान्तायां भिन्नपदेनोपात्तस्य सोमस्यान्वयोऽनुपपन्न एव। एकस्य साध्यस्यैकं भवति साधनम्, न द्वे भवतः। अतस्सामानाधिकरण्येन सोम-यागयोरन्वयानुपपत्त्या लक्षणा स्वीकर्तव्यैवेति सिद्धम्।

**अनुवाद**—जहाँ पर गुण एवं कर्म [उभयम्=गुण एवं कर्म] दोनों प्रमाणान्तर से [प्राप्त नहीं रहते हैं वहाँ [ विधि द्वारा ] दोनों [ गुण विशिष्ट कर्म ] का विधान होता है—जैसे 'सोमेन यजेत' इस विधि में सोम [ गुण ], और याग [ कर्म ] दोनों अप्राप्त ( = असिद्ध ) है अतः सोमविशिष्ट याग का विधान किया गया है। यहाँ सोमपद में **मत्वर्थलक्षणा** ( सोम की सोमवत्[1] में लक्षणा ) स्वीकार कर 'सोमेन' का 'सोमवता यागेनेष्टं भावयेत्' अर्थात् सोमयुक्त याग से स्वर्ग का सम्पादन करे--यह वाक्यार्थ होगा।

## अर्थालोकलोचन

अपूर्वविधि एवं गुणविधि का स्वरूप स्पष्ट करके प्रस्तुत प्रसङ्ग में ग्रन्थकार ने 'सोमेन यजेत' का उदाहरण देकर विशिष्ट विधि[2] की व्याख्या की है।

'सोमेन यजेत' अन्यत्र विहित किसी भी यज्ञ कर्म में निर्दिष्ट नहीं है। अतः इसी वाक्य से [ सोम ] गुण एवं होम कर्म दोनों का ही विधान मानना होगा, परन्तु यह सम्भव कैसे है ? सोमेन यजेत का वाक्यार्थबोध 'सोमवता = सोमविशिष्टेन यागेन इष्टं भावयेत् ?' मानने पर समस्या का समाधान सम्भव है। क्योंकि 'सोमेन यागेन इष्टं भावयेत्' से निर्दिष्ट अर्थ की प्रतीति नहीं हो सकती। सोमेन का अर्थ 'सोमवता' स्वीकार करने के लिए 'लक्षणा' का आश्रय लेना होगा। यह सर्वमान्य सिद्धान्त है कि जब शब्द की अभिधा शक्ति से उपयुक्त अर्थ का ज्ञान नहीं होता तब लक्षणा को स्वीकार करना पड़ता है। 'सोमेनं यजेत' में सोमवता अर्थ के लिये 'मत्वर्थलक्षणा'[3] माननी पड़ती है। शास्त्रीय शब्दावली में इसे 'उपादानलक्षणा या अजहल्लक्षणा' कहते हैं। अतः याग एवं सोम दोनों का विधान सम्भव है।

यहाँ यह शङ्का हो सकती है कि 'मत्वर्थलक्षणा' के बिना भी 'सोमेन यजेत' का अर्थ 'सोमेन यागेन इष्टं भावयेत्' किया जा सकता है, क्योंकि याग के साथ सोम का अन्वय हो जायगा परन्तु यह कहना ठीक नहीं है; क्योंकि इस स्थिति में 'सोमेन इष्टं भावयेत्' एवं 'यागेन इष्टं भावयेत्' ये दो परस्पर निरपेक्ष वाक्य मानने पड़ेंगे और वाक्यभेद नामक दोष भी होगा। यद्यपि लक्षणा स्वीकार करने से सिद्धान्त पक्ष में भी दोष की उद्भावना की जा सकती है तथापि लक्षणा में पददोष है और वाक्यभेद में वाक्यदोष, अतः कल्पनालाघव के कारण लक्षणा का आश्रय करना ही श्रेयस्कर है।

## वाक्यभेददोषपरिहारः

न चोभयविधाने वाक्यभेदः, प्रत्येकमुभयस्याविधानात्, किन्तु विशिष्टस्यैकस्यैव विधानात्।

---

१. अर्शादिभ्योऽच् ( पाणिनि—५ २.१२७. ) सूत्र से 'सोमः अस्ति अस्मिन्' इस अर्थ में अच् प्रत्यय।

२. विशिष्टस्य गुणविशिष्टस्य इत्यर्थः यज्ञादेः कर्मणः विधिः।

३. मतोः अर्थः यस्याः, ईदृशी च असौ लक्षणा च।

## अर्थालोकः

ननु विशिष्टविधावपि द्वयोर्विधेयतास्त्येव, कथं वाक्यभेदो न भवति? इत्याशंक्य परिहरति—**न चेत्यादिना**। प्रत्येकम् पृथक्पृथक् सोमयागयोर्विधानाभावादित्यर्थः। यत्र विधेर्व्यापारः उभयत्र पृथक्पृथक् संभवति, तत्र वाक्यभेदो भवेत्। अत्र तु न तथेत्याह—**किन्त्विति**। **विशिष्टस्यैव** सोमविशिष्टयागस्यैव। विशेष्यविशेषणभावेन सोमयागयोरेकत्वमेव सिध्यति। 'शुक्लवाससमानय' इत्युक्ते न कोऽपि वस्त्रं पुरुषञ्च पृथगानयेत्। पुरुष आनीतेऽर्थाद्वस्त्रस्याप्यानयनं सिध्यति, तद्वत् सोमविशिष्टयागस्य विधानेऽर्थात्सोमस्यापि विधानमार्थिकं सम्पत्स्यते, न श्रूयमाणेन विधिना तद्विधातव्यम् इति न वाक्यभेदः।

**अनुवाद**—यहाँ यह कहना भी उचित नहीं है कि गुण और कर्म दोनों के विधान से 'वाक्यभेद' नामक दोष होगा, क्योंकि [ एक ही विधिवाक्य से सोम और याग ] दोनों का पृथक् पृथक् विधान नहीं हुआ है किन्तु विशेषणयुक्त [ गुण विशिष्ट कर्मविधि ] क्रियामात्र का विधान हुआ है।

## अर्थालोकलोचन

इससे पूर्व यह स्पष्ट हो चुका है कि 'सोमेन यजेत' इस विशिष्ट विधि द्वारा याग एवं द्रव्य दोनों का ही विधान होता है। दूसरे शब्दों में यह भी कहा जा सकता है कि इस वाक्य से दो भिन्न वाक्यों का आशय प्रकट हो रहा है—(i) सोमेन यागं भावयेत् एवं (ii) यागेन इष्टं भावयेत्—इस प्रकार वाक्यभेद [ वाक्यभेदः = भिन्ने वाक्ये इत्यर्थः ] की समस्या आ जायेगी। प्रस्तुत अवतरण में इसी समस्या का समाधान किया जा रहा है। सिद्धान्त पक्ष का आशय यह है कि--वाक्यभेद नामक दोष वहाँ मानना चाहिए यहाँ एक ही वाक्य द्वारा दो तरह का विधान किया जा रहा हो। 'सोमेन यजेत' उदाहरण में दो भिन्न वस्तुओं का विधान नही है क्योंकि स्पष्टतः विधान तो केवल सोम विशेषण युत याग का ही है। अतः दो विधायक वाक्य नहीं स्वीकार करने पड़ेंगे। 'श्वेतवस्त्रधारी पुरुष' को ले आओ इस लौकिक उदाहरण में कोई विवेकशील प्राणी श्वेत वस्त्र एवं पुरुष को अलग-अलग नहीं लाता। उसी प्रकार सोमविशिष्ट याग के विधान से सोम का भी विधान स्वतः सिद्ध है। अतः वाक्यभेद दोष नहीं है।

## गुणविधित्वाशङ्कापरिहारः

न च—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विधिना प्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्तु—'सोमेन यागं भावयेत्' इति, किं मत्वर्थलक्षणया? इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वासंभवात्।

## अर्थालोकः

एतावत्पर्यन्तं 'सोमेन यजेत' इत्यस्योत्पत्तिविधित्वं स्वीकृत्य पूर्वोत्तरपक्षौ प्रदर्शितौ। सम्प्रति तस्य गुणविधित्वमाशङ्क्य परिहरति—**न चेत्यादिना।** न चेत्यस्य वाच्यमित्यनेनान्वयः। यत्र कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते इति गुणविधेस्स्वरूपं पूर्वमुक्तम्। तदनुसारेण प्रकृतसोमवाक्यस्य गुणविधित्वमुच्यते यदि, तर्हि कर्मणः प्राप्तिर्मानान्तरेण वक्तव्या। तदेव मानान्तरं पूर्वपक्षी गुणविधित्ववादी प्रदर्शयति—**ज्योतिष्टोमेनेति।** ज्योतिष्टोमपदं कर्मनामधेयम्। ज्योतिष्टोमनामको यागः स्वर्गोद्देशेन विधीयते। अनेन वाक्येन प्राप्तं यागमुद्दिश्य सोमवाक्येन सोमद्रव्यं विधीयते 'दध्ना जुहोति' इतिवत्। एवं विधाने सति मत्वर्थलक्षणां विनैव बोधो भवतीति दर्शयति—**सोमेन यागं भावयेदिति। किं मत्वर्थलक्षणया** मत्वर्थलक्षणास्वीकारे किं प्रयोजनमित्यर्थः। अतो गुणविधिरेवायमिति वाच्यम् इति, न च वाच्यमिति संबन्धः। अत्र हेतुमाह—**तस्येत्यादिना।** तस्य ज्योतिष्टोमवाक्यस्य। **अधिकारविधित्वेन** उत्पन्नस्य कर्मणः फलसंबन्धबोधको विधिरधिकारविधिः तत्त्वेनेत्यर्थः। उत्पत्तिविधित्वासंभवे हेतुरयम्। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। ज्योतिष्टोमवाक्ये च कर्मस्वरूपमात्रबोधकत्वं नास्ति, फलसंबन्धोऽपि बोध्यते। 'सोमेन यजेत' इत्यत्र सोमविशिष्टकर्मस्वरूपमात्रबोधकत्वमस्तीति गुणविधिरयं न संभवितुमर्हतीति भावः।

**अनुवाद**—यह कहना उचित नहीं है कि—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि विधिवाक्य से प्राप्त याग को उद्देश्य करके सोम रूप गुण का विधान मान लिया जाय, तब 'सोमेन यजेत' का अर्थ 'सोमेन यागं भावयेत्' होगा अर्थात् सोम द्वारा याग की भावना, करें और [ इस स्थिति में ] सोम पद में मत्वर्थलक्षणा स्वीकार करने से क्या लाभ होगा ? [इसका उत्तर यह है ] 'ज्योतिष्टोमेन—' यह विधि अधिकार विधि है[1] अतः यह उत्पत्तिविधि[2] नहीं हो सकती।

## अर्थालोकलोचन

अब तक 'सोमेन यजेत' को उत्पत्तिविधि मानकर पूर्वपक्ष एवं उत्तरपक्ष का निरूपण

१. अधिकारः फलसम्बन्धः तद्बोधको विधिः अधिकारविधिः यथा—अग्निहोत्रं जुहुयात् स्वर्गकामः, ज्योतिष्टोमेन स्वर्गकामो यजेत।

२. उत्पत्तिः साधनस्वरूपं तद्बोधको विधिः उत्पत्तिविधिः। यथा—अग्निहोत्रं जुहोति। सोमेन यजेत।

द्रष्टव्य—'कर्मस्वरूपमात्रबोधकस्यैव विधेरुत्पत्तिविधित्वं व्यवह्रियते। उत्पत्तिविधिविहितस्य कर्मणः फलविशेषेण सह सम्बन्धमात्रमधिकारविधिः करोति॥'

किया गया। प्रस्तुत प्रसंग में 'सोमेन यजेत' को गुणविधि क्यों स्वीकार नहीं किया जा सकता, इस आशंका का समाधान ग्रन्थकार ने किया है।

पूर्वपक्ष का आशय यह है कि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि वाक्य से सोमयाग रूप कर्म प्राप्त है इसलिये 'सोमेन यजेत' वाक्य द्वारा सोमरूप गुण को ही विहित मानना चाहिए। इस प्रकार मत्वर्थ में लक्षणा स्वीकार करने से प्राप्त कल्पना गौरव का भी परिहार हो जायगा एवं 'सोमेन यागं भावयेत्' अर्थात् सोम द्वारा याग की भावना करे, ऐसा वाक्य बोध होगा। परन्तु सिद्धान्त पक्ष इसे स्वीकार नहीं करता, क्योंकि उत्पत्तिविधि से कर्मस्वरूपमात्र का ही ज्ञान होता हैं और अधिकारविधि इससे ( उत्पत्तिविधि ) विहित कर्म के फल विशेष के साथ सम्बन्धमात्र का बोध कराती है। 'ज्योतिष्टोमेन स्वर्गकामः' से यागानुष्ठान में प्रवृत्त पुरुष की फलोपभोगविषयक योग्यता का ज्ञान होता है। अतः यह अधिकारविधि है। उत्पत्तिविधि नहीं हैं। अतएव सोमयागस्वरूप ज्ञान हेतु विशिष्ट विधान अपरिहार्य है।

## ज्योतिष्टोमस्य उभयविधित्वशङ्कानिरासः

ननु 'उद्भिदा यजेत पशुकामः' ( ता० ब्रा० १९. ७. २. ) इत्यस्येव 'ज्योतिष्टोमेन' इत्यस्याप्युत्पत्त्यधिकारविधित्वमस्तु, इति चेत्—न; दृष्टान्ते उत्पत्तिवाक्यान्तराभावेनान्यथानुपपत्त्या तथात्वाश्रयणात्। किं च 'ज्योतिष्टोमेन' इत्यस्योभयविधित्वेऽनेनैव यागः, तस्य फलसंबन्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः। तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम्।

## अर्थालोकः

ननु ज्योत्तिष्टोमवाक्यं कर्मण उत्पत्तिं बोधयत् फलसंबन्धबोधकमप्यस्तु। यथा 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भित्संज्ञको यागो विधीयते पशुफलसंबन्धोऽपि। तथैव ज्योतिष्टोमवाक्येऽप्युत्पत्त्यधिकारविधित्वं स्वीक्रियतामिति शङ्कते—**नन्विति**। परिहरति—**नेति**। **दृष्टान्ते**-उद्भिद्वाक्ये। अत्र कर्मोत्पत्तिवाक्यं पृथङ् न श्रूयते। कर्मणः प्राप्तिं विना केवलं फलसंबन्धो न बोधयितुं शक्यते। उभयविधित्वस्वीकारेण विनास्योपपत्तिर्न भवेदित्याह—अन्यथानुपपत्त्येति। तथात्वाश्रयणात्—उभयविधित्वाश्रयणात्। दार्ष्टान्तिके तु ज्योतिष्टोमवाक्ये नैतादृशानुपपत्तिरस्ति, तत्र 'सोमेन यजेत' इत्यस्योत्पत्तिविधेस्सत्वाज्ज्योतिष्टोमवाक्यं फलसंबन्धमात्रं बोधयतीति भावः। ननु सोमवाक्यस्योत्पत्तिविधित्वे मत्वर्थलक्षणा दोषः, तदपेक्षया ज्योतिष्टोमवाक्यस्योत्पत्त्यधिकारविधित्वस्वीकारस्समुचितः। तदा सोमवाक्यस्य गुणविधित्वेन मत्वर्थलक्षणातो मुक्तिर्भवेदिति ज्योतिष्टोमवाक्यस्यैवोभयविधित्वमुचितमित्याशंक्य परिहरति—

**किञ्चेति** । ज्योतिष्टोमवाक्यस्योभयविधित्वे सोमवाक्यस्य मत्वर्थलक्षणातो मुक्तिरवश्यं भवेत् ज्योतिष्टोमवाक्ये मत्वर्थलक्षणातो महान् दोषो वाक्यभेद इत्याह—**अनेनैवेत्यादिना** । अनेनैव—**ज्योतिष्टोमवाक्येनैव** । यागस्य फलसंबन्धस्य च विधाने वाक्यभेद इत्याह—**सुदृढ इति** ।

## विशेषार्थः

वाक्यभेदो द्विविधः प्रतिपादितो वार्तिककारैः—विध्यावृत्तिकृतः गौरवलक्षणश्चेति । तत्र प्रथमः—

'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः' इत्यादिना प्रदर्शितः । अयं सोमस्य सामानाधिकरण्यान्वयपक्षे निरूपितः । गौरवलक्षणस्तु—

'श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यते' ॥

इत्यनेन प्रदर्शितः । विधेर्व्यापारो गुरुलघुभावेन वाक्येषु दृश्यते । छात्राणां बुद्धिवैशद्याय प्रदर्श्यते । तत्र स्वसमभिव्याहृतधात्वर्थमात्रे पर्यवस्यन् विधेर्व्यापारोऽत्यन्तं लाघवमनुभवति । यथा—'अग्निहोत्रं जुहोति' इति । अत्राग्निहोत्रशब्दस्य नामत्वेन जुहोतिना सामानाधिकरण्यात् अग्निहोत्रहोमे धात्वर्थे केवलं विधिव्यापारः—'अग्निहोत्रहोमेन इष्टं भावयेत्' इति बोधः । अयं प्रथमः प्रकारः । यत्र स्वसमभिव्याहृतधात्वर्थस्य भिन्नपदोपात्तफलसंबन्धार्थं विधेर्व्यापारः तत्र द्वितीयः प्रकारः । यथा—'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति । अत्र धात्वर्थस्य होमस्य 'अग्निहोत्रं जुहोति' इत्यनेन प्राप्तत्वाद् यद्यपि न विधानम्, तथापि रागतः प्राप्तस्य फलस्य क्वाप्यविधेयत्वेन फलसंबन्धसिद्धये विहितस्यापि तस्य विधानमिति पूर्वापेक्षया किञ्चिद्गौरवम् । यत्र स्वसमभिव्याहृतधात्वर्थं विहाय भिन्नपदेन बोधिते पदार्थे विधेर्व्यापारः, तत्र तृतीयविधिप्रकारः । यथा—'दध्ना जुहोति' इति । अत्र धात्वर्थस्यानुवादकोटौ दध्नश्च भिन्नपदोपात्तस्य विधेयकोटौ संनिवेशे पूर्वापेक्षया गौरवमापतति । यत्र धात्वर्थस्यानुवादकोटावपि न संनिवेशः भिन्नपदोपात्तस्य पदार्थस्य विधानेन सह फलसंबन्धोऽपि बोधनीयः, तत्र चतुर्थविधिप्रकारः । यथा—'दध्नेन्द्रियकामस्य जुहुयात्' इति । अत्र होमस्य विध्यनुवादकोटौ न समावेशः, अग्निहोत्रवाक्येन होमस्य विहितत्वात्, इन्द्रियफलस्य पृथगुपादानात् । अर्थादिन्द्रियफलोद्देशेन दध्नो विधानम् । तत्र दध्नः फलसंपादकता विनाव्यापारसंबन्धेनानुपपन्नेति

होम आश्रयत्वेनान्वेति। तथा च प्रकृतहोमाश्रितेन दध्ना इन्द्रियं भावयेदिति बोधः। अतस्तृतीयप्रकारापेक्षयात्र गौरवम्।

यत्र गुणविशिष्टधात्वर्थकरणकभावनाविधानं तत्र पञ्चमः प्रकारः। यथा—'सोमेन यजेत' इति। अत्र सोमविशिष्टयागविधानेन विशेषणविधेरार्थिकत्वं कल्पनीयमिति पूर्वापेक्षया गौरवम्। यत्र च धात्वर्थस्य गुणविशिष्टस्य विधानम्, अपि च फलसंबन्धोऽपि विधिना बोधनीयस्तत्र षष्ठविधिप्रकारः। यथा—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति। अत्र सूर्यदेवताचरुद्रव्यविशिष्टस्य कर्मणो विधानम्, तस्य च फलसंबन्धबोधनमिति विधिव्यापारेऽत्यन्तगौरवम्। एतेषु षट्सु प्रकारेषु ज्योतिष्टोमवाक्यस्योत्पत्तिविधित्वमधिकारविधित्वमित्युभयविधित्वे प्राप्तगौरवलक्षणवाक्यभेदस्वीकारापेक्षया 'सोमेन यजेत' इत्यत्र लक्षणास्वीकार उचितः, लक्षणातो वाक्यभेदस्य जघन्यत्वात्। नन्वस्योत्पत्तिविधित्वे मत्वर्थलक्षणा भवेत् गुणविधित्वे तु ततो मुक्तिस्स्यादित्यत्राह—तद्वरमिति। गौरवलक्षणवाक्यभेदापेक्षया पददोषो मत्वर्थलक्षणा लघीयसीत्यर्थः। अतश्च मत्वर्थलक्षणाघटित एव वाक्यार्थ इति सिद्धम।

**अनुवाद**—यहाँ पुनः संशय होता है कि जैसे 'उद्भिदा यजेत पशुकामः' वाक्य उद्भिद नामक याग का बोधक है उसी प्रकार 'ज्योतिष्टोमेन' को भी उत्पत्ति एवं अधिकारविधि [ दोनों ] माना जा सकता है परन्तु ऐसा [ सम्भव ] नहीं है। 'उद्भिदा यजेत' इस दृष्टान्त में यागस्वरूप का ज्ञान करने वाला कोई अन्य वाक्य नहीं है और [ अन्यथानुपपत्त्या ] अन्य प्रकार से यागस्वरूप ज्ञान सम्भव न होने के कारण इसे उत्पत्ति एवं अधिकारविधि दोनों ही स्वीकार किया गया है। किन्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इस वाक्य से कर्मबोधक उत्पत्तिविधि एवं फलबोधक अधिकारविधि दोनों स्वीकार करने पर एक ही वाक्य से यज्ञ एवं यज्ञफल स्वर्ग दोनों का विधान माना जाय तब [ 'ज्योतिष्टोमेन' वाक्य से याग एवं यागफल के साथ सम्बन्ध भी मानना होगा ] वाक्यभेद अपरिहार्य होगा। अतः [ वाक्यभेद दोष की अपेक्षा ] सोमपद में मत्वर्थलक्षणा स्वीकार करके इस वाक्य द्वारा सोमविशिष्ट याग का ही विधान अच्छा है।

## अर्थालोकलोचन

पूर्वपक्ष का आशय यह है कि 'उद्भिदा[1] यजेत पशुकामः' वाक्य द्वारा उद्भिद् नामक याग एवं 'पशुकामः' पद से फल सम्बन्ध का दोनों का बोध होने से इसे अधिकारविधि एवं उत्पत्तिविधि दोनों ही माना जाता है। इसी तरह 'ज्योतिष्टोमेन स्वर्गकामो

१. (क) 'उद्भिद्यते पशुफलमनेन यागेन' इति निरुक्त्या नामत्वमुद्भित्पदस्य उपपद्यते॥
(ख) तत्र 'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्—

यजेत' को भी अधिकारविधि एवं उत्पत्तिविधि दोनों ही मानना ठीक होगा। इस प्रकार सोमेन यजेत को गुणविधि माना जा सकेगा, जिससे लक्षणा की आवश्यकता नहीं होगी। परन्तु सिद्धान्ती इस बात का अनुमोदन नहीं करता क्योंकि 'उद्भिदा यजेत पशुकाम' के लिये कोई दूसरा उत्पत्तिवाक्य उपलब्ध नहीं होता। यदि ज्योतिष्टोमेन से याग एवं उसका फल दोनों ही ग्रहण किया जायगा तब वाक्यभेद नामक दोष होगा। क्योंकि कहा गया है—

'श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥'[ तन्त्रवार्तिक २. ३. ३ ]

भट्ट कुमारिल का आशय यह है कि—वाक्य में प्रयुक्त शब्द जब श्रोता द्वारा सुने जाते हैं तब श्रोता के मन में अपने-अपने अर्थ का प्रकाशन करके उद्देश्य-विधेय-भाव रूप वाक्यार्थ का बोध कराते हैं। यह शब्दों का 'श्रौतव्यापार' कहा जाता है। परन्तु इस प्रकार के व्यापार से 'नानात्व' [ अर्थात् भिन्न-भिन्न शब्दों का अर्थ पृथक्-पृथक् रूप से ग्रहीत ] होता है अतः 'गौरव' स्वीकार करना पड़ेगा और वाक्यभेद भी इस स्थिति में अवश्यम्भावी होगा। इसके विपरीत, जहाँ इस प्रकार का 'व्यापार-नानात्व' नहीं है वहाँ शब्दों के एक ही उद्देश्य विधेयभाव बोध से वह शब्द अपने द्वारा प्रतिपादित अर्थ के अलावा कहीं अर्थान्तर का भी बोध करा सकता है जो कि विरुद्ध नहीं अर्थात् गौरवदोष युक्त है। यथा—'सोमेन यजेत' में इष्ट फल को उद्देश्य करके सोमविशिष्ट याग विधान का बोध शब्दों द्वारा करने के अनन्तर यहाँ सोम एवं याग का अङ्गाङ्गिभाव अर्थात् आक्षिप्त होता है जो गौरवदोष दूषित नहीं होता।

अतः एक ही विधिवाक्य से दो प्रकार के पृथक्-पृथक् विधान होंगे—प्रथमतः यागस्वरूप निरूपण होगा, दूसरा अधिकार का। अतः यह कथन ठीक नहीं है। यदि यह कहा जाय कि 'सोमेन यजेत' को विशिष्टविधि मानने पर वाक्यभेद [ ( i ) गुण-विधान ( सोम ) ( ii ) उत्पत्तिविधान याग ] होगा, यह भी उचित नहीं है क्योंकि सोम को विशेषण, एवं याग को विशेष्य माना गया है अतः विशेषण-विशेष्यभाव के कारण वाक्यभेद की स्थिति नहीं होगी।[1] 'सोमेन यजेत' में यद्यपि विशिष्ट विधान मानने पर 'मत्वर्थलक्षणा' दोष होता है तथापि वाक्यभेद दोष से लक्षणा दोष हीन है। क्योंकि वाक्यभेद वाक्यदोष है और लक्षणादोष पददोष है। पदवाक्यदोष एवं पददोष में पददोष को ही लाघव के कारण स्वीकार करना उचित है।[2] इसलिये 'ज्योतिष्टोमेन स्वर्गकामो यजेत' को उत्पत्ति एवं अधिकारविधि दोनों मानने से उत्पन्न होनेवाले

१. 'न च सोमेन यजेतेत्यत्रापि कर्मणः स्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम्। विशेषणविधेरार्थिकत्वात्। सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः।
—मीमांसान्यायप्रकाश, पृ० ५८.

२. लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः। पदवाक्यदोषयोर्मध्ये पदे एव दोष-कल्पनाया उचितत्वात्। 'गुणे त्वन्यायकल्पना' (जै० सू० ९.३.१५) इति न्यायात्।
—मीमांसान्यायप्रकाश, पृ० ५९.

वाक्यभेद दोष की अपेक्षा या सोम पद में मत्वर्थलक्षणा स्वीकार कर 'सोमवता—सोम-विशिष्ट याग का विधान श्रेष्ठ है।

## विधिश्चतुर्विधः

विधिश्चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति ।

### अर्थालोकः

एवं विधेस्स्वरूपं तदवान्तरप्रकारांश्च निरूप्य विधिं विभजते—**विधिरिति ।**

**अनुवादः**—विधि के चार भेद हैं—उत्पत्तिविधि, विनियोगविधि, अधिकारविधि एवं प्रयोगविधि ।

### अर्थालोकलोचन

विधि स्वरूप एवं उसके अवान्तर भेदों का निरूपण करके, प्रवृत्त सन्दर्भ में विधि विभाग प्रस्तुत किया गया है। इस प्रसङ्ग में यह ज्ञातव्य है कि इसके पूर्व भी ग्रन्थकार ने तीन प्रकार की विधियों का प्रसङ्गतः, निरूपण किया है। (१) **विधि**—प्रधानविधि अथवा उत्पत्तिविधि, उदाहरण—अग्निहोत्रं जुहुयात् स्वर्गकामः ।

(२) **गुणविधि**—इसे विनियोगविधि भी कहा जाता है। उदाहरण—दध्ना जुहोति ।

(३) **गुणविशिष्ट**—उदाहरण—'सोमेन यजेत' ।

इसके अलावा, मन्त्र स्वरूप विवेचन के प्रसङ्ग में निम्नलिखित प्रभेदों का विवरण मिलता है।

(१) **अपूर्वविधि**—इसे उत्पत्तिविधि कहते हैं। उदाहरण—'यजेत स्वर्गकामः' ।

(२) **नियमविधि**—इसको विनियोग विधि के रूप में समझा जा सकता है। उदाहरण—व्रीहीनवहन्ति ।

(३) **परिसंख्याविधि**—पञ्च पञ्चनखाः भक्ष्याः ।

## उत्पत्तिविधिः

तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । यथा—'अग्निहोत्रं जुहोति' ( मै० सं० १. ८. ६ ) इति । अत्र च विधौ कर्मणः करणत्वेनान्वयः—अग्निहोत्रहोमेनेष्टं भावयेत् इति ।

### अर्थालोकः

**तत्र**-चतुर्णां विधीनां मध्ये । **कर्मेति । कर्मणः**—यागादेर्धात्वर्थस्य स्वरूपमात्रं यजेत जुहुयात् दद्यादिति विधिर्बोधयति स उत्पत्तिविधिरित्यर्थः । मात्रपदेन धात्वर्थेन सहफलादिसंबन्धो व्यावर्त्यते । विधेर्व्यापारः धात्वर्थमात्रे यत्र पर्यवस्यति तत्रोत्पत्तिविधिरिति यावत् । उदाहरति—**अग्निहोत्रमिति ।**

उत्पत्तिवाक्ये भावनायां धात्वर्थान्वयप्रकारं निर्दिशति—अत्र चेति। कर्मणः धात्वर्थस्य, करणत्वेन-करणाकांक्षापूरकत्वेन। सर्वत्र निरुपपदभावनापदमार्थी-भावनाया बोधकमिति वेदितव्यम्। करणत्वेनान्वयानन्तरं सिद्धं वाक्यार्थं प्रदर्शयति—अग्निहोत्रहोमेनेति। अग्निहोत्रवाक्ये इष्टपदाभावेऽपि भावनागत-साध्याकांक्षापूरणाय इष्टपदमध्याहृत्य वाक्यार्थं इति प्रदर्शयति—**इष्टं भावयेदिति।**

## विशेषार्थः

ननु भावनाया आकांक्षात्रयं साध्यं साधनम् इतिकर्तव्यता चेति क्रमेण भवति। तत्र प्रथमतस्साध्याकांक्षा निपतति। तस्यां भावनायास्संन्निहित-त्वेन धात्वर्थ एव साध्यतयान्वेतु—यागं भावयेत् होमं भावयेदिति। किमिति इष्टं भावयेदिति स्वर्गं भावयेदिति इष्टसामान्यस्य तद्विशेषस्य वा तथान्वयः क्रियत इति चेदुच्यते—सत्यं धात्वर्थस्संनिहितः स्वर्गादिश्च व्यवहितः, परं धात्वर्थो न पुरुषार्थः यथा स्वर्गादिः। स्वर्गो मे भवत्विति यथा पुरुषो वाञ्छति न तथा यागो मे भवत्विति। न च 'व्रीहिभिर्यजेत', 'दध्ना जुहोति' इत्यादौ यागं भावयेत् होमं भावयेदिति धात्वर्थस्य साध्यत्वदर्शनात् तत्र तस्य पुरुषार्थत्वम् अत्र चापुरुषार्थत्वमिति कुतो भेद इति वाच्यम्। गुणविधित्वेन उत्पत्तिविधित्वेन चोभयोर्वैलक्षण्यात्। गुणविधौ धात्वर्थः प्राप्तः उत्पत्तिविधौ च सोऽप्राप्तः। प्राप्त-स्यानुवादः अप्राप्तस्य च विधानमिति भेदः। अतश्च यस्मिन्नुत्पत्तिवाक्ये फल-पदं श्रूयते तत्र तस्य साध्यत्वेनान्वयः, यस्मिश्च तन्न श्रूयते तत्रेष्टपदमध्याहृत्य तस्य तत्र तथान्वयः न तु धात्वर्थस्येति बोध्यम्। नित्यकर्मसु 'यावज्जीवमग्नि-होत्रं जुहोति', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादिषु करणे फलाभावः अकरणे च प्रत्यवाय इति रीतिः। तत्रेष्टसाधनत्वज्ञानं विना प्रवृत्त्यनुदयात्कथं तेषां वाक्यानां प्रवर्तकत्वम्? इति चेत्प्रत्यवायपरिहार एव फलमेष्टव्यम्। किन्तु संकल्पावसरे 'यावज्जीवं दर्शपूर्णमासाभ्यां यक्ष्ये' इत्येव निर्देशः, न तु प्रत्यवाय-परिहारार्थं दर्शपूर्णमासाभ्यां यक्ष्य इति। सति प्रत्यवाये तत्परिहारो नित्य-कर्मानुष्ठानेन भवति असति च तस्मिन् तदनुष्ठानं निष्फलमिति चेदिष्टापत्तिः, प्रत्यवायसंभावनया तदनुष्ठाननियमात्। प्रत्यवायसदसद्भावो न प्रत्यक्षगम्यः। अतो नित्यकर्मणामवश्यानुष्ठेयत्वं सिद्धं भवति। एवञ्च प्रारब्धस्य सञ्चितस्य च दुरितवृन्दस्य क्षये सति नित्यकर्मानुष्ठानेनागामिनो दुरितस्याभावेन जीवस्य संसारसंबन्धविलयरूपो मोक्षस्सिध्यति। तदिदमुक्तं भट्टपादैः—

'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इत्यादिना।

**अनुवाद**—यागादि कर्म के स्वरूपमात्र बोधकविधि को उत्पत्तिविधि कहते हैं। जैसे 'अग्निहोत्रं जुहोति' इस विधि में अग्निहोत्र कर्म का करण अर्थात् साधन रूप से अन्वय होता है। [ अतः इस वाक्य से ] 'अग्निहोत्रहोमेनेष्टं भावयेत्' अर्थात् अग्निहोत्र नामक होम से इष्ट का सम्पादन करे, इस अर्थ का बोध होता है।

## अर्थालोकलोचन

भावना के साध्य, साधन एवं इतिकर्त्तव्यता नामक आकांक्षात्रय का निरूपण इससे पूर्व किया गया है। सर्व प्रथम साध्य की आकांक्षा होने पर 'यागं भावयेत्, होमं भावयेत्' रूप धात्वर्थ का ही अन्वय साध्यरूप से होना चाहिए, इष्टं भावयेत्, स्वर्गं भावयेत् आदि रूप में इष्ट सामान्य या इष्ट विशेष का अन्वय उचित नहीं है—इस शङ्का का समाधान यह है कि—यद्यपि धात्वर्थ सन्निहित है एवं स्वर्गादि व्यवहित है तथापि धात्वर्थ स्वर्गादि की तरह पुरुषार्थ में परिगणित नहीं है। पुरुष जिस प्रकार स्वर्ग प्राप्ति की आकांक्षा करता है (यथा—स्वर्गो मे भवतु ) उस प्रकार याग की आकांक्षा नहीं करता। 'व्रीहिभिर्यजेत, दध्ना जुहोति' इत्यदि वाक्यों में 'याग की भावना करे, होम की भावना करे' इत्यादि धात्वर्थ की साध्यत्व रूप में प्राप्ति देखी जाती है अतः पुरुषार्थ एवं अपुरुषार्थ के भेद की कल्पना का प्रयोजन नहीं है, लेकिन यह कथन ठीक नहीं है क्योंकि गुणविधि एवं उत्पत्तिविधि के रूप में भेद स्पष्ट है। गुणविधि में धात्वर्थ प्राप्त है और उत्पत्तिविधि में उसकी प्राप्ति नहीं है। सिद्धान्ततः प्राप्त का अनुवाद किया जाता है और अप्राप्त का विधान। अतः जिस उत्पत्ति-वाक्य में 'फल' निर्दिष्ट होता है वहाँ उसका 'साध्य' रूप में अन्वय होता है और जहाँ निर्दिष्ट नहीं है वहाँ 'इष्ट' पद का अध्याहार करके उस तरह [ 'साध्य' की तरह ] अन्वय होता है, धात्वर्थ का नहीं। नित्यकर्मों के [ 'यावज्जीवमग्निहोत्रं जुहोति', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत] अनुष्ठान करने पर इन वाक्यों में फल निर्दिष्ट न होने पर आपाततः 'फलाभाव' प्रतीत होता है एवं फलाभाव के अभाव में यदि इनका अनुष्ठान न किया जाय तो दोष लगता है। चूँकि इष्टसाधनज्ञान बिना प्रवृत्ति नहीं होगी और इन वाक्यों में प्रवर्तकत्व भी नही होगा अतः प्रत्यवाय परिहार को ही फल रूप में मानना होगा। संक्षेप में, इष्ट के बिना विधिवाक्य, याग में पुरुष का प्रवर्त्तक नहीं हो सकता अतः इष्ट का आक्षेप विधि से होगा।

## यागस्य रूपद्वयम्

ननु यागस्य द्वे रूपे—द्रव्यं, देवता च। तथा च रूपाश्रवणे 'अग्निहोत्रं जुहोति' इति कथमुत्पत्तिविधिः ? अग्निहोत्रशब्दस्य तु 'तत्प्रख्य' न्यायेन ( जै० सू० १.४.४ ) नामधेयत्वात् इति चेत्, न; रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणात् 'दध्ना जुहोति' इत्ययमेवोत्पत्तिविधिः स्यात्। तथा च 'अग्निहोत्रं जुहोति' इति वाक्य-मनर्थकं स्यात्।

## अर्थालोकः

ननु 'कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः' इति लक्षणमयुक्तम् । देवता द्रव्यञ्चेति कर्मणो रूपं भवति । 'अग्निहोत्रं जुहोति' इत्यत्र न द्रव्यं श्रूयते नापि देवता इत्याशङ्क्य परिहरति-नन्वित्यादिना । यागस्येति होमस्याप्युपलक्षणम् । अग्निहोत्रविधायके वाक्ये द्रव्यदेवतयोरनिर्दिष्टत्वेन रूपश्रवणाभावात् न तस्योत्पत्तिविधित्वसंभव इति भावः । ननु अग्नये होत्रमिति चतुर्थीसमासेनाग्निहोत्रपदस्य देवतासमर्पकत्वात्कथं रूपाश्रवणमिति चेदाह—**तत्प्रख्यन्यायेनेति** । तस्य विधित्सितस्य गुणस्य प्रख्यं प्रख्यापकं शास्त्रं तत्प्रख्यम् । यो गुणो विधित्सितः तस्य प्रापकं वाक्यान्तरं यत् तत् तत्प्रख्यम्, तेनैव गुणस्य यदा प्राप्तिः तदास्य नामधेयत्वमेव । अग्निदेवता अग्निहोत्रशब्देन समर्पणीया, सा च 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा' इति मन्त्रेणैव प्राप्यत इत्यग्निहोत्रशब्दो नामधेयमेवेत्यर्थः । अतोऽत्र रूपाभावादग्निहोत्रवाक्यस्य कथमुत्पत्तिविधित्वमिति शङ्का । परिहरति-नेत्यादिना । रूपश्रवणाभावेऽप्यस्यैवोत्पत्तिविधित्वं स्वीकर्तव्यम् । यदि न स्वीक्रियते तत्र दोषमाह—**अन्यथेति** । अग्निहोत्रप्रकरणे 'दध्ना जुहोति', 'पयसा जुहोति' इति रूपवन्ति वाक्यानि श्रूयन्ते । तेषु प्रथमश्रूतत्वाद्दधिवाक्यस्योत्पत्तिविधित्वमापतेत् । तथा सति पयोवाक्येनापि पयोविशिष्टकर्मान्तरविधानं स्यात् दधिवाक्योत्पन्नकर्मण्यनेन न पयो विधातुं शक्यते, उत्पत्तिशिष्टदध्यवरोधात् । अतश्चानेकादृष्टकल्पनादोषः, अग्निहोत्रवाक्यस्यानर्थक्यञ्च भवेत् इत्याह—**तथा चेति** । न केवलमग्निहोत्रवाक्यस्यानर्थक्यम्, 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यधिकारवाक्यमप्यनर्थकं भवेत् । न हीदमधिकारवाक्यं दध्यादिवाक्यविहितकर्मणः फलसंबन्धं बोधयितुं क्षमम्, अग्निहोत्रसंज्ञकस्य कर्मणोऽप्राप्तत्वात् । अतस्सर्वथा रूपाश्रवणेऽप्यग्निहोत्रवाक्यमेवोत्पत्तिविधिरिति बलात्स्वीकर्तव्यं भवति। अस्योत्पत्तिविधित्वे दध्यादिवाक्यानि विकल्पेन द्रव्यं समर्पयन्ति सार्थकानि भवेयुः, अधिकारवाक्यञ्च फलसमर्पकतया सार्थकमिति सर्वं समञ्जसम् ।

**अनुवाद**—यहाँ पर वह आशंका होती है—याग के दो रूप होते हैं, द्रव्य एवं देवता । 'अग्निहोत्रं जुहोति' इस विधिवाक्य में द्रव्य अथवा देवता का उल्लेख नहीं है अतः यह उत्पत्तिविधि कैसे हुई ? अग्नि [यदि माना जाय कि] अग्निहोत्र पद में द्रव्य अथवा देवता का श्रवण नहीं है क्योंकि 'तत्प्रख्यन्याय'[1] से 'अग्निहोत्र' याग का नाम है । [ सिद्धान्त पक्ष का आशय है ] कि नहीं । प्रकृत उदाहरण में [ अग्निहोत्रं जुहोति ] रूप [ द्रव्य या देवता ] का श्रवण न होने पर भी इसे उत्पत्तिविधि मानना चाहिए ।[1]

१. 'तत्प्रख्यं चान्यशास्त्रम्' [जै० सू० १. ४. ४.] तत् = देवता, प्रख्यम् = वाचकम् ।

अन्यथा, रूप के श्रवण होने से ही यदि कोई वाक्य उत्पत्तिविधि हो सकता तो 'दध्ना जुहोति'। भी 'दधि' रूप द्रव्यात्मक श्रवण होने से उत्पत्तिविधि हो जाता परन्तु 'अग्निहोत्रं जुहोति' यह वाक्य अनर्थक हो जायगा।

## अर्थालोकलोचन

प्रस्तुत अवतरण में यह शङ्का की गई है कि उत्पत्तिविधि का लक्षण [ कर्मस्वरूपमात्र का बोधक ] ठीक नहीं हैं क्योंकि कर्म का रूप द्रव्य एवं देवता से निर्णीत होता है। और 'अग्निहोत्रं जुहोति' में द्रव्य एवं देवता दोनों का ही उल्लेख नहीं हैं अतः इसे उत्पत्ति, विधि मानना उचित नहीं हैं। सिद्धान्ती का समाधान 'रूपाश्रवणेऽप्यस्योत्पतिविधित्वात्' द्वारा दिया गया है। समाधान का आशय यह है कि'—अग्निहोत्रं जुहोति' में यागरूप के श्रवण न होने पर भी इसको उत्पत्तिविधि रूप सामान्य की कल्पना करके माना जा सकता है। परन्तु वह रूप कौन सा है इस प्रकार को आकांक्षा होने पर 'दध्ना जुहोति' इस गुणविधि से दधिरूप द्रव्य एवं 'अग्निज्योंति' इत्यादि मन्त्र से अग्नि रूप देवता का ज्ञान होता है अतः उत्पत्तिविधि मानना अनुचित नहीं है।

किञ्च, यह भी आवश्यक नहीं है कि जिस विधि में रूप का श्रवण हो उसे ही उत्पत्ति-विधि मानना चाहिए, अन्यथा 'दध्ना जुहोति' में दधिरूप द्रव्यात्मक गुण का उल्लेख होने से इसे भी उत्पत्तिविधि मानना होगा और इसी स्थिति में 'अग्निहोत्रं जुहोति' वाक्य व्यर्थ हो जायगा।

**विशेषार्थ**—'अग्निहोत्रशब्दस्य' तु 'तत्प्रख्यन्यायेन नामधेयत्वात्' इन पंक्तियों में उत्पत्तिविधि के लक्षण के सम्बन्ध में पूर्वपक्ष के द्वारा किये गये आक्षेप के प्रसंग में यह कहा गया था कि इस वाक्य में द्रव्य एवं देवता उल्लेख नहीं है इसका एकदेशीय समाधान प्रस्तुत करते हुये कहा गया है कि यदि 'अग्निहोत्रम्' का अर्थ 'अग्नये होत्रम्' किया जाय तो 'अग्निदेवता' को उद्देश्य करके याग का विधान यह अर्थ सम्भव है। परन्तु इस समाधान का भी समर्थन सिद्धान्ती के मान्यतानुसार नही हो सकता है क्योंकि मूलरूप में 'तत्प्रख्यन्याय' से अग्निहोत्र से देवता का नामोल्लेख नहीं अपितु याग का नामधेय निर्णीत होता है।

## विनियोगविधिः

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा 'दध्ना जुहोतीति'। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं

१. यद्यपि अत्र [ 'अग्निहोत्रं जुहोति' इत्यस्मिन् वाक्ये ] कर्मणो रूपं न श्रूयते, तथापि विध्यन्यथानुपपत्त्या तत् कल्प्यते। तच्च सामान्यतः कल्प्यमानं द्रव्यदेवतात्मकं कर्मणो रूपं विशेषकाङ्क्षया गुणविधिमन्त्रवर्णाभ्यां विशेषेण चावगम्यमानमत्र संभवति। तश्च 'अग्निहोत्रं जुहोति' इत्यत्र द्रव्यदेवतात्मकस्य **कर्मरूपस्य** श्रवणाभावेऽपि अस्य होमरूपकर्मस्वरूपमात्रबोधकत्वरूपमुत्पत्तिविधित्वं सम्भवति।
—रामेश्वरः

विधत्ते दध्ना होमं भावयेदिति। गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः। क्वचिदाश्रयत्वेनापि। यथा 'दध्नेन्द्रियकामस्य जुहुया'दित्यत्र दधिकरणत्वेनेन्द्रियं भावयेत्। तच्च किन्निष्ठमित्याकाङ्क्षायां संनिधिप्राप्तहोम आश्रयत्वेनान्वेति।

## अर्थालोकः

उत्पत्तिविधिं परिसमाप्य विनियोगविधेस्स्वरूपं सपरिकरं निरूपयिष्यन् विनियोगविधिं लक्षयति—अङ्गेति। अङ्गानां प्राधानेन सह संबन्धं यो बोधयति स विनियोगविधिरित्यर्थः। अङ्गानि द्रव्यदेवताक्रियादिरूपाणि तैस्तैर्वाक्यैर्विहितानि, यत्र कर्मण्येकमेव प्रधानं तत्र तद्विधायकमेकं वाक्यम्, यत्र च नानाप्रधानानि तत्र तेषां विधानायानेकानि वाक्यानि। तत्राङ्गानां प्रधानेन सह संबन्धः शेषशेषिभावः, तं यो विधिर्बोधयति स विनियोगविधिरिति यावत्। उदाहरति—**दध्नेति**। **तृतीयेति**। दधिपदोत्तरं श्रूयमाणया तृतीयया विभक्त्या प्रतिपन्नः अवगतः अङ्गभावः-अङ्गत्वं यस्य तादृशस्येत्यर्थः। तृतीयायाः करणत्वमर्थः। करणत्वञ्च सर्वत्राङ्गत्वपरिचायकम्। अतस्तृतीयया दध्नोऽङ्गभावः प्रतिपन्नो भवतीति भावः। अङ्गत्वेन ज्ञातस्य दध्नः **होमसंबन्धं** होमेन सह शेषत्वसंबन्धं **विधत्ते** विनियोगविधिरित्यर्थः। एवं विधानेन निष्पन्नं बोधं दर्शयति—**दध्नेति**। तृतीयया करणत्वं द्वितीयया च होमस्योद्देश्यत्वं प्रतीयत इति होमं प्रति दध्नोऽङ्गत्वं सिध्यति।

## विशेषार्थः

ननु किमिदमङ्गत्वं नाम? तत्र सूत्रकारस्सूत्रयति—'परार्थश्शेषः' इति। पर एव अर्थः प्रयोजनं यस्य स परार्थः। यः परार्थः स शेषो भवति। परस्वरूपसिद्धिरेव यस्य प्रयोजनं स शेष इति यावत्। 'दध्ना जुहोति' इत्यत्र परः जुहोतिना प्रतिपादितो होमः—विहितदेशे द्रव्यस्य प्रक्षेपरूपा क्रिया, तत्साधकं दधिद्रव्यम् इति दध्नः प्रक्षेपात्मकहोमक्रियानिष्पादनसाधनत्वमस्ति। अतो दधि परार्थं जातमिति तदङ्गम्, होमश्च तदङ्गी। दधन्यङ्गत्वम् होमे चाङ्गित्वम्। तदनयोः संबन्धः—होमनिष्ठाङ्गितानिरूपिताङ्गत्वदधिनिष्ठाङ्गतानिरूपितहोमनिष्ठाङ्गित्वरूपः विनियोगविधिना बोध्यते। एवं 'व्रीहिभिर्यजेत' यागोद्देशेन व्रीहीणां विधानात् व्रीहीणां यागाङ्गत्वम्, 'यजेत स्वर्गकामः' इत्यत्र स्वर्गोद्देशेन यागस्य विधानात् स्वर्गाङ्गत्वं यागस्य, 'जुहुयात्स्वर्गकामः' इत्यत्र होमस्य विधानात् स्वर्गाङ्गत्वं होमस्येत्याद्यङ्गाङ्गिभावो बोध्यः। सूत्रकाराभिहिताङ्गत्वलक्षणं पारार्थ्यमेव परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपम्। व्याप्यत्वञ्चात्र

कारकत्वरूपम् । परं प्रयोजनरूपमुद्दिश्य प्रवृत्तपुरुषस्य कृतिः तत्कारकत्वं दधिव्रीह्यादीनामिति तान्यङ्गानि । एवंरूपाः क्रिया अप्यङ्गभावं भजन्ते प्रयाजादयः । किन्तु तत्राङ्गताग्राहकप्रमाणानुसारेणाङ्गत्वं ज्ञातव्यं भवति ।

## अर्थालोकः

अङ्गाङ्गिभावमापन्नानां पदार्थानां विधिविषयतावश्यिकी । विधिविषयता च द्विविधा—विधेयताख्या उद्देश्यताख्या च । 'दध्ना जुहोति' इत्यत्र दधनि विधेयताख्या होमे चोद्देश्यताख्या विधिविषयता । तथा च दधनि विधेयत्वम् होमे चोद्देश्यत्वं तिष्ठति । विधेयत्वसामानाधिकरण्येन दधनि उपादेयत्वमङ्गत्वञ्च तिष्ठतः । उद्देश्यत्वसामानाधिकरण्येन होमे अनुवाद्यत्वं प्राधान्यञ्च तिष्ठतः । अत विधेयत्वोद्देश्यत्वयोः उपादेयत्वानुवाद्यत्वयोः अङ्गत्वप्राधान्ययोश्च मिथो विरोधः । इदमेव विरुद्धत्रिकद्वयमिति व्यपदिश्यते । विरुद्धत्रिकद्वयमिदं यद्येकत्र तिष्ठेत् तत्र दोषः, भिन्ननिष्ठत्वे च न दोषः । तदत्र 'दध्ना जुहोति' इत्यत्र 'दधनि विधेयत्वम्' 'होमे चोद्देश्यत्वम्', 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यत्र 'होमे विधेयत्वम्, फले चोद्देश्यत्वम्' इति स्थिते तत्तत्सामानाधिकरण्येन उद्देश्यत्वानुवाद्यत्वादिकं तिष्ठति । कर्मोत्पत्तिविधौ विधेयस्य धात्वर्थस्य यथा करणत्वेनान्वयः, तथा गुणविधौ तस्य करणत्वेन नान्वय इत्याह—**गुणविधाविति** । धात्वर्थस्येत्यनन्तरं प्राप्तत्वादिति शेषः । धात्वर्थस्य भावनायां साध्यत्वसाधनत्वातिरिक्तसंबन्धेनाप्यन्वयं दर्शयति—**क्वचिदिति** । **आश्रयत्वेनेति** । फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रय इति तल्लक्षणम् । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र दध्नेति तृतीयोपात्तं दधिनिष्ठं करणत्वमिन्द्रियफलोद्देशेन विधीयते । 'दध्ना जुहोति' इत्यत्र होमोद्देशेन दधि करणत्वेन विधीयते, 'दध्ना होमम्' इत्यन्वयः, दध्नो होमनिर्वर्तकत्वं प्रत्यक्षम्, द्रव्यप्रक्षेपात्मकत्वाद्धोमस्य । इन्द्रियकामवाक्ये तु दधिनिष्ठकरणत्वस्य विधीयमानत्वात् दधिकरणत्वेनेन्द्रियमित्यन्वयो वक्तव्यः । विधेयं दधिनिष्ठकरणत्वम्, तस्य करणत्वेन भावनायामन्वयः दधिनिष्ठकरणत्वकरणिका भावनेति सिध्यति । दधिनिष्ठकरणत्वं किमाश्रितं सद्भावनायां करणत्वेनान्वेतीत्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेनान्वेति । तथा च प्रकृतहोमाश्रितेन दध्ना इन्द्रियं भावयेदिति वाक्यार्थः । तदिदमाह—**तच्चेति** । **किं निष्ठमिति** । किमाश्रितमित्यर्थः ।

**अनुवादः**—[ द्रव्य देवतादि रूप ] अङ्गों का प्रधान ( होमादि ) के साथ सम्बन्ध-बोधक विधि को विनियोगविधि कहते हैं । जैसे—'दध्ना जुहोति' में 'दध्ना' इस तृतीया

श्रुति से बोधित दधिरूप अङ्ग का [ 'अग्निहोत्रं जुहोति' इस वाक्य से बोधित ] अग्निहोत्र-रूप प्रधान [ अङ्गी ] के साथ सम्बन्ध का विधान करता है अतः 'दध्ना जुहोति' यह विनियोग विधि है और 'दधि से होम की भावना करें' यह बोध होता है।

[ विनियोगविधि ] गुणविधि में धात्वर्थ होम का साध्यत्व रूप से अन्वय होगा और कहीं-कहीं धात्वर्थ का अन्वय आश्रय रूप में भी किया जाता है। जैसे 'दध्नेन्द्रिय-कामस्य जुहुयात्' इस गुण विधि में धात्वर्थ का अन्वय आश्रय रूप में होता है और 'दधिकरणत्वेन इन्द्रियं भावयेत्'[1] यह अर्थ होगा। दधिकरणत्व से इन्द्रिय रूपी फल की कामना करें। दधिकरणत्व किस आश्रय में रहेगा यह आकांक्षा होने पर समीप श्रुत होम ही आश्रय रुप में अन्वित होगा।[2]

## अर्थालोकलोचन

उत्पत्तिविधि का स्वरूप निरूपण समाप्त करके विनियोगविधि के सम्बन्ध में चर्चा की जा रही है। अङ्गों का प्रधान ( अङ्गी ) के साथ सम्बन्धबोधकविधि को विनियोग-विधि कहते हैं। द्रव्य देवता क्रियादि रूप अङ्गों का तत् तत् वाक्यों द्वारा विधान होता है। जहाँ कर्मों में एक ही प्रधानता है उसका विधायक वाक्य भी एक ही होता है और जहाँ विविध कर्मों का प्राधान्य है वहाँ उनके विधायक वाक्य भी कई होते हैं। अतः अंग एवं अङ्गी या शेषशेषिभाव का सम्बन्ध प्रतिपादन ही विनियोगविधि संज्ञा से अभिहित होता है। यथा, 'दध्ना जुहोति' में 'दध्ना' तृतीया विभक्ति से 'अंगत्व' का प्रतिपादन हो रहा है। इस अङ्ग का ( अङ्गी ) होम के साथ सम्बन्ध ही विनियोग विधि के द्वारा जाना जाता है।

'अङ्ग' का लक्षण करते हुए सूत्रकार जैमिनि ने कहा है—'शेषः परार्थत्वात्' इति। 'पर एव अर्थः प्रयोजनं यस्य स परार्थः' अर्थात् दूसरे की स्वरूपसिद्धि ही जिसका प्रयोजन हो उसे ही 'शेष' कहेंगे। 'दध्ना जुहोति' वाक्य में 'जुहोति' द्वारा प्रतिपादित होम है, उद्दिष्ट देश में द्रव्य की प्रक्षेपरूपा क्रिया है, और उसका साधक दधि रूप द्रव्य है। इस प्रकार 'दधि' परार्थ होने से होम का अङ्ग हुआ एवं होम अङ्गी हुआ। इसी प्रकार 'व्रीहिभिर्यजेत' अर्थात् यागोद्देश से यवों का विधान होने से 'यव' या व्रीहि का यागाङ्गत्व सिद्ध है 'यजेत स्वर्गकामः' में भी स्वर्गोद्देश से याग का विधान होने से याग का स्वर्गा-गत्व सिद्ध है। अतः सूत्रकार द्वारा बताया गया 'अङ्गत्व लक्षण' पारार्थ्य है। इसका विशद विवेचन अग्रिम प्रसङ्ग में किया जायगा।

---

१. होमाश्रयदधिकरणत्वेन होमनिष्ठदधिकरणत्वेन वा इन्द्रियं भावयेत्।

२. गुणविधौ च धात्वर्थस्य साध्यत्वेन अन्वयः। क्वचित् करणत्वेनापि। यथा 'दध्ना इन्द्रियकामस्य जुहुयात्' इत्यत्र 'होमेन इन्द्रियं भावयेत्' इति। तत्र च किं विशिष्टः स होमः इत्याकांक्षायां संनिधिप्राप्तं दधिविशेषणत्वेन अन्वेति। तेन 'दधि-विशिष्टेन होमेन इन्द्रियं भावयेत्' इति फलितम्।

विनियोगविधि का निरूपण करते हुये ग्रन्थकार ने धात्वर्थ के सम्बन्ध में लिखा है कि 'गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः। क्वचिदाश्रयत्वेनापि।[1] अर्थात् गुणविधि में धात्वर्थ [ क्रिया का ] का साध्यरूप में और कहीं-कहीं धात्वर्थ का अन्वय आश्रयरूप में होता है। वस्तुतः जिस विनियोगविधि वाक्य में 'फल' उद्दिष्ट न हो और अधिकारविधि के द्वारा लक्षणाश्रय करके भी फल श्रुत न हो वहाँ धात्वर्थ का अन्वय साध्य रूप में होगा। यथा—दध्ना जुहोति। परन्तु धात्वर्थ का अन्वय आश्रयरूप में तब होगा जब साक्षात् या अधिकारी के विशेषण रूप में फल का विधान किया गया हो। यथा—'दध्नेन्द्रियकामस्य जुहुयात्' में इन्द्रिय रूप फल का श्रवण होता है अतः यहाँ अन्वय [ धात्वर्थ का ] आश्रयरूप में हुआ है। इस विधि वाक्य का अर्थ है—दधिकरणत्व से इन्द्रिय रूपी फल की कामना करे। यहाँ आशय यह है कि—कर्त्ता के व्यापार विना कारण विद्यमान नहीं होता है और होम का विधान वाक्यान्तर से हुआ है अतः सिद्धान्त-रूप में होम और दधि गुण दोनों का विधान नहीं हो सकता। होम के साथ दधि का अन्वय करने पर 'इन्द्रिय रूप' फल व्यर्थ होगा। प्रकारान्तर से होम में फल का अन्वय करने पर दधि पद की अनर्थकता सिद्ध होती है। न्यायतः, फल एवं गुण दोनों के सम्बन्ध का विधान करना सम्भव नहीं है प्राप्त कर्म में उभय विधान से वाक्यभेद होगा ( द्रष्टव्य—'प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः। यदाहुः—

'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥ ( तन्त्रवार्तिक २-२-७ )

इस सन्दर्भ में कर्म पद ( कर्मणि ) द्रव्यादि का उपलक्षण माना गया है। गुण पद प्रधान का उपलक्षण है [ द्रष्टव्य—अत्र च कर्मपदवत् गुणेत्युपलक्षणम्—मीमांसा न्याय-प्रकाश, पृ० ३९ ] भाव यह है कि यदि कर्म अर्थात् द्रव्यादि गुण का वाक्यान्तर से विधान हो तो उसमें अनेक गुण या प्रधान का विधान करना उचित नहीं है ( द्रष्टव्य—द्रव्ये गुणे कर्मणि वा प्राप्ते सति तदनुवादेन द्रव्याणां गुणानां कर्मणां वा सजातीयानामनेकेषां तथा विजातीयानां द्रव्यगुणकर्मणामप्यनेकेषां विधानं न युज्यत इति तात्पर्यम् )। यदि अप्राप्त हो अर्थात् अन्यत्र विहित न हो तो एक यत्न से अनेक का विधान सम्भव है। अतः प्रवृत्त उदाहरण में तृतीया विभक्ति द्वारा उपस्थित दधिकरणत्व में होमनिरूपित फलभावना के प्रति करणत्व का विधान किया गया है।

---

१. अथवा—'क्वचिदाश्रयत्वेनापि' इस ग्रन्थ का व्याख्यान इस तरह करना चाहिये कि गुणविधि में सभी जगह धात्वर्थ का साध्यत्वेनैव अन्वय करना चाहिये। जहाँ पर दध्यादि गुण के करणत्व की उपस्थिति तृतीया से होती है वहाँ दध्यादि गुण का करणत्व प्रत्ययार्थ हुआ और प्रकृत्यर्थ के प्रति प्रत्ययार्थ प्रधान होता है अतः दध्यादिकरणत्व दधि के प्रति भी प्रधान है अतः उसका फलभावना में करणत्वेन अन्वय होगा। एतादृश स्थल में धात्वर्थ का आश्रयत्व ( वृत्तित्व ) सम्बन्ध से अन्वय होता है। इस मत में 'क्वचित्' शब्द का अर्थ होगा कि जहाँ पर दध्यादि गुण करणत्व का करणत्वेन फल भावना में विधान होता है।'

द्रष्टव्य—दीपिकाटीका, पृ० १८,

## विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि—

एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि । एतत्सहकृतेनानेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं[1] पारार्थ्यापरपर्यायं ज्ञाप्यते ।

### अर्थालोकः

**एतस्य विधेः** प्रकृतविनियोगविधेरित्यर्थः । **अनेन विधिना** विनियोगविधिनेत्यर्थः । अङ्गत्वं ज्ञाप्यत इति सम्बन्धः । अङ्गत्वं कीदृशमभिप्रेतमित्यत्राह—**परेति** । सौत्रलक्षणाविरोधायाह—**पारार्थ्येति** । प्राङ्निरूपितमेतत् ।

**अनुवाद**—विनियोगविधि के सहकारी ( अंग एवं अंगी भाव बोधक ) षट् प्रमाण हैं—श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान और समाख्या । इनके सहयोग से यह विधि अंगत्व का बोधकराती है । अंगत्व पारार्थ्य का दूसरा ( अपर ) पर्याय शब्द है और अंगत्व का लक्षण है--परोद्देशप्रवृत्तकृतिसाध्यत्वम् अर्थात् ( परोद्देश प्रवृत्त ) स्वर्गादि फल के उद्देश्य से प्रवृत्त पुरुष का ( कृतिसाध्य ) यत्नव्याप्य जो हो उसी को अंग कहते हैं ।

### अर्थालोकलोचन

अङ्गत्व के लक्षण पर विचार इससे पूर्व किया गया है । अतः वहीं द्रष्टव्य है । श्रुति, लिङ्गादि प्रमाणों का सारगर्भित विवेचन ग्रन्थकार यथाक्रम आगे प्रस्तुत करेंगे । इनकी विशेष व्याख्या यहाँ प्रसङ्गतः प्राप्त न होने से नहीं की जा रही है ।

## श्रुतिनिरूपणम्

तत्र निरपेक्षो रवः श्रुतिः । सा च त्रिविधा—विधात्री, अभिधात्री विनियोक्त्री च । तत्राद्या लिङाद्यात्मिका । द्वितीया व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री ।

### अर्थालोकः

प्रकृतविधेस्सहकारिभूतेषु प्रमाणेषु श्रुतिं लक्षयति—**निरपेक्ष इति** । निरपेक्षत्वे सति रवत्वम् शब्दत्वं श्रुतेर्लक्षणम् । प्रमाणान्तरमनपेक्ष्यैव यश्शब्दः पदार्थ-

---

१. अङ्गत्वम्—परोद्देशप्रवृत्तकृतिसाध्यत्वम् ।

(i) परम् ( उत्कृष्टं साध्यं स्वर्गादिरूपम् ) तस्य उद्देशेन ( तत्प्राप्त्यर्थमित्यर्थः ) प्रवृत्तः ( क्रियावान् यः स्वर्गकामः पुरुषः ), तस्य कृत्या व्यापारेण साध्यत्वं कार्यत्वम् ।

(ii) परः ( नाम मुख्यः यः दर्शपूर्णमासरूपः यागः ) तस्य उद्देशेन ( तस्य करणार्थमित्यर्थः ) प्रवृत्तः ।

(iii) परं ( नाम स्वेतरं किंचित् स्वर्गादिरूपमुत्कृष्टं साध्यम् दर्शपूर्णमासरूपो मुख्यो यागो वा ) तस्य उद्देशेन प्रवृत्ता ( प्रारब्धा अङ्गीकृता ) कृतिः क्रिया तया साध्यम् तस्य भावः ।

विनियोगे प्रवर्तते स शब्दोऽत्र श्रुतिपदेन विवक्षितः। ननु श्रुतिरिति पदं समग्रस्य वेदस्याभिधायकम्, श्रुतिश्च प्रमाणान्तरनिरपेक्षप्रामाण्यवती, स्वतः प्रमाणत्वात्तस्याः। पृथगत्र श्रुतेर्लक्षणाभिधानं कस्मै प्रयोजनायेति चेच्छृणु; शेषत्वबोधनाय प्रवृत्तेषु प्रमाणेषु यदितरनिरपेक्षतया शेषत्वं बोधयति तत्प्रमाणं श्रुतिरित्युच्यते। श्रुतिं विभजते—**सा चेति**। विधात्री–विधायिका लिङादिका। अभिधात्री–अभिधायिका व्रीह्यादिः। विनियोक्त्रीं श्रुतिं लक्षयति—**यस्य चेति**। विधात्र्यभिधात्र्योः श्रुत्योः न पदार्थविनियोगे प्रवृत्तिः। विनियोक्त्र्या एव तत्र प्रवृत्तिरिति तस्या लक्षणं प्रतिपाद्यत इति भावः। सम्बन्धः शेषशेषिभावः। यं शब्दं श्रुत्वैव पदार्थयोरङ्गाङ्गिभावः प्रतीयते स शब्दो विनियोक्त्री श्रुतिरित्यर्थः।

**अनुवाद**—[ श्रुति का लक्षण प्रस्तुत करते हैं ]—उनमें से जो प्रमाणान्तर की अपेक्षा नहीं रखता ऐसे शब्द [ रव ] को श्रुति कहते हैं। श्रुति के तीन भेद हैं—विधान करने वाली [ विधात्री ], अभिधान करने वाली [ अभिधात्री ], विनियोग करने वाली [ विनियोक्त्री ]। उनमें 'लिङ्' आदि श्रुति को 'विधात्री' कहते हैं। व्रीह्यादि शब्द को 'अभिधात्री' कहते हैं और जिस शब्द के श्रवणमात्र से अङ्गाङ्गिभाव का ज्ञान हो जाता है उसे 'विनियोक्त्री' कहते है।[1]

## अर्थालोकलोचन

श्रुति-लक्षण में 'रव' पद का अर्थ शब्द है। प्रमाणान्तर की अपेक्षा किये बिना जो शब्द पदार्थ के विनियोग में समर्थ होता है उस शब्द को 'श्रुति' पद से कहा गया है। तात्पर्य यह है कि लिङ्गादि पञ्चप्रमाण अपने-अपने पूर्ववर्त्ती प्रमाण की सहायता से ही विनियोग करते है अतः उनमें अतिव्याप्ति के निवारणार्थ श्रुति लक्षण में 'निरपेक्ष' पद का समावेश किया गया है।[2] श्रुति में तीन प्रकार के शब्दों की अपेक्षा रहती है—विधिबोधक शब्द, विनियोगबोधक शब्द तथा विनियोग सम्बन्धबोधक शब्द। विधत्ते इति विधात्री इस व्युत्पत्तिलभ्य अर्थ से जिससे विधि का विधान विहित हो उसे विधात्री कहते है। 'दध्ना जुहोति, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' आदि उदाहरणों में 'जुहोति एवं यजेत' आदि पद विधात्री श्रुति है क्योंकि 'लट्' एवं विधिलिङ् लकारों द्वारा अग्निहोत्र एवं ज्योतिष्टोमादि यागों का विधान कर रहे हैं।

---

१. अभिधात्री श्रुतिः काचिद्विनियोक्त्र्यपरा तथा।
विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः॥--तन्त्रवार्त्तिक ३. १. १३.
द्रष्टव्यः--विनियोगविधेस्त्रिविधशब्दसापेक्षत्वात्तत्सूचनाय भेदत्रयोक्तिः।

२. 'अंगत्वबोधने लिंगादिवत्प्रमाणान्तरमनपेक्षमाण इत्यर्थः।
—सारविवेचिनी, पृ० २७

अभिधात्री ( अभिधया स्वार्थं प्रतिपादयित्री ) श्रुति में विधान या विनियोग अभिप्रेत नहीं हुआ करता, अपितु पदार्थ का उच्चारण ( = अभिधान ) द्वारा ही अपेक्षित वस्तु का ज्ञान होता है। यथा—'व्रीहीन् अवहन्ति, व्रीहीन् प्रोक्षति' आदि उदाहरणों में 'व्रीहि' का अभिधान किया गया है।

विनियोक्त्री ( यस्य च शब्दस्य श्रवणात् सम्बन्धः प्रतीयते सा विनियोक्त्री; सा = सः ( शब्दः ), स शब्दो विनियोक्त्री ( श्रुतिरित्यर्थः ) । श्रुति के लक्षण में श्रुति का निरपेक्षत्व 'श्रवणादेव' पद से द्योतित हो रहा है तथा 'अङ्गाङ्गिभाव बोधन' 'सम्बन्धः प्रतीयते' पद से ज्ञापित हो रहा है। कुछ टीकाकारों के मत में अर्थसंग्रहकार का यह विवेचन प्रकृत सन्दर्भ में बहुत औचित्यपूर्ण नहीं है।[1]

## विनियोक्त्री श्रुतिस्त्रिधा

सापि त्रिविधा—विभक्तिरूपा, समाजाभिधानरूपा, एकपदरूपा चेति। तत्र विभक्तिश्रुत्याङ्गत्वं यथा 'व्रीहिभिर्यजेत' इति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूपहविःप्रकृतितया यागाङ्गत्वम्।

## अर्थालोकः

विनिनोक्त्रीं विभजते—**सापीति**। विभक्तिरूपा-यावत्यो विभक्तयस्तद्रूपा। अभिधीयत इत्यभिधानं शब्दः। समानश्च तदभिधानश्च समानाभिधानं तद्रूपेत्यर्थः। शेषशेषिणोरभिधानं शब्दो यत्र समानं भवति तत्र समानाभिधानश्रुतिरिति भावः। एकपदरूपा—एकमेव पदं शेषशेषिणोर्बोधकं यत्र तत्रैकपदरूपा श्रुतिरित्यर्थः। **तत्र** विनियोक्त्रीश्रुतीनां मध्ये। अङ्गत्वं बोध्यत इति शेषः। व्रीहिभिरिति। दर्शपूर्णमासप्रकरणगतमिदं वाक्यम्। तत्राग्नेयवाक्यप्राप्तयागस्य यजतिपदमनुवादकम्। अत आख्यातोपात्तभावनायां प्रकृत्यर्थो यागस्साध्यत्वेनान्वेति—यागं भावयेदिति। यागस्योद्देश्यत्वात्तस्य प्राधान्यं शेषित्वं स्पष्टम्। व्रीहिपदोत्तरं श्रूयमाणा तृतीया करणत्वं ब्रवीति। तच्च करणत्वं व्रीहिनिष्ठं विधेयत्वपरिचायकम्। विधेयत्वसामानाधिकरण्येनाङ्गत्वं तिष्ठति। तथा च यागगतप्राधान्यनिरूपिताङ्गत्वं व्रीहिषु, व्रीहिगताङ्गत्वनिरूपिताङ्गित्वं याग इति व्रीहीणां यागाङ्गत्वं तृतीयाश्रुत्येति भावः। व्रीहीणां यागाङ्गत्वमपि न साक्षादित्याह—**तदपीति**। **पुरोडाशेति**। 'यदाग्नेयोऽष्टा-

---

१. 'यद्यपि अत्र विनियोगप्रस्तावे विधात्र्यभिधात्र्योः निरूपणं नातीव संगतम्, तथापि श्रुतिप्रसंगात् तयोः विधिसहकारित्वाच्च तन्निरूपणमिति बोध्यम्।

—सारविवेचिनी।

कपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इत्युत्पत्तिवाक्येऽष्टाकपालस्याष्टसु कपालेषु संस्कृतस्य पुरोडाशस्य यागाङ्गत्वं बोध्यते। पुरोडाशश्च पिष्टेन निर्मीयते। पिष्टस्य च किञ्चित्प्रकृतिद्रव्यमपेक्ष्यते। तदेव प्रकृतिद्रव्यं 'व्रीहिभिर्यजेत' इत्यनेन विधीयत इत्याह—**प्रकृतितयेति**। पुरोडाशप्रकृतितया व्रीहीणां यागाङ्गत्वमिति संबन्धः। अत्र दृष्टान्तमाह—**यथेति**। **पशोरिति**। 'पशुना यजेत' इति विहितयागाङ्गपशोरित्यर्थः। सर्वत्र षष्ठान्तिमाधिकरणन्यायेन पशुशब्दश्छागवाची बोद्धव्यः। पशोर्यागाङ्गत्वं न साक्षात् किन्तु परम्परयेत्याह—**हृदयादीति**। 'हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अथ वक्षसः' इत्यादिवाक्येन हृदयाद्यवयवानामवदानं विहितम्। अवदानं—खण्डनमित्यर्थः। तच्च हविष्ट्वप्रयोजकम्। अर्थादवदानेन संस्कारेण संस्कृतं द्रव्यमेव सर्वत्र यागे हविर्भवति। तस्य हविषः प्रकृतिद्रव्यमत्र पशुः। एवञ्च साक्षात्पशुः नाग्नौ प्रक्षेप्तव्यः, किन्तु पशुं संज्ञप्य शास्त्रोक्तविधिना तत्तदवयवानवदाय तेऽग्नौ प्रक्षिप्यन्ते देवतायै। अतः पशुः तत्तदवयवप्रकृतितया यागाङ्गं यथा, तथा व्रीहयोऽप्यङ्गमिति सिद्धम्।

**अनुवादः**—विनियोक्त्री श्रुति भी तीन प्रकार की है—(i) विभक्तिरूपा, (ii) एकाभिधानरूपा और (iii) एकपदरूपा। विभक्तिश्रुति से अंगत्व का ज्ञान होता है जैसे **'व्रीहिभिर्यजेत'** वाक्य में तृतीया विभक्ति से, व्रीहि याग का अंग है, यह ज्ञान होता है। व्रीहि पुरोडाश[1] की प्रकृति होने से याग का अंग बनते हैं। [ पुरोडाश की प्रकृति होने से व्रीहि के यागांग होने में दृष्टान्त प्रस्तुत कर रहे हैं ] यथा—याग का अंगभूत पशुहृदयादि रूप हवि का प्रकृति होने से ही पशु अंग होता है।

## अर्थालोकलोचन

श्रुति के तीन प्रभेदों का उल्लेख करके ग्रन्थकार विनियोक्त्री श्रुति का निरूपण कर रहा है। विनियोक्त्री श्रुति का भी विभाजन किया गया है।




दर्शपूर्णमासप्रकरणगत 'व्रीहिभिर्यजेत' इस वाक्य में तृतीया विभक्ति जो कि 'व्रीहिभिः' द्वारा द्योतित हो रही है वह विनियोक्त्री श्रुति है। यहाँ 'व्रीहि' पदोत्तर सुनी जाने वाली तृतीया विभक्ति 'करणत्व' का बोध करा रही है जो कि 'व्रीहि' में विद्यमान है और

१. पुरोडाशः पुरः देवतानामग्रे दास्यते दीयते असौ पुरोडाशः। स एव पुरोडाशः।

विधेय का परिचायक है और विधेयत्व ही सामानाधिकरण्य से 'अङ्गत्व' रूप में जाना जाता है। इस प्रकार यागगत प्राधान्य से निरूपित अङ्गत्व 'व्रीहि' में विद्यमान होने से व्रीहि का यागांग होना तृतीया श्रुति से सिद्ध है। परन्तु व्रीहि का याग का अंग होना साक्षात् सिद्ध नहीं है अतः ग्रन्थकार ने कहा है—'तदपि पुरोडाशप्रकृतितया।' आशय यह है कि 'यदाग्नेयोऽष्टाकपालोऽमावस्यायां पौर्णमास्याञ्चाच्युतो भवति' इस उत्पत्ति वाक्य में अष्टकपाल द्वारा संस्कृत पुरोडाश को याग का अंग माना गया है। परन्तु 'पुरोडाश' का निर्माण भी किसी द्रव्य के पेषण से होता है वही प्रकृति द्रव्य 'व्रीहिभिर्यजेत' से विहित है। अतः पुरोडाश की प्रकृति होने से व्रीहि याग के अंग हुये। इस सन्दर्भ को अधिक स्पष्ट करने के लिये ग्रन्थकार ने आगे लिखा है—'यथा पशोर्हृदयादिरूपहविः-प्रकृतितया यागांगत्वम्।'

'पशुना यजेत' इस वाक्य से पशु को याग का अंग माना गया है। परन्तु पशु का याग के साथ सम्बन्ध परम्परया है साक्षात् नहीं। क्योंकि सम्पूर्ण पशु याग के लिये नहीं होता अपितु उसके कतिपय शरीराङ्ग ही यज्ञ में विनियुक्त होते हैं। 'हृदयस्य अग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति।' इत्यादि वाक्यों से हृदयादि अवयवों का ही विधान किया गया है। अतः साक्षात्पशु को ही अग्नि में नहीं डाल देना चाहिए अपितु देवता के लिये शास्त्रोक्त विधि से तत् तत् अवयवों का खण्ड अग्नि में प्रक्षेप करना चाहिये।[१] अतः जिस प्रकार पशु प्रकृतिभूत होने के कारण याग का अंग है उसी प्रकार व्रीहि भी याग का अंग है यह सिद्ध होता है।

## तृतीयाविभक्तिश्रुतेरुदाहरणम्

'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इत्यस्मिन् वाक्ये आरुण्यस्यापि तृतीयाश्रुत्या क्रयाङ्गत्वम्। तदपि गोरूपद्रव्य-परिच्छेदद्वारा न तु साक्षात्, अमूर्तत्वात्।

## अर्थालोकः

तृतीयाविभक्तेरुदाहरणान्तरमाह—**अरुणयेति**। अरुणाशब्दोऽरुणिमगुण-वाचकः, आकृत्यधिकरणन्यायात्। पिङ्गेऽक्षिणी यस्यास्सा, एकं हायनं यस्या-स्सेति व्युत्पत्त्योभावपि शब्दौ द्रव्यवाचिनौ। इदं वाक्यं ज्योतिष्टोमयागे सोमलताक्रयणविधायकम्। अप्राप्तक्रयणविधायकत्वाद् भावनायां धात्वर्थस्य क्रयणस्य करणत्वेनान्वयः क्रयणेन सोमं भावयेदिति। कारकाणां क्रियान्वय-नियमेन भावनारूपक्रियायां पिङ्गाक्ष्येकहायन्योः अरुणगुणस्य चान्वयः। एतेषां

---

१. यज्ञों में पशुवलि विषय पर विद्वानों में पर्याप्त मतभेद है। यहाँ मीमांसासिद्धान्त का प्रतिपादन किया गया है। आलोचित विषय पर टिप्पणीकार की सहमति आवश्यक नहीं है।

प्रथमं भावनान्वयवेलायां मिथो विशेष्यविशेषणभावो नाद्रियते, सर्वेषां स्वातन्त्र्येणैव भावनान्वयः, सर्वत्र तृतीयाकारकश्रवणात्। एवमन्वयानन्तरं पार्ष्टिकबोधे विशेष्यविशेषणानां मिथोऽन्वय इत्यरुणाधिकरणसारः। अतोऽमूर्तस्याप्यारुण्यस्याङ्गत्वं तृतीयाश्रुत्येति पूर्वोदाहरणतो भेदस्सिध्यति। तदिदम् 'आरुण्यस्यापि' इत्यपिशब्देन बोध्यते।

ननु कथममूर्तस्यारुण्यस्य क्रयाङ्गत्वमित्यत आह—**तदपीति**। क्रयाङ्गत्वमपीत्यर्थः। **परिच्छेदद्वारा** विशेषणद्वारा।

**अनुवादः**—'पीली आँखों वाली एक रक्तवर्ण गाय से सोम का क्रय करे' इस वाक्य में आरुण्या, इस तृतीया श्रुति से रक्तवर्ण (आरुण्य) भी सोम क्रयण का अंग होता है। आरुण्य अमूर्त है [इससे क्रयण नहीं हो सकता है अतः साक्षात् अंग भी नहीं हो सकता] क्रयण का साक्षात् हेतुभूत गोरूप द्रव्य परिच्छेद द्वारा अंग होता है।

## अर्थालोकलोचन

आकृत्याधिकरण न्याय से अरुणाशब्द 'अरुणिम गुण' का वाचक है। यह वाक्य ज्योतिष्टोम याग में सोमलता के क्रय का विधान करता है। अन्यथा क्रय के अप्राप्त होने से उसका विधायक होने से भावना में धात्वर्थ क्रयण का 'करणत्व' रूप से अन्वय होगा। 'क्रयणेन सोमं भावयेदिति'। आशय यह है कि—कारक का क्रिया में ही अन्वय होता है [द्रष्टव्य—क्रियान्वयित्वं कारकत्वम्] इस प्रकार आरुण्य में तृतीया विभक्ति का श्रवण होने से प्रथमतः क्रयण क्रिया में ही साक्षात् अन्वय होगा। परन्तु आरुण्य गुण से तो क्रय किया जाना सम्भव नहीं है अतः अपने आश्रय मूल गो रूप द्रव्य द्वारा परम्परा से ही उसका अन्वय होगा।[1] [द्रष्टव्यः—आरुण्यगुणस्य साक्षात्क्रयाङ्गत्वासंभवेऽपि स्वाश्रयीभूतद्रव्य द्वारा परम्परया तस्य क्रयाङ्गत्वसंभवात्]।

इस प्रसंग में 'मूर्त' एवं 'अमूर्त' पदों पर भी विचार करना अप्रासङ्गिक नहीं होगा। न्यायशास्त्र में 'मूर्त' पदों का प्रयोग मिलता है। इसका लक्षण भी कई प्रकार से किया गया है। 'परिच्छिन्नपरिमाणवत्त्वम् (तर्कदीपिका), 'वेगवत्त्वं क्रियावत्त्वं वा' (न्यायबोधिनी), अथवा 'इयत्तावच्छिन्नपरिमाणयोगः'—न्यायसिद्धान्तमुक्तावलीकार ने कहा है—

> 'क्षितिर्जलं तथा तेजः पवनो मन एव च।
> परापरत्वमूर्तत्वक्रियावेगाश्रया अमी'॥ —कारिकावली.

---

१. 'यद्यपि [आरुण्यम्] अमूर्तो गुणः, तथापि हायनवदक्षिवच्च गोद्रव्यमच्छिनत्ति। तच्च द्रव्यं साधनमिति तद् द्वारा गुणस्य क्रयेण अन्वयो भवति।... गुणस्यैवात्र तृतीया श्रुत्या साधनत्वमुच्यते। तच्च द्रव्यद्वारमन्तरेण न संभवतीति अर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते।—जै० न्या० मा० वि०, पृ० ११३,

अर्थात् पृथ्वी, जल, तेज, वायु एवं मन-इन पाँच द्रव्यों में से प्रत्येक में निम्नलिखित सभी धर्म रहते हैं। (i) परत्व, (ii) अपरत्व, (iii) मूर्तत्व, (iv) क्रिया एवं (v) वेगमूर्तत्व-द्रव्याश्रित है। गुण एवं क्रिया अमूर्त है।

## द्वितीयाविभक्तिश्रुतेरुदाहरणम्

'व्रीहीन् प्रोक्षति' इति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्, तस्य तेन विनाप्युपपत्तेः। किन्त्वपूर्व-साधनत्वप्रयुक्तम्। व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तेः। एवं सर्वे-ष्वङ्गेष्वपूर्वप्रयुक्तमङ्गत्वं बोध्यम्। एवम् इमामगृभ्णन् रशनामृतस्ये-त्यश्वाभिधानीमादत्ते' इत्यत्र द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्य-ङ्गत्वम्।

## अर्थालोकः

विनियोक्त्रीश्रुतौ द्वितीयाश्रुतिमुदाहरति—**व्रीहीनिति**। ननु प्रथमं द्वितीया-श्रुतिरुदाहर्तव्या, कथं तृतीया श्रुतिः प्रथममुदाहृतेति चेदत्रेदं बोद्धव्यम्—अङ्गत्वबोधकप्रमाणेषु श्रुतिः प्रथमं प्रमाणम्। तत्र तृतीया यदुत्तरं श्रूयते तन्निष्ठाङ्गत्वं बोधयन्ती सा साक्षादङ्गत्वं ग्राहयति। तेनाङ्गत्वग्रहणे सारल्यं सिध्यति। द्वितीयाश्रुतिस्तु यदुत्तरं श्रूयते तन्निष्ठोद्देश्यत्वसमानाधिकरणं प्राधान्यं बोधयन्ती तद्भिन्ननिष्ठमङ्गत्वं ग्राहयतीति। तथा हि—'व्रीहीन् प्रोक्षति' इत्यत्र व्रीहिपदोत्तरं श्रूयमाणा, द्वितीया व्रीहीणामुद्देश्यत्वमवगमयन्ती व्रीहिनिरूपिताङ्गत्वं प्रोक्षणस्य बोधयति। अर्थात् व्रीह्युद्देशेन प्रोक्षणे विधीयमाने उद्देश्यभूतानां व्रीहीणां प्राधान्यं विधेयभूतस्य च प्रोक्षणस्याङ्गत्वं द्वितीया-श्रुत्या बुध्यते। व्रीह्यङ्गत्वम् व्रीहिनिरूपिताङ्गत्वमित्यर्थः। ननु व्रीह्युद्देशेन विधीयमानस्य प्रोक्षणस्य प्रयोजकं किम्? किं व्रीहिस्वरूपम्? आहोस्विदन्य-त्किमपि? तत्र न तावद्व्रीहिस्वरूपं प्रोक्षणस्य प्रयोजकं भवितुमर्हति, विनैव प्रोक्षणेन व्रीहिस्वरूपस्य सिद्धत्वात्, तत्स्वरूपसिध्यर्थं विहितस्य प्रोक्षणस्या-नर्थक्यप्रसङ्गात्। नाप्यन्यत्किमपि प्रयोजकम्, तस्याप्रतीतेरित्यत आह-**तच्चेति**। प्रोक्षणस्य व्रीह्यङ्गत्वञ्चेत्यर्थः। तच्चापूर्वसाधनत्वप्रयुक्तमिति संबन्धः। व्रीहि-स्वरूपप्रयुक्तत्वाभावे हेतुमाह—**तस्येत्यादिना**। तस्य—व्रीहिस्वरूपस्य, तेन—प्रोक्षणेन। उपपत्तेः—सिद्धत्वादित्यर्थः। किंतर्हि प्रयोजकमित्यत्राह—**किन्त्विति**। अपूर्वसाधनप्रयुक्तम् प्रोक्षणं न व्रीहिस्वरूपप्रयुक्तम्, व्रीहिगता-पूर्वसाधनप्रयुक्तमित्यर्थः। अर्थात् प्रोक्षणस्योद्देश्यतावच्छेदकं न व्रीहित्वम्, किन्त्वपूर्वसाधनत्वमुद्देश्यतावच्छेदकम्। अपूर्वसाधनत्वावच्छिन्नोद्देशेन प्रोक्षणं

विधीयत इति भावः। एवञ्चापूर्वसाधनत्वावच्छिन्ननिष्ठप्रयोजकतानिरूपित-प्रयोज्यतावत्प्रोक्षणमिति सम्पद्यते। एवं सत्येतादृशापूर्वसाधनत्वावच्छिन्नत्वं विहितद्रव्यान्तराणामाज्यादीनामप्यस्तीति तत्रापि प्रोक्षणं प्राप्नुयादिति चेन्न, तण्डुलनिष्पत्तिप्रणाड्येति निवेशात्। तण्डुलानां निष्पत्तिर्व्रीहिभ्य एव जायते न त्वाज्यादिभ्यः। अतस्तत्र प्रोक्षणस्य न प्रसक्तिः। वैकृतनीवारादिषु द्रव्येषु तादृश-प्रणाड्यापूर्वसाधनत्वस्य सत्वात् तत्र प्रोक्षणस्यातिदेशस्सिध्यति। प्रकृतावेव प्रतिनिहितद्रव्येषु प्रोक्षणं भवेदेव। ननु प्रधानयागविधायकं दर्शपूर्णमासवाक्यं स्वर्गफलनिष्पत्तये यागं विदधत् यागजन्यापूर्वद्वारेति बोधयति। यत्र यागानु-ष्ठानेनैवापूर्वे जायमानेऽपूर्वसाधनत्वं यागस्येति प्रतीयते। कथं तर्हि व्रीहीणाम-पूर्वसाधनत्वमिति चेदाह—**व्रीहीनिति**। प्रधानमात्रानुष्ठानेन न फलापूर्व-मुत्पद्यते, किन्त्वङ्गसहितस्यैव तस्यानुष्ठानेन। अतो व्रीहीनप्रोक्ष्य यागस्यानुष्ठाने न यागोऽपूर्वजननसमर्थः। स च स्वस्वनिष्ठापूर्वजनकत्वसिद्धयेऽङ्गान्यप्यनु-ष्ठापयति। अङ्गानि च स्वस्वानुष्ठानजन्यापूर्वद्वारैव प्रधानमपूर्वजननसमर्थं विदधति। तत्र विहिताङ्गानामनुष्ठानाभावे कथं प्रधानानुष्ठानमात्रेणापूर्वोप-पत्तिरिति भावः। एवं यद्यदङ्गं तत्र सर्वत्रापीमं न्यायमतिदिशति—**एवमित्यादिना**।

द्वितीयाश्रुतेरुदाहरणान्तरमाह—**एवमिति**। प्रोक्षणस्य व्रीह्यङ्गत्वमिवे-त्यर्थः। इमामित्यादि ऋतस्येत्यन्तो भागः मन्त्रस्य प्रतीकरूपः। अस्य मन्त्रस्ये-तिकरणेन विनियोजकं वाक्यम् अश्वाभिधानीमाधत्त इति। चयनप्रकरणस्थमिदम्। चयने इष्टकाभिस्स्थण्डिलं कल्प्यते। तत्रेष्टकानिर्माणायाध्वर्युर्मृदमाहरेत्। मृदाहरणायैकोऽश्व एकश्च गर्दभो नीयते। भस्त्रिकायां मृदमापूर्य तामश्वे गर्दभे चारोप्याध्वर्युरानयेत्। आनयनवेलायां मन्त्रमिममुच्चार्याश्वरशनां गृह्णीयादध्वर्युः। ऋतस्य सत्यस्य फलस्य सिद्धये इमां रशनाम् अगृभ्णन् अगृह्णन् देवा इति शेषः इति मन्त्रार्थः। इति-एवमुच्चार्य अश्वस्याभिधानीं रशना मादत्ते गृह्णीयादिति विधेरर्थः। अत्र विधेयता मन्त्रे उद्देश्यता चाभिधान्याम्। अभिधानीमुद्दिश्य मन्त्रो विधीयते। विधेयत्वसामानाधिकरण्येन मन्त्रेऽङ्गत्वम्, उद्देश्यत्वसामानाधिकरण्येन चाभिधान्यां प्राधान्यम् इति। मन्त्राभिधान्यो-रङ्गाङ्गिभावस्सिध्यति। तत्र च प्रमाणम् 'अभिधानीम्' इत्यत्र विद्यमाना द्वितीयाश्रुतिरित्याह—**द्वितीयेति**। अश्वाभिधान्यङ्गत्वम्—अश्वाभिधानी-निष्ठाङ्गिता निरूपिताङ्गत्वमित्यर्थः।

**अनुवाद**—'व्रीहीन्प्रोक्षति' [ अर्थात् व्रीहि को पानी से छिड़कता है ] इस वाक्य में द्वितीया श्रुति ( व्रीहीन् ) से प्रोक्षण ( छिड़काव ) व्रीहि का अङ्ग होता है। व्रीहि का

अङ्गभूत प्रोक्षण व्रीहि के स्वरूपसिद्धि के लिये नहीं है क्योंकि प्रोक्षण के विना भी व्रीहि का स्वरूप पहले से ही सिद्ध है। परन्तु प्रोक्षण से अपूर्व की उत्पत्ति होती है अतः प्रोक्षण अपूर्व का हेतुभूत होने से व्रीहि का अङ्ग होता है। व्रीहिप्रोक्षण के विना यागानुष्ठान से अपूर्व की उत्पत्ति नहीं होती है। इसी प्रकार अवघातादि अन्य सभी अंग अपूर्व को उत्पन्न करने के कारण ही अंग माने जाते हैं। इस तरह 'इमामगृभ्णन्' मन्त्र का तात्पर्य यह है कि ( ऋतस्य ) सत्य रूपी फल से सम्बन्धित [ इमां रशनां ] इस बन्धनरज्जु को ग्रहण किया [ अगृभ्णन् ]। इस वाक्य में 'अश्वाभिधानीम्' इस द्वितीया श्रुति से यह मन्त्र 'अश्वाभिधानी' अश्वरज्जु के ग्रहण का अंग होता है।

## अर्थालोकलोचन

तृतीयाविभक्तिरूपा विनियोक्त्री श्रुति का प्रतिपादन करके ग्रन्थकार सम्प्रति द्वितीया विभक्तिरूपा श्रुति पर विचार कह रहे हैं।

यहाँ शंका हो सकती है कि ग्रन्थकार को सर्वप्रथम द्वितीया श्रुति का उदाहरण देना चाहिए, उसने तृतीया श्रुति का प्रथमतः उदाहरण क्यों दिया? इसका समाधान यह है कि अंगत्वबोधक प्रमाणों में श्रुति का स्थान सर्वप्रथम है। जहाँ उत्तर में तृतीया श्रुति का श्रवण होता है वहाँ वह उसके अंग का बोध कराते हुये साक्षात् 'अंगत्व' का ग्रहण कराती है। परन्तु द्वितीया श्रुति जिसके उत्तर में रहती है वहाँ वह सामानाधिकरण्य से उसके प्रधान का बोध कराते हुये उससे भिन्न अंग का ग्रहण कराती है। जैसे 'व्रीहीन् प्रोक्षति' इस वाक्य में 'व्रीहि' पदोत्तर श्रूयमाण द्वितीया विभक्ति व्रीहियों का उद्देश्य बोध कराते हुये व्रीहि निरूपित अङ्ग 'प्रोक्षण' का भी ज्ञान कराती है। तात्पर्य है कि व्रीहि के उद्देश्य से विधीयमान प्रोक्षण से उद्देशभूत व्रीहि का प्राधान्य समझा जाता है एवं विधेयभूत प्रोक्षण का अंगत्व बोध द्वितीया श्रुति से होता है।

इस सम्बन्ध में दूसरी समस्या यह है कि व्रीहि को प्रोक्षण का अंग क्यों न माना जाय जैसा कि 'व्रीहिभिर्यजेत' वाक्य में पहले स्वीकार किया गया है? समाधान यह है कि 'व्रीहिभिः' में तृतीयान्त श्रुति से स्पष्ट है कि यह साधन होने के कारण किसी का अंगभूत है। परन्तु द्वितीया विभक्ति में यह सिद्धान्त उपादेय नहीं है। 'व्रीहिन् प्रोक्षति' में व्रीहि में द्वितीया विभक्ति के कारण 'साध्यत्व' की प्रतीति होती है अतः साधनरूप में प्रोक्षण को स्वीकार करना होगा। इस प्रकार व्रीहि अंगी है एवं प्रोक्षण अंग।

अब इस प्रसंग में एक चर्चा और है—प्रोक्षण का प्रयोजन क्या है? कहीं ऐसा तो नहीं, कि प्रोक्षण से व्रीहि अपने स्वरूप की सिद्धि करने में समर्थ होता है। परन्तु यह समाधान भी उचित नहीं है क्योंकि प्रोक्षण के विना भी व्रीहि के स्वरूप की हानि नहीं होती, अतः प्रत्यक्षतः प्रोक्षण क्रिया का प्रयोजन दृष्टिगत नहीं होता। इस शंका का समाधान है—'अपूर्वसाधनत्वप्रयुक्तम्'।[1] भाव यह है कि व्रीहि का प्रोक्षण न करने पर

---

१. 'तच्चेति। प्रोक्षणस्य व्रीह्यङ्गत्वम् चेत्यर्थः। तच्चेत्यस्यापूर्वसाधनत्वप्रयुक्तमित्यनेनान्वयः।' कौमुदी०, पृ० ७२.

अपूर्व की उत्पत्ति न हो सकेगी।[1] सिद्धान्ततः अपूर्व विना याग से फलप्राप्ति असम्भव है। जैसे अनुपनीत ब्राह्मण बालक के द्वारा सम्पन्न वेदाध्ययन से अपूर्व की उत्पत्ति नहीं होती उसी तरह व्रीहि के प्रोक्षण के विना यागानुष्ठान से अपूर्व की उत्पत्ति नहीं होती है। इसी तरह का समाधान अन्य अपूर्व प्रयोजक अंगों के सम्बन्ध में जानना चाहिये। 'आज्यमवेक्षते' आदि उदाहरणों में 'आज्य अवेक्षण' घृतदर्शन यद्यपि दृष्टार्थ के जनक नहीं है तथापि इनके स्वरूप को देखते हुये अपूर्व प्रयोजन इन्हें भी मानना पड़ता है। इस सम्बन्ध में मेरे परमगुरु म० म० चिन्नस्वामिशास्त्रिकृत 'सारविवेचिनी' व्याख्या के निम्नलिखित वाक्य द्रष्टव्य है—

'यत्र दृष्टार्थता न सम्भवति, तादृशाङ्गेषु केवलापूर्वप्रयुक्तत्वम्। यत्र तु दृष्टार्थता, तत्र नियमापूर्वप्रयुक्तत्वमित्यर्थः।'

'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इस वाक्य में 'अश्वाभिधानीम्' पद में द्वितीया विभक्ति के प्रयोग से 'इमामगृभ्णन् रशनामृतस्य' यह मंत्र अंग है एवं अश्वाभिधानी का ग्रहण अंगी है। इस मन्त्र का उच्चारण करते हुये अध्वर्यु अश्वरशना को पकड़े ऐसा चयन प्रकरण में निर्दिष्ट है। मन्त्रोच्चारण अदृष्टार्थक है क्योंकि आपाततः दृष्टार्थ प्रयोजन नहीं है। यह भी 'अपूर्व साधनत्वप्रयुक्तभङ्गत्व' का दृष्टान्त है। इस वाक्य में 'अश्वाभिधानीम्' इस द्वितीया श्रुति से यह मन्त्र 'अश्वाभिधानी' का अङ्ग होता है।

## सप्तमीविभक्तिश्रुतेरुदाहरणम्

'यदाहवनीये जुहोति' इत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या। एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः।

### अर्थालोकः

सप्तमी श्रुतिमुदाहरति—**यदाहवनीय** इति। अत्र होमोद्देशेनाधिकरणतया आहवनीयो विधीयते। आधानसंस्कारसंस्कृतोऽग्निराहवनीयः। स च होमत्वावच्छिन्नोद्देशेन विधीयते। सामान्यविधिरयं विशेषविधीन् विहाय सर्वत्र प्रवर्तते। **अन्योऽपीति**। 'मैत्रावरुणाय दण्डं प्रयच्छति', 'अग्नेस्तृणान्यपचिनोति' इत्यादौ चतुर्थीपञ्चमीश्रुत्या विनियोगो ज्ञेय इत्यर्थः।

**अनुवादः**—यदाहवनीये जुहोति अर्थात् आहवनीय अग्नि में हवन करे, इस वाक्य में सप्तमी श्रुति से आहवनीय[2] [अग्निविशेष] को होम का अंग समझना चाहिये। इसी प्रकार विभक्ति श्रुति से अन्य विनियोग भी समझना चाहिये।

---

१. व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तिः।

२. 'गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्। पिता वा एषोऽग्नीनां यद्दक्षिणः, पुत्रो गार्हपत्यः, पौत्र आहवनीयः।'—आश्वलायन। मनुस्मृति में गुरु आहवनीय है—

'पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी॥—मनुस्मृति २.२३२.

## अर्थालोकलोचन

सप्तमी श्रुति का उदाहरण 'यदाहवनीये जुहोति' दिया गया है। यहाँ होम के उद्देश्य से आहवनीय का अधिकरण रूप में विधान किया गया है। आधान संस्कार द्वारा संस्कृत अग्नि को आहवनीय कहते हैं। यहाँ आधार आहवनीय अंग है एवं आधेय 'होम' अङ्गी। अभीतक तृतीया, द्वितीया एवं सप्तमी विभक्तियों के ही उदाहरण ग्रन्थकार ने दिये हैं। चतुर्थी, पञ्चमी, षष्ठी, विभक्तियाँ भी विनियोग विधि के प्रसंग में जहाँ प्रयुक्त होती है वहाँ अंगत्व बोध की सहायिका होती है। यथा चतुर्थी विभक्तिरूपा विनियोक्त्रीश्रुति के उदाहरण 'मैत्रावरुणाय दण्डं प्रयच्छति' में मैत्रावरुण संज्ञक ऋत्विज 'दण्डप्रदान' क्रिया का अङ्ग है। 'अग्नेः तृणान्यपचिनोति' में पञ्चम्यन्त प्रयुक्त अग्नि तृणापचयन' क्रिया का अंग है। 'यजमानस्य याज्या' में यजमान याज्या का अंग है।

## एकपदैकाभिधानश्रुत्योरुदाहरणम्

'पशुना यजेत' इत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्। 'यजेत' इत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेव। एकपदश्रुत्या च यागाङ्गत्वम्।

## अर्थालोकः

विभक्तिश्रुतिं परिसमाप्य समानाभिधानश्रुतिमुदाहरति—**पशुनेति**। अत्र 'टा' प्रत्ययेनैकत्वं पुंस्त्वं कारकञ्चेति त्रयमभिधीयते। तत्र कस्य कथमङ्गत्वमिति प्रदर्शयति—**एकत्वेति**। एकत्वं पुंस्त्वञ्च कारकं प्रत्यङ्गम्। तत्र प्रमाणं समानाभिधानश्रुतिः एकाभिधानश्रुतिरित्यर्थः। प्रत्ययार्थेषु कारकस्य प्राधान्यात् तदङ्गत्वमवशिष्टानां प्रत्ययार्थानामिति भावः। एकत्वं पुस्त्वञ्च यदि पशोरङ्गं तर्हि तत्र प्रमाणम् एकपदश्रुतिः, पशुनेत्येकेन पदेन सर्वेषामभिधानात्। 'पशुना' इत्यत्र प्रातिपदिकार्थः पशुः प्रत्ययार्थश्चैकत्वं पुंस्त्वं कारकञ्च। तत्र प्रातिपदिकार्थस्य प्राबल्यमेकत्वपुंस्त्वापेक्षया, प्रत्ययार्थकारकापेक्षया चैकत्वपुंस्त्वयोरुपसर्जनत्वम्। अतश्चैकत्वपुंस्त्वयोः पश्वङ्गत्वे एकपदश्रुतिः कारकाङ्गत्वे च तयोस्समानाभिधानश्रुतिः प्रमाणमिति सिध्यति। ( एकत्वस्य पुंस्त्वस्य च पश्वङ्गत्वे प्रयोजनमिदम्—यदेकेन पशुना पुंस्त्वावच्छिन्नेन यष्टव्यमिति। न चानेकविधाने वाक्यभेद इति वाच्यम्, एकत्वपुंस्त्वयोः पशुपरिच्छेदकत्वेन तत्परिच्छिन्नपशोर्विधानात्।) एकञ्च तत्पदञ्च तद्रूपया श्रुत्येत्यर्थः। यागाङ्गत्वं यागोपकारकत्वमित्यर्थः। अत्रैव तिङन्तस्थलमुदाहरति—यजेतेत्यादि। यजेत इत्यत्र यजतिपदात् प्रकृत्या धात्वर्थो यागः प्रत्ययेनाख्यातेन भावना ( सर्वत्र निरुपपदं भावनापदमार्थीभावनाया बोधकं वेदितव्यम् ) एकत्वसंख्या चोप-

स्थिता भवन्ति। तत्राख्यातोपस्थितयोस्संख्याभावनयोरङ्गाङ्गिभावः। संख्या अङ्गम् भावना चाङ्गी। अङ्गाङ्गिभावे प्रमाणम् समानाभिधानश्रुतिः समानेन एकेनाभिधानेन 'त' इति शब्देनोभयोरभिधीयमानत्वादिति भावः। सैव संख्या एकपदश्रुत्या यागाङ्गमित्याह—**पदश्रुत्येति।**

**अनुवाद—'पशुना यजेत'** इस उदाहरण में 'टा' रूप एकवाचक [ एकाभिधान ] श्रुति से एकत्व और पुंस्त्व ये दोनों [ करण रूप ] कारक के अंग हैं। 'पशुना' इस एक पद श्रुति से पशुरूप द्रव्य के अंग होते हैं। इसी प्रकार 'यजेत' में आख्यात [ तिङ् ] का भावना एवं एकत्व संख्या अर्थ है। अतः 'त' रूप एकाभिधानश्रुति से एकत्वसंख्या भावना का अंग होती है एवं 'यजेत' एकपदश्रुति से संख्या याग का अंग है।

## अर्थालोकलोचन

विभक्तिश्रुति के निरूपण के अनन्तर 'एकाभिधानरूपा' एवं एकपदरूपा' प्रभेद का विवेचन प्रस्तुत किया जा रहा है। ग्रन्थकार ने एकाभिधान की जगह समानाभिधान का प्रयोग किया है।

'पशुना यजेत' इस दृष्टान्त के अभिप्रेतार्थ को निम्नलिखित पट्टिका की सहायता से समझा जा सकता है—




'पशुना यजेत' इस उदाहरण में एक ही 'टा' प्रत्यय द्वारा करण कारक, संख्या एकत्व एवं लिङ्ग पुंस्त्व का बोध हो रहा है, अतः इस प्रत्यय को एकाभिधान या समानाभिधान कहा गया है। संख्या आदि प्रातिपादिकार्थ से साक्षात् सम्बन्ध होते हैं। करण एवं संख्या एक प्रत्यय से जाने जाते हैं सामान्य रूप में भी संख्या लिङ्ग आदि का अन्वय कारक से होता है इस बात को मेरे परमगुरु ने निम्नलिखित शब्दों में व्यक्त किया है—

'यद्यपि लिङ्गसंख्ययोः प्रातिपदिकार्थनिष्ठत्वेन तदङ्गत्वमेव वक्तुं युक्तम्, तथापि करणत्वस्य एकप्रत्ययगम्यत्वेन शीघ्रमुपस्थितत्वात् प्रत्ययार्थत्वेन प्रधान्याच्च पूर्वं तत्रैवान्वयः।'

—सारविवेचिनी, पृ० ३१.

'यजेत' यह तिङन्त पद एकपदरूपा विनियोक्त्रीश्रुति का दृष्टान्त है। इसके द्वारा धात्वर्थ याग एवं संख्यादि की प्रतीति होती है। यहाँ याग प्रधान या अङ्गी है और

संख्यादि इसकी अपेक्षया गौण है अतः अंग है ( द्रष्टव्य—'यजेत' इत्याख्याताभिहित-संख्यायाः एकपदश्रुत्या च यागाङ्गत्वम् )। इस प्रकरण को भलीभाँति समझने के लिये निम्नलिखित पट्टिका को पुनः प्रस्तुत किया जा रहा है।




यहाँ स्पष्ट है कि आख्यात—आर्थीभावना, संख्या एवं अन्य 'त' प्रत्यय द्वारा समानाभिहित है। 'यजेत' पद पर दृष्टिपात करने पर स्पष्ट होता है कि 'यजेत' से याग ( यज् धात्वर्थ ) संख्या, एवं आख्यातादि सभी का बोध हो रहा है अतः इन्हें 'एकपदाभिहित' और प्रकारान्तर से इसे 'एकपदरूपाश्रुतिः' कहा जा सकता है। याग एवं संख्या में याग अंगी है क्योंकि स्वर्गरूपी फलप्राप्ति का साधन है और संख्या 'एकपदश्रुति' होने से याग का अंग है। इस विवेचन को सरलतया इस प्रकार समझा जा सकता है। 'पशुना यजेत' इत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम्। तयोरेव एकत्वपुंस्त्वयोः एकपदश्रुत्या पशुद्रव्याङ्गत्वं भवति। एकत्वपुंस्त्वयोः यागाङ्गत्वं तु पशुद्वारैव, न तु एकपदश्रुत्या। एकेन 'पशुना' इति पदेन यागस्य अनभिहितत्वात्।'

## अमूर्ताया अपि भावनाङ्गत्वम्

न चामूर्तायास्तस्याः कथं भावनाङ्गत्वमिति वाच्यम्। कर्तृपरिच्छेद-द्वारा तदुपपत्तेः। कर्त्ता चाक्षेपलभ्यः। आख्यातेन हि भावनोच्यते। सा च कर्तारं विनानुपपन्नेति तमाक्षिपति।

## अर्थालोकः

ननु एकत्वं पुंस्त्वं वा कथं भावनाया यागस्य वा उपकारकं भवितुमर्हति? भावना तु प्रवृत्तिरूपा क्रिया यत्नात्मिका, यागस्तु त्यागात्मकः तत्रैकत्वं वा पुस्त्वं वा किमुपकुर्यात्? तयोरमूर्तत्वादित्याशङ्क्य दूषयति—**न चेत्यादिना**। भावनापदं यागस्याप्युपलक्षकम्। दूषणे हेतुं निर्दिशति—**कर्तृपरिच्छेदेति**। साक्षादेकत्वपुंस्त्वयोः यागभावनोपकारकत्वाभावेऽपि कर्तृपरिच्छेदद्वारा—कर्तुर्देवदत्तादेः परिच्छेदः विशेषणं तद्द्वारा तयोरुपकारकत्वमुपपन्नमित्यर्थः। ननु 'यजेत' इत्यत्र धात्वर्थो यागः, प्रत्ययार्थाश्च भावना पुंस्त्वैकत्वरूपा उपस्थिताः, न त्वत्र कर्तुरुपस्थितिः। तत्कथं कर्तृपरिच्छेदद्वारा तयोरुपकारकत्व-

मित्यत्राह—**कर्ता चेति । आक्षेपलभ्यः** आक्षपेण—अनुमानेन अर्थापत्तिप्रमाणेन वा लभ्यः प्राप्य इत्यर्थः । आक्षिप्तो यः कर्ता तद्विशेषणतया एकत्वपुंस्त्वयोरुपकारकत्वम् एकेन पुंसा यष्टव्यमिति ।

'यजेत' इत्यत्र मीमांसकमतेन 'त' प्रत्ययवाच्या भावना, वैयाकरणमतेन प्रत्ययवाच्यः कर्ता । मीमांसकवैयाकरणयोरस्मिन् विषये विवादः । आक्षेपलभ्यः कर्तेति मीमांसकः, आख्यातवाच्यस्स इति वैयाकरणो वदति । तत्र मीमांसकमतमुत्थापयति—**आख्यातेनेति । उच्यते**—अभिधया प्रतिपाद्यते । अभिधयोपस्थितभावनया कर्ताऽऽक्षिप्यते । तत्र प्रमाणं दर्शयति—**साचेत्यादिना । सा च**-भावना च । भावना हि प्रवृत्तिरूपेति प्राक् साधितम् । प्रवृत्तिश्च चेतनाश्रिता । यमाश्रित्य प्रवृत्तिरुपजायते स तस्याः कर्ता । विना कर्तारं प्रवृत्तिरनुपपन्ना । अतोऽनुपपन्ना सती भावना प्रवृत्तिरूपा कर्तारमाक्षिपतीत्याह—**विनाकर्तारमिति ।** अनेनार्थापत्तिरनुमानं वा प्रमाणं दर्शितम् ।

## विशेषार्थः

नन्वाक्षेपेण कर्तुर्लाभापेक्षया आख्यतवाच्यत्वं तस्य स्वीकारे लाघवमिति चेन्न; अनन्यलभ्यश्शब्दार्थ इति न्यायात् । स एव शब्दस्यार्थस्समुचितो योऽन्यलभ्यो न भवति । न चात्र विनिगमनाविरहः, यथा हि भावना कर्तारं विनानुपपन्ना, न तथा करणादिकारकान्तरैर्विनानुपपन्ना, तिष्ठति चलति आस्ते स्नाति शेत इत्यादिषु भावनया न करणादीन्याक्षिप्यन्ते, नियतसम्बन्धाभावात् । अर्थात् करणादिकारकान्तरसम्बन्धेन विना भावना यत्र विद्यते तिष्ठतीत्यादिषु तत्र तस्याः कर्त्रा संबन्धो नियतः । अतो भावनया कर्तुरेवाक्षेपो न कारकान्तराणाम् । एतेन तृतीयादिविभक्तीनां करणादिवाचकत्वमपि सिध्यति । एवञ्चान्यलभ्यत्वं कर्तुरेव, न करणादीनामिति कर्तुरन्यलभ्यत्वेन नाख्यातवाच्यत्वं तस्येत्यङ्गीकर्तव्यम् । ननु 'यजेत' इत्यादौ आख्यातवाच्यः कर्ता यदि न स्यात् तर्हि संख्याया एकत्वादेरन्वयः कर्त्रा कथं स्यात् ? संख्या तु 'त' इति प्रत्ययोक्तत्वेन शाब्दी, कर्ता तु न तेनोच्यते । कथं तत्र संख्याया अन्वयो भवतु 'न हि शाब्दमशाब्देनान्वेति' इति न्यायादिति चेदत्र ब्रूमः—कर्तुराक्षेपलभ्यत्वेऽपि न तस्य शाब्दत्वहानिः । 'गङ्गायां घोषः' इत्यादौ तीरस्य गङ्गापदशक्यत्वाभावेऽपि तीरे घोषादेरन्वयदर्शनात् । न खलु यद् यद् वाच्यं तत्तदेव शाब्दमिति युक्तम्, लक्षणादिना प्रतीयमानस्यापि शाब्दत्वं न व्यभिचरति । अभिधातिरिक्तप्रमाणान्तरैः प्रतीयमानेषु शाब्दत्वाभावे लाक्षणिकवैयञ्जनिकपदार्थानां शाब्दबोध भानं कथं स्यात् ? यथाभिधेयाश्शाब्दबोधे

भासन्ते शाब्दत्वात् तथा लक्ष्या व्यङ्ग्या अपि पदार्था भासन्ते शाब्दत्वादेव। अतो भावनाक्षिप्तकर्त्रा सह संख्यादीनामन्वये 'न हि शाब्दमशाब्देनान्वेति' इति न्यायोल्लङ्घस्य नावसरः। न च 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति कूर्त्र पदानुषङ्गयुक्तेनानुशासनेन विरोधः, नानेनानुशासनेन कर्त्रर्थे कर्माद्यर्थे च लकारा विधीयन्ते, किन्तु कर्तृगतैकत्वे विवक्षिते एकवचनात्मको लकारः, द्वित्वे विवक्षिते द्विवचनात्मकः बहुत्वे विवक्षिते बहुवचनात्मक इत्यर्थेऽनुशासनस्य तात्पर्यात्, 'द्वयेकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्याभ्यां सूत्राभ्यां 'लः कर्मणि' इत्यस्यैकवाक्यत्वात्। एतेन कर्तुरनभिधेयत्वे 'अनभिहिते' इत्यधिकृत्य प्रवृत्तस्य 'कर्तृकरणयोस्तृतीया' इत्यनुशासनस्य प्रसङ्गो निरस्तः, तत्रापि कर्तृगतसंख्यायामनभिहितायां तृतीयेत्यर्थस्वीकारात्। 'देवदत्तः पचति' इत्यत्राख्यातेन कर्तर्यनभिहितेऽपि तद्गतसंख्याया अभिहितत्वात्तृतीयाया न प्रसक्तिः। अतः कर्तुराक्षेपलभ्यत्वमेव स्वीकर्तव्यम्।

**अनुवाद**—यह भी कथन ठीक नहीं है कि 'वह अमूर्त संख्या भावना का अङ्ग कैसे हो सकती है। कर्त्ता के व्यावर्तक होने से संख्या भावना या याग का अंग हो सकती है। कर्त्ता का आक्षेप होता है। आख्यात से भावना का बोध होता है। भावना कर्त्ता के अभाव में सम्पन्न नहीं हो सकती अतः भावना द्वारा कर्त्ता का आक्षेप होता है।

## अर्थालोकलोचन

इससे पूर्व यह प्रतिपादित किया गया है कि 'समानाभिधानश्रुति' से संख्या भावना का अंग है एवं 'एकपदश्रुति' से याग का अंग है। परन्तु शंका यह है कि संख्या गुण होने से अमूर्त है अतः यह भावना एवं याग का अंग कैसे हो सकती है। इस तरह की शंका का उत्तर 'अरुणया पिङ्गाक्ष्या' आदि दृष्टान्त के निरूपण के समय दिया जा चुका है। अतः प्रकृत सन्दर्भ में भी 'कर्तृपरिच्छेद' द्वारा यह निर्णीत हो जाता है कि संख्या भावना एवं याग का अङ्ग है।

कर्त्ता की अनुपलब्धि में उसकी प्राप्ति कैसे सम्भव है? इसका उत्तर है "कर्त्ता च··· आक्षिपति। भाव यह है कि—आक्षेपलभ्यः का अर्थ है 'आक्षेपः अनुमानमर्थापत्तिर्वा। तादृशानुमानेन लभ्योऽनुमेयः कल्प्यो वा'। आख्यात पद आर्थीभावना को द्योतित करता है। भावना एक व्यापार है और कोई भी व्यापार कर्त्ता के विना सम्भव नहीं है। अतः कर्त्ता का अनुमान किया जाता है। इस प्रसङ्ग में द्रष्टव्य यह है कि इन पंक्तियों में मीमांसक ने वैयाकरण के सिद्धान्त का खण्डन किया है अतः विषय की गरिमा की दृष्टि से इस प्रसङ्ग को हम अधिक विश्लेषणात्मक ढंग से समझाने का प्रयास कर रहे हैं। इस तथ्य को अर्थालोकटीका में निम्नलिखित ढंग से स्पष्ट किया है :—

**'यजेत इत्यत्र मीमांसकमतेन 'त' प्रत्ययवाच्या भावना, वैयाकरणमतेन प्रत्ययवाच्यः कर्त्ता। मीमांसकवैयाकरणयोरस्मिन् विषये विवादः। आक्षेपलभ्यः कर्त्तेति मीमांसकः, आख्यातवाच्यस्स इति वैयाकरणो वदति।'**

यहाँ यह पूर्वपक्ष होता है कि 'पशुना यजेत' यहाँ पर संख्या भावना अथवा याग का अंग नहीं हो सकती क्योंकि संख्या गुण होने से अमूर्त है और अमूर्त का वस्तुतः अंग भी नहीं होता। मूर्त व्रीहि आदि द्रव्य द्रव्य ही अंग होता है। इसका समाधान करते हुये कहा गया है कि कर्त्ता में अन्वय द्वारा संख्या भावना या याग का अंग होना सम्भव है। प्रश्न यह भी हो सकता है कि संख्या को आख्यातार्थ कर्त्ता का ही अंग मानना उचित है, आख्यात का अर्थ कर्ता ही है भावना नहीं है क्योंकि कर्त्ता के व्यापार को ही भावना कहते हैं। वस्तुतः धातु से ही कर्त्ता के व्यापार का लाभ हो सकता है। इस विषय पर भट्टोजी दीक्षित का मत है कि—**'फलव्यापारयोर्धातुराश्रये तु तिङ् स्मृतः'**। इसका भावार्थ समझाते हुये भी कौण्डभट्ट ने अपने ग्रन्थ वैयाकरणभूषणसार में लिखा है कि—विक्लित्यादि रूप फल ( सीझना ) और भावना रूप व्यापार ये दोनों धातु के अर्थ हैं व्यापार का आश्रय कर्त्ता एवं फल का आश्रय कर्म, ये दोनों ही तिङ् अर्थात् आख्यातार्थ है। वैयाकरण का मत है कि 'लः कर्मणि च भावे चाकर्मकेभ्यः' इस सूत्र को प्रमाण मानकर कर्त्ता को आख्यात का अर्थ माना जा सकता है। इस सूत्र में 'कर्त्तरि कृत्'' इस सूत्र से कर्तरि पद का अपकर्ष होता है। अतः सूत्रार्थ होगा—कि 'अकर्मक धातु से कर्ता और भाव में एवं सकर्मक धातु से कर्म और कर्त्ता में 'ल' प्रत्यय हो। जिस प्रत्यय का जिस अर्थ में विधान किया जाता है उस प्रत्यय का वही अर्थ होता है। स्थानी के अर्थ को कहने में जो समर्थ हो उसी को आदेश कहते है। अतः 'ल' के स्थान में आख्यात आया है इसलिये आख्यात का अर्थ कर्त्ता ही है अतः संख्या एकाभिधानश्रुति से कर्त्ता का ही अंग है।

मीमांसक वैयाकरण मत का खण्डन करते हुए कहता है कि **भावना ही आख्यातार्थ** है, कर्त्ता आख्यातार्थ नहीं है यह तो आक्षेपलभ्य होता है। आक्षेप शब्द का अर्थ है अनुमान या अर्थापत्ति। इसलिये कर्त्ता का अनुमान अथवा अर्थापत्ति से लाभ होगा। 'भावना क्वचिदाश्रिता व्यापारविशेषत्वात्' इस अनुमान द्वारा भावना में क्वचिदाश्रितत्व सिद्ध होने से भावना कर्ता ही में आश्रित हो सकती है। अतः कर्त्ता 'आक्षेपलभ्य हो गया। यह सर्वसम्मत है जिसके विना जो अनुपपन्न हो उससे उसका 'आक्षेप' होता है। यथा 'पीनो देवदत्तः दिवा न भुङ्क्ते' में पीनत्व भोजन विना अनुपपन्न है अतः रात्रि भोजन की कल्पना की जाती है। इस प्रकार प्रस्तुत सन्दर्भ में भी कर्त्ता के बिना भावना सम्भव नहीं है अतः भावना से कर्त्ता का आक्षेप होता है। भावना से किसी अचेतन का आक्षेप भी हो सकता है ऐसी शङ्का करना भी व्यर्थ है क्योंकि वृतिरूप भावना अचेतन का धर्म नहीं हैं अतः चेतन का आक्षेप हो सकता, अचेतन का नहीं। शब्द से उपस्थित संख्या का शब्द से अनुपस्थित कर्ता में अन्वय कैसे होगा ? यह प्रश्न भी समीचीन नहीं है क्योंकि कर्ता का कृतिमान् अर्थ है एवं 'आकृत्यधिकरण' न्याय से जैसे घटादि शब्द का घटत्व जाति अर्थ स्वीकार किया गया है एवं व्यक्ति का आक्षेप करते हैं उसी प्रकार भावनारूप कृति में ही आख्यात की शक्ति स्वीकार करने से शक्यतावच्छेदक (धर्म) कर्तृत्व स्वरूप कृति अनेक हैं अतः शक्यतावच्छेदक में गौरव होगा परन्तु कृति में शक्ति मानने से शक्यतावच्छेदक कृतित्व होगा और कृतित्व जाति होने से एक है अतः शक्यतावच्छेदक में लाघव होगा।

अतः भावना ही आख्यातार्थ है। किञ्च भावना को आख्यातार्थ मानने पर 'लः कर्मणि' सूत्र प्रतिपादित सिद्धान्त से विरोध नहीं होगा, क्योंकि इस सूत्र में कर्तृकर्म पद का भाव प्रधान निर्देश ( जातिशक्ति ) से कर्तृत्व और कर्मत्व ही अर्थ होगा और 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्' इन सूत्रों के साथ एक वाक्यता से 'लः कर्मणि च भावे चाकर्मकेभ्यः' इस सूत्र का एक कर्त्ता रहे तो एकवचनात्मक लकार हो और दो कर्त्ता रहे तो द्विवचनात्मक लकार हो इत्यादि अर्थ होता है। आख्यातार्थ भावना मानने से 'देवदत्तेन पचति' इत्यादि प्रयोग होने लगेगा क्योंकि तिङ्, कृत्, तद्धित और समास से कर्त्ता अनुक्त रहने पर तृतीया विभक्ति होती है इसलिये प्रकृत में भी आख्यात से कर्त्ता अनुक्त रहने से तृतीया ही होगी इस प्रकार की शङ्का भी निरवकाश है क्योंकि कर्तृवृत्ति संख्या अनुक्त हो तो तृतीया हो, यही 'कर्तृकरणयोस्तृतीया' इस सूत्र का अर्थ है। प्रकृत में देवदत्त गत एकत्व संख्या तिङ् से उक्त है इसलिये देवदत्त शब्द से तृतीया नहीं होगी। 'कर्तरि कृत्' इस सूत्र से कर्तृपद का कर्त्ता ही अर्थ है इसलिये कृत् प्रत्यय का कर्त्ता ही अर्थ होगा। अतः 'पाचको देवदत्तः' इत्यादि प्रयोग में समानविभक्तित्व की सिद्धि हुई। यद्यपि 'कर्त्तरि कृत्' इस सूत्र से कर्तृपदका अपकर्ष 'लः कर्मणि' सूत्र से होता है तथा शब्दाधिकार मानकर पूर्व सूत्र में कर्त्तृत्व और उत्तर सूत्र में कर्त्ता अर्थ करेंगे। अर्थाधिकार में ही यह नियम है कि दोनों सूत्रों में अनुकृतिसूचक पद का समान अर्थ हो। अत एव 'अर्थवदधातु' और 'कृत्तद्धित समासाश्च' इन दोनों सूत्रों में विभिन्न अर्थतत्त्व को वैयाकरण मानते हैं। अतः यह सिद्धान्त हुआ कि धातु का अर्थ फलमात्र है और आख्यात का अर्थ भावना ही है।' [ द्रष्टव्य दीपिकाव्याख्या, पृ० २२-२४ ]

## श्रुतिः

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबला। लिङ्गादिषु न प्रत्यक्षो विनियोजकः शब्दोऽस्ति, किंतु कल्प्यः। यावच्च तैर्विनियोजकशब्दः कल्प्यते, तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तेर्व्याहतत्वात्। अत एवैन्द्रचा लिङ्गान्नेन्द्रोपस्थानार्थत्वम्। किंतु 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते' ( मै० सं० ३. २. ४ ) इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्योपस्थानार्थत्वम्।

## अर्थालोकः

एवं प्रदर्शितायाः श्रुतेः लिङ्गादिप्रमाणेभ्यः प्राबल्यं निरूपयति—**सेयमित्यादिना**। प्राबल्ये कारणमाह—**लिङ्गादिष्विति**। श्रुतिप्रमाणे शेषशेषिभावबोधकशब्दो यथा विद्यते, न तथा लिङ्गादिषु। 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादौ तृतीयाविभक्तिः प्रत्यक्षा, यया दधिहोमयोः पयोहोमयोश्शेषशेषिभावः बोध्यते, तथा लिङ्गादिषु नास्तीत्यर्थः। **किन्तु कल्प्य** इति। लिङ्गादिषु तादृशो विनियोजकश्शब्दः कल्पनीयो भवति। भवतु कल्पनम् तावता का हानिः?

प्रत्यक्षविनियोजकशब्देन यथा विनियोगः, तथा कल्पितशब्देनापि भवतु विनियोग इत्यत आह—**यावच्चेत्यादिना**। लिङ्गं नाम शब्दगतं सामर्थ्यम्। तेन च सामर्थ्येनार्थावबोधः। अर्थावबोधेन शेषशेषिभावावगमः, तादृशशब्दस्य तत्राभावात्। तादृशशब्दस्य यावत् कल्पनं क्रियते तावत् प्रत्यक्षा श्रुतिः पदार्थं विनियुङ्क्ते। तेन किमित्याह—**कल्पकत्वशक्तेरिति**। व्याहतत्वात् प्रतिबद्धत्वादित्यर्थः। प्रत्यक्षश्रुत्या विनियोगे जाते सामर्थ्यस्य कल्पकत्वशक्तिर्विहन्यत इति भावः। अत्रार्थे श्रुतिं उदाहरति—**अतएवेत्यादिना**। ऐन्द्रचा इन्द्रो देवता यया ऋचा प्रकाश्यते सा ऋक् ऐन्द्री तयेत्यर्थः। सा च ऋक्—

'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते' ॥ इति।

हे इन्द्र ! त्वं कदाचन कदाचिदपि न स्तरीरसि न हिंसको भवसि, किन्तु दाशुषे हविर्दत्तवते यजमानाय फलदानाय उपोपेन्नु यजमानस्यात्यन्तसमीप एव सश्चसि गच्छसि। हे मघवन् भूय इन्नु पुनरेव देवस्य तव दानं देयं हविः पृच्यते संबध्यते। यजमानेन दीयमानं हविस्संबध्यत इत्यर्थः। मन्त्रस्यास्येन्द्रप्रकाशने सामर्थ्यं स्पष्टम्। किन्त्वनेन मन्त्रेण किं कर्तव्यमिति न ज्ञायते। मन्त्रगतसामर्थ्यात् यतोऽयं मन्त्र इन्द्रं प्रकाशयति, अत इन्द्रंदेवताकं किञ्चित्कर्तव्यमिति कल्पनीयम्। विनियोजकवाक्यात् कर्तव्यविशेषावगतिः। स च विशेष उवस्थानरूपः। उपस्थानं नाम मन्त्राभिधानपूर्वकमुत्थानम् समीपगमनं वा। एवञ्च मन्त्रगतेन्द्रप्रकाशनरूपलिङ्गात् अनेन मन्त्रेणेन्द्रोपस्थानं कुर्यादिति कल्पनानन्तरं मन्त्रस्येन्द्रोपस्थानाङ्गत्वं सिध्येत्। तन्न संभवतीत्याह—**किन्त्वित्यादिना**। विनियोजकं वाक्यम्—**ऐन्द्रचेति**। ऐन्द्रचा—इन्द्रदेवताप्रकाशिकया ऋचा गार्हपत्यं—तदभिधेयमग्निम् उपतिष्ठते—ऐन्द्रीमन्त्रोच्चारणेन समीपं गच्छेत् उत्तिष्ठेद्वेति विनियोजकवाक्यस्यार्थः। मन्त्रगतसामर्थ्येनेन्द्रोपस्थानं कर्तव्यमिति गम्यते, विधिना तु गार्हपत्योपस्थानमिति। मन्त्रस्य गार्हपत्योपस्थानार्थत्वे प्रमाणं दर्शयति—**द्वितीयेति**। गार्हपत्यपदोत्तरं श्रूयमाणा द्वितीया विभक्तिरित्यर्थः। द्वितीया चेयं गार्हपत्यनिष्ठं प्राधान्यमवगमयन्ती तत्कर्मकोपस्थाने मन्त्रस्याङ्गत्वं बोधयति। इन्द्रोपस्थानाङ्गत्वञ्च मन्त्रस्य मन्त्रगतसामर्थ्यात् उन्नेयम्—अनेन मन्त्रेणेन्द्रमुपतिष्ठेत इति। तत्र गार्हपत्यशब्दस्येन्द्रोऽर्थस्स्वीकर्तव्यो लक्षणया। गार्हपत्यशब्दस्तु—आधानसिद्धेषु त्रिष्वग्निष्वलौकिकेष्वन्यतमे रूढः। रूढिं परित्यज्य लक्षणया इन्द्रोऽर्थः कल्पनीयः। तदनुसारेण—'इन्द्रमुपतिष्ठेत' इति श्रुतिः कल्पनीया। ततः पूर्वमेव प्रत्यक्षया

क्लृप्तया 'गार्हपत्यम्' इति द्वितीयाश्रुत्या गार्हपत्याङ्गत्वं मन्त्रस्यावगतमिति मन्त्रगतसामर्थ्यस्य कल्पकत्वशक्तिरवरुध्यत इति भावः । अतो लिङ्गाच्छ्रुतेः प्राबल्यम् ।

**अनुवाद**—यह श्रुति लिङ्गादि से प्रबल है क्योंकि लिङ्गादि में विनियोजक बोधक शब्द [ अंग के साथ प्रधान का सम्बन्ध बोधक शब्द ] साक्षात् श्रुत नहीं रहता है किन्तु ( अर्थप्रकाश सामर्थ्यरूप लिङ्ग से ) कल्पित होता है। लिङ्गादि प्रमाणों से जब तक प्रत्यक्ष विनियोजक शब्द अर्थात् श्रुति की कल्पना की जायगी तब तक प्रत्यक्ष श्रुति से [ साक्षात् ] विनियोग हो जायगा अतः लिंगादि की कल्पकत्वशक्ति[1] व्याहत अर्थात् खण्डित या नष्ट हो जाती है। अतः 'कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे' यह ऐन्द्री ऋचा इन्द्रोपस्थान का अंग नहीं होती।[2] किन्तु 'ऐन्द्रया गार्हपत्यमुतिष्ठते' इस वाक्य में गार्हपत्यम्' इस द्वितीया श्रुति से यह मन्त्र गार्हपत्योपस्थान का अंग होता है।

## अर्थालोकलोचन

श्रुति का विशद विवेचन इससे पूर्व किया गया है। अब लिङ्गादि प्रमाणों से उसका प्राबल्य प्रदर्शित करने के लिये ग्रन्थकार प्रवृत्त हो रहा है। 'शेष' लक्षण के प्रसङ्ग में 'शेषशेषिभावबोधक' श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान एवं समाख्या ये विनियोग के कारण होते हैं ऐसा कहा गया हैं। अब इनमें कौन बलवान् है, कौन दुर्बल, इसका विचार किया जा रहा है। एक ही विषय में श्रुति, लिङ्ग आदि किन्हीं दो के मध्य विनियोग सम्बन्धित विरोध उपस्थित होने पर 'पर' की अपेक्षा 'पूर्व' के प्रबल होने पर 'पर' का बाध हो जाता है। अतः श्रुति के साथ लिङ्ग, वाक्य, प्रकरण, स्थान एवं समाख्या के विरोध में श्रुति प्रबल होती है। इस प्रकार लिङ्ग के साथ वाक्य, प्रकरण, स्थान और समाख्या के विरोध में लिङ्ग ही प्रबल होता है और लिङ्ग के अनुसार अङ्ग का निरूपण होता है। इसी तरह वाक्य के साथ प्रकरण आदि के विरोध में वाक्य, प्रकरण के साथ स्थान आदि के विरोध में प्रकरण, स्थान और समाख्या के विरोध में स्थान प्रबल होते हैं। महर्षि जैमिनि ने **"श्रुतिलिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यम् अर्थविप्रकर्षात्'**[3] ३. ३. १४. सूत्र में इस मान्यता का विशद निरूपण किया है। यद्यपि सूत्र में 'पारदौर्बल्यम्' ऐसा कहा गया है तथापि इससे पूर्व का प्रबल होना ही विवक्षित है। इसमें हेतु **'अर्थ विप्रकर्षात्'** है। क्योंकि श्रुत्यर्थ से लिङ् आदि विप्रकृष्ट है। वस्तुतः विधायकता शक्ति, एकमात्र श्रुति में ही है अन्य किसी में नहीं। लिङ् के श्रुति-कल्पना पूर्वक अङ्ग के बोधक होने से वह दुर्बल होता है और श्रुति प्रबल है। संक्षेपतः श्रुति, लिङ्ग, वाक्य, स्थान आदि में से श्रुति सदैव बाधिका है और समाख्या सदैव बाधित

---

१. विनियोजकशब्दद्वारा विनियोगसामर्थ्यं ।

२. 'नेन्द्र सश्चसि' इस इन्द्र प्रकाशन रूप सामर्थ्य लिंग से अभिप्राय है।

३. अर्थविप्रकर्षात् अर्थात् विनियोगरूपात् प्रयोजनात् विप्रकर्षः दूरस्थत्वं तस्मात् ।

है। इस तरह लिङ्ग, वाक्य आदि कभी बाध्य और कभी बाधक होते हैं। अत एव कुमारिल भट्ट ने कहा है—

'बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥'

लिङ्ग की अपेक्षा श्रुति का प्राबल्य निरूपण करने के लिये 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' (मै० स० ३-२-४) यह उदाहरण प्रस्तुत किया गया है। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यादि मन्त्र ऋग्वेद (८. ५१. ७) में उपलब्ध होता है। ऋचा में 'इन्द्र' पद के प्रयोग से इसका नाम 'ऐन्द्री' है। परन्तु इस मन्त्र का विनियोग कहाँ किया जाय, यह ज्ञात नहीं है। मन्त्रगत सामर्थ्य से चूँकि वह मन्त्र इन्द्र का प्रकाशन करता है अतः इन्द्र देवता सम्बन्धित कुछ कर्त्तव्य होगा, ऐसी कल्पना करनी पड़ती है। वस्तुतः उक्त मन्त्र के अनुसार ऐसा बोध होता है कि यह जिस कर्म का साधन अर्थात् अङ्ग है इन्द्र उसमें प्रधान है। इसे ही लिङ्ग विनियोग कहा जाता है। इसके अनन्तर उक्त मन्त्र के लिङ्ग के अनुसार वह इन्द्र देवता की उपस्थान रूपी क्रिया का अङ्ग होता है।

'गार्हपत्यमुपतिष्ठते' इस श्रुतिवाक्य में द्वितीयान्त 'गार्हपत्यं' यह शब्द गार्हपत्य के प्राधान्य को सूचित करता है। प्रधान होने से उसकी क्रिया अवश्य होती है। क्योंकि गुण (अप्रधान) न रहने से कोई प्रधान नहीं हो सकता अतः उससे किसी क्रिया के प्रति गार्हपत्य के प्राधान्य का बोध होता है। अतः 'ऐन्द्र्या उपतिष्ठते'[1] इस अंश से ऐन्द्र मन्त्र द्वारा गार्हपत्य की उपस्थान रूपी क्रिया करे-ऐसा अर्थ होता है। इस प्रकार श्रुति एवं लिङ्ग के विनियोग में श्रुति और लिङ्ग दोनों ही प्रमाण हैं अतः दोनों का ही विनियोग होना चाहिए अर्थात् उक्त मन्त्र या तो लिङ्ग के अनुसार गार्हपत्य का अङ्ग है अथवा श्रुति के अनुसार इन्द्र का अङ्ग है। विकल्प से यह भी माना जा सकता है कि श्रुति एवं लिङ्ग का समुच्चय ही अङ्ग है क्योंकि इन्द्र और गार्हपत्य दोनों ही प्रधान हैं। पूर्व पक्ष का यह भी कहना है कि यहाँ लिङ्ग से श्रुति ही बाधित है क्योंकि जिस विषय में जिसका सामर्थ्य नहीं है उस विषय में उसका विनियोग नहीं किया जाता है। अन्यथा 'वह्निना सिञ्चेत्, 'वारिणा दहेत्' इत्यादि विनियोग भी होने लगेंगे। कहा भी गया है—

'वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते।'

अर्थात् वस्तुशक्ति के अनुसार शब्द की प्रवृत्ति होती है। विनियोग की जानेवाली वस्तु के अनुसार श्रुति उसे नियुक्त करती है। यहाँ श्रुति लिङ्ग पर आश्रित है। अतः श्रुति और लिङ्ग के बीच विरोध में उपजीवक श्रुति दुर्बल पड़ जाती है और उपजीव्य लिङ्ग प्रबल हो जाता है। यह पूर्वपक्ष का आशय है।

सिद्धान्त पक्ष के अनुसार श्रुति और लिङ्ग के विरोध में लिङ्ग का ही बाध होता है क्योंकि 'अर्थ विप्रकर्षात् के अनुसार श्रुति साक्षात् विनियोजिका होती है अतः शीघ्र प्रवृत्त होती है। लिङ्ग कल्पना के द्वारा विनियोग करता है इसलिये विलम्ब से प्रवृत्त होता है। अतः लिङ्ग के द्वारा विनियोग किये जाने से पहले प्रत्यक्ष श्रुति के द्वारा विनियोग किये

१. उपस्थानं नाम मन्त्राभिधानपूर्वकमुत्थानम् समीपगमनम् वा।

जाने से लिङ्ग कल्पित श्रुति निर्विषय होकर बाधित हो जाती है। अतएव वार्त्तिककार कुमारिल भट्ट ने कहा है—

'यथा शीघ्रप्रवृत्तत्वाद्लिङ्गादेर्बाधिका श्रुतिः।
तथैव विनियोगेपि सैव पूर्वं प्रवर्त्तते॥

शास्त्रदीपिकाकार पार्थसारथि मिश्र का भी मत है—

'यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते।
तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत्॥
मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छब्दं निरूप्य च।
मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना॥
श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते।
निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना॥
तेन शीघ्रप्रवर्त्तिन्या श्रुत्या लिङ्गस्य बाधनम्।
प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्॥

अतः ऐन्द्र मन्त्र में मुख्य इन्द्र के सदृश ही गार्हपत्य प्रकाशन सामर्थ्य है इसलिए सामर्थ्याभावरूप प्रतिबन्धक नहीं रहने से द्वितीया श्रुति से शीघ्र ही गार्हपत्य का विनियोग होगा अर्थात् ऐन्द्र मन्त्र गार्हपत्य अग्नि के उपस्थापन का ही अंग है इन्द्र प्रकाशन सामर्थ्य रूप लिङ्ग तो विलम्ब से विनियोग करेगा। अतः लिङ्ग से श्रुति प्रबल है।

इस सम्बन्ध में यह भी ध्यातव्य है कि लिङ्ग से विनियोग बोध होने में चार प्रकार के व्यापारों की अपेक्षा होती है। रामेश्वर भिक्षु ने कौमुदी टीका में इनका विवेचन निम्न प्रकार से किया है :--

१. **स्वाभिधेयार्थप्रतिपादन**—सबसे पहले 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इस मन्त्र के पद-पदार्थ का ज्ञान होता है।

२. **वस्तुप्रकाशन सामर्थ्य निरूपण**—मन्त्र के पद-पदार्थ ज्ञान के अनन्तर 'इन्द्र' पद से इस मन्त्र का 'इन्द्र परक' होना विदित होता है।

३. **श्रुतिकल्पना**—यह मन्त्र इन्द्र परक है ऐसा ज्ञान होने से 'अनेन मन्त्रेण इन्द्रमुपतिष्ठते' इस प्रकार श्रुति की कल्पना करनी होगी।

४. **विनियोग**—'ऐन्द्रमंत्रेण इन्द्रमुपतिष्ठेत' ऐन्द्र मन्त्र से इन्द्र की पूजा करे, ऐसा विनियोग होगा।[1] परन्तु श्रुति में केवल 'स्वाभिधेयार्थ प्रतिपादन' एवं विनियोग की ही अपेक्षा होती है अतः श्रुति की प्रबलता असन्दिग्ध है।[2]

---

१. 'गार्हपत्योपस्थाने विनियुज्यमानो मन्त्रोऽर्थं प्रकाशयन् मुख्यमिन्द्रं प्रकाशयति। मुख्यश्चेन्द्रः स्वर्गाधिपतिः सहस्राक्षः, तत्र इन्द्रशब्दस्य रूढत्वात्। गौणस्तु इन्द्रो गार्हपत्यः। तस्य ऐश्वर्यगुणयोगेन यज्ञसाधनत्वेन वा मुख्येन्द्रसदृशत्वात्।'

—जैमिनीयन्यायमालाविस्तार १२२–१२३.

१. 'श्रुतिराशु विनियुङ्क्ते। लिङ्गं तु विलम्बेन विनियुङ्क्ते। तथाहि 'तत्र प्रथमं मन्त्रपदानि स्वाभिधेयार्थं प्रतिपादयन्ति, तत ऊर्ध्वं मन्त्रस्य वस्तु प्रकाशनसामर्थ्य

## लिङ्गस्वरूपनिरूपणम्

शब्दसामर्थ्यं लिङ्गम्। यथाहुः—'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते' इति। सामर्थ्यं रूढिरेव, तेन समाख्यातोऽस्या भेदः। यौगिकशब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दस्य भिन्नत्वात्। तेन, 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य कुशलवनाङ्गत्वं न तूलपादिलवनाङ्गत्वम् तस्य। 'बर्हिर्दामि' इति लिङ्गात् तल्लवनं प्रकाशयितुं समर्थत्वात्। एवमन्यत्रापि लिङ्गाद् विनियोगो द्रष्टव्यः।

### अर्थालोकः

श्रुतिं तद्गतप्राबल्यञ्च निरूप्य द्वितीयं प्रमाणं लिङ्गं निरूपयितुमुपक्रमते—**शब्देति**। सामर्थ्यम्-शक्तिरित्यर्थः। अत्र वृद्धसंमतिमाह—**सामर्थ्यमिति**। सर्वभावानामिति पाठः। तेन शब्दगतं सामर्थ्यम् अर्थगतञ्च तदिति सिध्यति। तत्रार्थगतसामर्थ्यं प्रथमाध्यायान्ते सामर्थ्याधिकरणे 'स्रुवेणावद्यति' 'स्वधितिनावद्यति' इत्यादिषु प्रदर्शितम्। सम्प्रति तृतीयाध्याये शब्दगतं सामर्थ्यं निरूप्यत इति विवेको बोध्यः। शब्दः स्वगतसामर्थ्येनार्थमवबोधयति। अर्थश्च मुख्योऽपि भवति गौणोऽपि। तत्र कीदृशं सामर्थ्यमत्राभिप्रेतमित्यत्राह—**रूढिरेव**। मुख्यमेवार्थं सामर्थ्यं गमयतीत्यर्थः। एवकारव्यावर्त्यं दर्शयति—**तेनेति**। समाख्या संज्ञा। तत्रापि सामर्थ्यं रूढ्यात्मकमेव दृश्यते। कथं लिङ्गात् समाख्याया भेद इत्यत्र हेतुमाह—यौगिकेति। समाख्या हि यौगिकशब्दः। यथा—आध्वर्यवम्, औद्गात्रम्, पौरोडाशिकमित्यादि। लिङ्गन्तु रूढ्यात्मकमिति तयोर्भेद इति भावः। एवं भेदे फलितमाह—**तेनेति**। 'बर्हिर्देवसदनं दामि' इत्यत्र बर्हिश्शब्देन दशविधा दर्भा गम्यन्ते। तेषु कस्य लवने मन्त्रोऽङ्गमित्यत्राह— **कुशेति**। बर्हिश्शब्दवाच्यानां कुशनामेव लवनेऽङ्गं मन्त्रः, कुशानामेव मुख्यत्वात्। उलपः शुष्कं बर्हिः तृणं वा। बर्हिश्शब्द उलपादीनपि बोधयति, किन्तु न मुख्यया वृत्या गौण्यैव वृत्या तेषां बोधः। अत उलपादीनां मुख्यार्थत्वाभावात् न तल्लवने मन्त्रोऽङ्गम्। **तस्य** मन्त्रस्य। **तल्लवनं** कुशलवनम्। एवं मन्त्रस्य कुशलवनाङ्गत्ववत्। **अन्यत्रापि** निर्वापादि मन्त्रेऽपि 'अग्नये जुष्टं निर्वपामि' इत्यादौ सामर्थ्यान्निर्वापाङ्गत्वं मन्त्रस्येत्यर्थः।

---

निरूप्यते। तत ऊर्ध्वञ्च तत्सामर्थ्यवशात् साधनत्ववाचिनी प्रधानत्ववाचिनी च श्रुतिः कल्प्यते। कल्पिता च श्रुतिः पश्चादैन्द्रमन्त्रेणेन्द्रमुपतिष्ठेतेति विनियुङ्क्ते इति मन्त्रपदाभिधेयप्रतिपादनविनियोगमध्यवर्तिनौ सामर्थ्यनिरूपणश्रुतिकल्पनव्यापारौ भवतः।'—कौमुदी, पृ० ८१.

## विशेषार्थः

सामर्थ्यरूपं लिङ्गं द्विविधं भवति—सामान्यसंबन्धबोधकप्रमाणनिरपेक्षम्, तादृशप्रमाणसापेक्षञ्चेति । कर्मानुष्ठानसामान्यं प्रत्यर्थज्ञानमङ्गं सामर्थ्यात् स्वीकर्तव्यम् । अनुष्ठेयपदार्थेषु ज्ञातेषु तेषामनुष्ठानं सुकरम्, अज्ञातेषु च तेषु कथमनुष्ठानं स्यात् । कर्मानुष्ठानं नाम पूर्वापरीभूतानां पदार्थानां यथाविध्याचरणम् । तत्र तादृशाः पदार्था न ज्ञाताः अपि च कर्मानुष्ठीयत इति न सङ्घटते । अतोऽर्थमवगत्य प्रथमं तदनन्तरं कर्मानुष्ठातव्यम् । विनार्थज्ञानेन न कर्मानुष्ठातुं शक्यत इति सामर्थ्याल्लिङ्गात् कर्मानुष्ठानं प्रति अर्थज्ञानमङ्गं भवति । तदत्रार्थज्ञानस्य कर्मानुष्ठानस्य चाङ्गाङ्गिभावावगमाय न पृथक् प्रमाणमपेक्ष्यते । अतः-सामान्यसंबन्धबोधकप्रमाणान्तरनिरपेक्षाल्लिङ्गादर्थज्ञानकर्मानुष्ठानयोरङ्गाङ्गिभावः। 'बर्हिर्देवसदनं दामि' इत्यत्र तु तादृशप्रमाणान्तरसापेक्षाल्लिङ्गान्मन्त्रबर्हिर्लवनयोरङ्गाङ्गिभावः । तथाहि—अयं मन्त्रो दर्शपूर्णमासप्रकरणाम्नातः । प्रकरणाज्ज्ञायते-यदयं मन्त्रो दर्शपूर्णमासयोरुपकारक इति सामान्यतोऽवगते तद्गतसामर्थ्यात् बृहिर्लवनरूपाद् अनेन बर्हिर्लवनं कर्तव्यमिति विशेषतो ज्ञायते । तत्र विशेषरूपेण ज्ञातेऽर्थे कश्चन शङ्केत-मन्त्रोच्चारणेन विनैव बर्हिषां लवनं भवतु किं तदुच्चारणेनेति, तदा मन्त्रगतसामर्थ्यं मन्त्रस्य विनियोगाय सामान्यसम्बन्धबोधकप्रमाणान्तरमपेक्षते । तच्च प्रमाणं प्रकरणम् । अन्यथा प्रकरणपाठो मन्त्रस्य व्यर्थस्स्यात् । अतः प्रकरणपाठान्यथानुपपत्त्या प्रकरणं लिङ्गविनियोगे सहायकं भवतीति बर्हिर्मन्त्रस्य लवनाङ्गत्वं प्रकरणसहकृतलिङ्गात्प्रसिध्यतीति ।

**अनुवाद**—शब्द सामर्थ्य[1] को ही लिङ्ग कहते हैं। जैसा कहा है—'सब शब्दों का जो सामर्थ्य है उसी को लिङ्ग कहते हैं। सामर्थ्य शब्द का अर्थ 'रूढ़ि' है अतः यौगिक शब्द [ समाख्या ] से इसका भेद है। क्योंकि समाख्या = यौगिक शब्द से रूढि स्वरूप लिङ्ग भिन्न है। अतः 'बर्हिर्देवसदनं दामि' यह मन्त्र कुश छेदन ( कुशलवन ) क्रिया का अङ्ग है, उलप आदि तृणों के खण्डन का नहीं।[2] क्योंकि 'बर्हिर्दामि' इस लिंग से उक्त मन्त्र में कुशलवन प्रकाशन सामर्थ्य ही है। इसी प्रकार दूसरे स्थानों में भी लिङ्ग से विनियोग जानना चाहिए।

---

१. 'लिङ्गमिति लक्ष्यनिर्देशः। सामर्थ्यं लिङ्गमित्युक्ते अंकुरादिजननानुकूलबीजादिसामर्थ्ये तत्प्रसङ्गं स्यात्, तद्वारणाय शब्देति विशेषणम्।' —सामर्थ्यमर्थाभिधानशक्तिः।—कौमुदी.

२. अर्थात् 'समख्या के बल से कुश सदृश उलपादि तृण विशेष के छेदन का अंग नहीं होता है।

## अर्थालोकलोचन

श्रुति एवं उसके प्राबल्य का निरूपण करके ग्रन्थकार लिङ्ग नामक द्वितीय प्रमाण का प्रतिपादन करने का उपक्रम कर रहा है। शब्द सामर्थ्य को लिङ्ग कहा गया है। सामर्थ्य से यहाँ 'अर्थाभिधानशक्ति' का बोध होता है। अतः भाष्यकार ने भी कहा है— **'यच्छब्दस्यार्थमभिधातुं सामर्थ्यं तल्लिङ्गमिति'**। वार्त्तिककार कुमारिल भट्ट का मत है कि—**"यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गम्'**। सामर्थ्य दो प्रकार का होता है शब्दगत एवं अर्थगत। अर्थगत सामर्थ्य का निरूपण प्रथमाध्याय के अन्त में **'सामर्थ्याधिरण'** नामक अधिकरण में **'स्रुवेणावद्यति'** 'स्वधितिनावद्यति' आदि उदाहरणों द्वारा स्पष्ट किया गया है। सम्प्रति तृतीयाध्याय में शब्दगत सामर्थ्य का निरूपण किया जा रहा है। इससे पूर्व कि हम प्रकृत सन्दर्भ का मीमांसक सरणि का अवलम्बन कर विषयबोध-प्रक्रिया में प्रवृत हों, यह जान लेना आवश्यक कि शब्द के सम्बन्ध में मान्य सिद्धान्त क्या है? वस्तुतः शब्द चार प्रकार के माने गये हैं—रूढ, लक्षक, योगरूढ़, यौगिक। कुछ लोग रूढ़यौगिक शब्द भी मानते हैं। इस प्रकार शब्द के पाँच प्रकार स्थिर होते हैं।

**रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम्।**
**तच्चतुर्द्धा, परै रूढयौगिकं मन्यतेऽधिकम्** ॥—शब्दशक्तिप्रकाशिका

कुछ शब्द अर्थविशेष में रूढ हो जाते हैं, स्थिर हो जाते हैं, उनके अर्थ में कोई परिवर्त्तन नहीं होता, ऐसे शब्द रूढ़ कहे जाते हैं जैसे—**गो**, प्रभृति शब्द।

( द्रष्टव्यः—समुदायशक्त्या अर्थ प्रतिपादकाः )

**लक्षक** शब्द द्वारा लक्ष्यार्थ का बोध होता है यथा—**'गङ्गायां घोषः'** यहाँ प्रधानतः सभी शास्त्रों में मीमांसित लक्षणा नामक शब्दशक्ति द्वारा अर्थावबोध होता है— गङ्गातीरवर्ती गाँव। यहाँ रूढार्थ बोधक शब्दों के माध्यम से लक्ष्यार्थ की प्राप्ति होती है। ऐसे शब्दों को लक्षक शब्द कहा गया है।

**योगरूढ** शब्द यद्यपि यौगिक होता है किन्तु किसी अर्थविशेष में रूढ हो जाता है। यथा—पङ्कज ( पङ्क + ज = पङ्क से उत्पन्न )।

**यौगिक** शब्द अपने यौगिक अर्थको व्यक्त करते हैं यथा 'पाचकः' = पकाने वाला। रूढयौगिक शब्द भी अपने रूढ अर्थ का बोध कराते हैं और अपनी अवयववृत्ति से— अपने अवयव के अर्थ के अनुसार यौगिक अर्थ का। यथा 'मण्डप' का रूढार्थ शुभ अवसर पर बना हुआ पण्डाल है परन्तु यौगिक अर्थ—मण्ड + प = माँड़ पीने वाला है।

इस विवेचन से स्पष्ट है कि समाख्या का अर्थ यौगिक शब्द होगा और लिङ्ग 'रूढ' शब्द है। अतः दोनों में भेद हैं। इस प्रकार के भेद के स्पष्टीकरण हेतु 'बर्हिर्देवसदनं दामि' यह दृष्टान्त प्रस्तुत किया गया है। ज्ञातव्य यह है कि इस मन्त्र का विनियोग क्या है? इस सम्बन्ध में पूर्वप्रतिपादित 'स्वाभिधेय प्रतिपादनादि चारों व्यापारों का बोध होना आवश्यक है। प्रथमतः 'स्वाभिधेय प्रतिपादन' रूपी व्यापार से इस मन्त्र का पद-पदार्थ ज्ञान आवश्यक है। द्वितीय सामर्थ्य निरूपण के बल से यह ज्ञात होता है कि प्रकृत मन्त्र में प्रयुक्त 'दामि' पद का अर्थ 'लवन' अर्थात् छेदन है। परन्तु पद सामर्थ्य

ही लिङ्ग कहा गया है अतः 'बर्हिष्' पद द्वारा कुश का ग्रहण एवं उलप आदि अन्य तृणों की व्यावृत्ति हो जाती है। श्रुति कल्पना द्वारा 'अनेन मन्त्रेण कुशलवनं कार्यम्' यह बोध होगा। अन्ततः विनियोग बोध 'अस्य मन्त्रस्य कुशलवनाङ्गत्वम्' इस प्रकार होगा। अत एव 'बर्हिर्देवसदनं दामि' यह मन्त्र कुशलवन ( छेदन ) का अङ्ग होता है। समाख्या के बल से कुश सदृश उलपादि तृण विशेष के 'लवन' का अङ्ग नहीं होता है क्योंकि बर्हिष् पद की रूढ़ि कुश में ही है अतः 'बर्हिर्दामि' इस लिङ्ग से कुशलवन प्रकाशन सामर्थ्य विद्यमान है।

यहाँ पर भी ध्यातव्य है कि मीमांसकप्रवरों ने लिङ्ग के दो भेद माने हैं—( १ ) सामान्यसम्बन्धबोधक प्रमाणान्तर निरपेक्ष एवं ( २ ) सामान्यसम्बन्धबोधक प्रमाणान्तर सापेक्ष। उनमें जिसके बिना जो असम्भव हो वह सामान्यसम्बन्धबोधक प्रमाणान्तर की अपेक्षा रहित केवल लिङ्ग से उसका अंग होता है। यथा अर्थज्ञान के बिना कर्मानुष्ठान असम्भव है अतः अर्थज्ञान कर्मानुष्ठान का अङ्ग केवल लिङ्ग से होता है। जिसके बिना भी जो सम्भव हो वह सामान्यसम्बन्धबोधक प्रमाणान्तरसापेक्ष लिङ्ग से उसका अङ्ग होता है। 'बर्हिर्देवसदनं दामि' इस मन्त्र में प्रमाणान्तर की अपेक्षा के कारण मन्त्र में पठित बर्हि एवं लवन का अङ्गाङ्गिभाव स्पष्ट है। दर्शपूर्णमास प्रकरण में इस मन्त्र का पाठ है। प्रकरण से ज्ञात होता है कि यह मन्त्र दर्शपूर्णमास का उपकारक है। यह जान लेने पर इसी सामर्थ्य से बर्हिर्लवन 'अनेन बर्हिर्लवनं कर्त्तव्यम्' रूप विशेषार्थ का बोध होता है। यहाँ पर यदि यह शङ्का की जाय कि मन्त्रोच्चारण बिना ही 'बर्हिष्' का छेदन हो जाय तब मन्त्रगत सामर्थ्य मन्त्र के विनियोग हेतु सामान्यसम्बन्ध बोधक प्रमाणान्तर की अपेक्षा करता है। यह प्रमाण 'प्रकरण' नाम से जाना जाता है। अतः सामान्यसम्बन्धबोधक **प्रकरणादि** प्रमाण को अवश्य स्वीकार करना होगा अन्यथा मन्त्र का प्रकरण पाठ व्यर्थ हो जायगा। अतः बर्हिर्मन्त्र का 'लवनाङ्गत्व' प्रकरण सहायक लिङ्ग से स्पष्ट है।

## लिङ्गं वाक्यादिभ्यो बलवत्

तदिदं लिङ्गं वाक्यादिभ्यो बलवद्। अत एव 'स्योनं ते सदनं कृणोमि' इति मन्त्रस्य पुरोडाशसदनकरणाङ्गत्वं 'सदनं कृणोमि' इति लिङ्गात्, न तु वाक्यात्।

### अर्थालोकः

वाक्यादिभ्यो लिङ्गस्य प्राबल्यं साधयितुमुपक्रमते—**तदिदमिति। अत एव** लिङ्गस्य वाक्यादिभ्यः प्राबल्यादेव। उदाहरति—**स्योनमिति।**

'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि।
तस्मिन् सीदामृत प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' ॥

इति समग्रो मन्त्रः। दर्शपूर्णमासयोरयं मन्त्रः। हे पुरोडाश! ते तव स्योनं समीचीनं सदनं स्थानं कृणोमि-करोमि। केन साधनेन कथं तत्स्थानं क्रियते?

घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि। कल्पिते तस्मिन् स्थाने हे अमृत! मरणरहित व्रीहीणां मेध सारभूत हे पुरोडाश शोभनमनस्कस्सन् सीद—उपविश प्रतितिष्ठ प्रतिष्ठां प्राप्नुहीति मन्त्रार्थः। अत्रायं विषयविवेकः—

दर्शपूर्णमासयोराग्नेयाग्नीषोमयोः पुरोडाशो द्रव्यम्। स च व्रीहिप्रकृतिकः यवप्रकृतिको वा। 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति व्रीहियवयोर्विकल्पेन विधानात्। व्रीहीणामवहनेन तण्डुलान्निष्पाद्य तान् पिष्ट्वा पिष्टानां भर्जनेन कूर्माकारोऽश्वशफमात्रः पुरोडाशो निर्मीयते। एवं निर्मितं तं पात्र्यामासादयन्ति। आसदनात्पूर्वं पात्र्यां घृतधारया सदनं कुर्वन्ति। सदनकरणं नाम पात्र्यां घृतलेपनम्, तत्र पुरोडाशस्थापनम्। प्रकृतमन्त्रे पूर्वार्धेन सदनकरणमुत्तरार्धेन च स्थापनं मन्त्रगतसामर्थ्यादवगम्यते। अर्थात्पूर्वार्धमुच्चार्य सदनम् सादनञ्चोत्तरार्धमुच्चार्यानुष्ठेयम्। उत्तरार्धे 'तस्मिन्' इति तच्छब्दबलेन पूर्वार्धोत्तरार्धयोरेकवाक्यत्वं प्रतीयते। 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेनार्थैकत्वप्रयुक्तमकेवाक्यत्वम्। अतः पूर्वार्धोत्तरार्धयोस्समभिव्याहारात्मकवाक्यादेकार्थावगमकत्वमेष्टव्यम्। अर्थाद्वाक्यमिदं सदनकरणं वावगमयति सादनं वेति। तत्र पूर्वार्धोत्तरार्धभेदेन भिन्नार्थावगमकत्वे सत्यपि एकवाक्यत्वे सदनस्य वा सादनस्य वा प्रकाशनमिदं वाक्यं करोतीति कल्पनीयम्। अर्थाद्वाक्यमिदं समग्रं सदनकरणप्रकाशकम् इति वा, सादनप्रकाशकमिति वा कल्पनीयम्। अत्रायं संशयः—किं पूर्वार्धोत्तरार्धगत**सामर्थ्यमादाय** पूर्वार्धस्य सदनकरणाङ्गत्वम् उत्तरार्धस्य च सादनाङ्गत्वम्? उत समग्रस्य मन्त्रस्यैकवाक्यत्वेन वाक्यात् सदनकरणाङ्गत्वम् सादनाङ्गत्वं वेति। तत्र वाक्याल्लिङ्गस्य प्रबलतया यावद्वाक्यं समग्रस्य सदनकरणे सामर्थ्यं परिकल्प्य विनियोक्तुमारभते, ततः पूर्वमेव क्लृप्तसामर्थ्यमादाय लिङ्गं 'स्योनं त' इति पूर्वार्धं सदनकरणे, उत्तरार्धञ्च सादने विनियुङ्क्त इत्याह—**सदनं कृणोमीति लिङ्गादिति। न तु वाक्यादिति।** पूर्वार्धोत्तरार्धसमभिव्याहारात्मकवाक्यादित्यर्थः।

**अनुवाद**—यह लिङ्ग वाक्यादि से प्रबल है। अतः 'स्योनं ते सदनं कृणोमि' यह मन्त्र सदनकरण प्रकाशन सामर्थ्यरूप 'सदनं कृणोमि' इस लिङ्ग से पुरोडाश सदन करण के प्रति अङ्ग होता है। परन्तु (सम्पूर्ण मन्त्र सहोच्चारण रूप) वाक्य से पुरोडाश सदन करण के प्रति और पुरोडाश स्थापना के प्रति अङ्ग नहीं होता।

## अर्थालोकलोचन

वाक्यादि से लिङ्ग की प्रबलता प्रदर्शित करना प्रस्तुत अवतरण का प्रतिपाद्य विषय है।

'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि।
तस्मिन् सीदामृत प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः॥'[1]

इस मन्त्र में 'स्योनम्' से लेकर कल्पयामि तक का अंश सदन ( स्थान करण ) अर्थ का प्रकाशन करता है और तस्मिन् सीद इत्यादि अंश सादन ( स्थापन ) अर्थ का प्रतिपादन करता है। इस मन्त्र का विनियोग पुरोडाश स्थापन में है। इस सम्बन्ध में पूर्वपक्ष का मन्तव्य है कि सम्पूर्ण मन्त्र को सदन एवं सादन दोनों कर्मों के लिये विनियुक्त किया जा सकता है क्योंकि लिङ्ग की अपेक्षा वाक्य बलवान् होता है लिङ्ग जब श्रुति से बाधित हो तब वह वाक्य से भी बाधित हो सकता है। इस मन्त्र में 'तस्मिन्' पद शेष अंश के साथ साकाङ्क्ष है अतः पूर्व अंश से उसे पृथक् करना उचित नहीं है क्योंकि परस्पर साकाङ्क्ष होने से एकवाक्यता बन जाती है अतः वाक्यभेद समुचित नहीं है। इस प्रकार यह मन्त्र सदन ( पुरोडाश का स्थान करण ) और सादन ( पुरोडाश स्थापन ) दोनों अर्थों का प्रकाशक है। सदन और सादन में समुदित रूप से मन्त्र का विनियोग होना चाहिये। अथवा, वाक्य और लिङ्ग तुल्यबलशाली है क्योंकि वाक्य से भी श्रुतिकल्पनापूर्वक विनियोग विधान देखा जाता है। अतः विनियोग के विषय में वाक्य एवं लिङ्ग दोनों श्रुतिसापेक्ष होने से तुल्यबलसम्पन्न है अतः प्राबल्य दौर्बल्य भाव का प्रश्न ही नहीं है।

सिद्धान्त पक्ष का समाधान यह है कि—ठीक है, लिङ्ग और वाक्य दोनों ही श्रुति की कल्पना कर विनियोग का विधान करते हैं तथापि **'पारदौर्बल्यम् अर्थविप्रकर्षात्'** अर्थात् वाक्य लिङ्ग की अपेक्षा दुर्बल होता है क्योंकि पहले वाक्य से लिङ्ग की कल्पना करके फिर श्रुति की कल्पना करनी पड़ती है अतः वाक्य का विनियोग विलम्बित हो जाता है जब कि लिङ्ग से श्रुति साक्षात् कल्पित होने से लिङ्ग की प्रवृत्ति विनियोग में वाक्य की अपेक्षा शीघ्र होती है। अत एव 'सादन अर्थ के प्रकाशक होने से' मन्त्र के उत्तरार्ध की सदन के अर्थ में सामर्थ्य की कल्पना के बिना उसका 'सदन' में विनियोग नहीं किया जा सकता। ठीक उसी प्रकार मन्त्र के पूर्वार्ध ( सदन अर्थ के प्रकाशक होने से ) सादन के अर्थ में सामर्थ्य कल्पित न होने से 'सादन' में विनियुक्त नहीं हो सकता। अतः वाक्य एवं लिङ्ग दोनों से श्रुति की कल्पना की जाने पर भी वे परस्पर तुल्यबल नहीं हैं क्योंकि लिङ्ग से अव्यवहित रूप और वाक्य से व्यवहित रूप से श्रुति कल्पित होती है। अतः वाक्य की अपेक्षा लिङ्ग प्रबल होने से दोनों का वैकल्पिक प्रयोग नहीं हो सकता। अत एव लिङ्ग द्वारा पूर्वार्द्ध से सदन करण का एवं उत्तरार्द्ध से पुरोडाश स्थापन ( सादन ) के विनियोग में कोई प्रतिबन्धक नहीं है।[1]

---

१. [ अस्मिन् मन्त्रे ] पूर्वार्धं सदनं प्रकाशयति, उत्तरार्धं तु सादनम्। यद्यपि 'तस्मिन्' इति उत्तरार्धस्थतच्छब्दस्य पूर्वार्धसापेक्षत्वात् एकवाक्यत्वं परिकल्प्यते, तदा उभयोरेकवाक्यत्वात् उभयोरपि अर्थयोः सदने सादने उभयत्र वा विनियोगः स्यात्। तद् बाधित्वा लिङ्गेन पूर्वार्धस्य सदनाङ्गत्वमेव। —सारविवेचिनी

## वाक्यस्वरूपविवेचनम्

समभिव्याहारो वाक्यम्। समभिव्याहारश्च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम्। यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'। अत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णताया जुह्वङ्गत्वम्।

न चानर्थक्यम्, अन्यथापि जुह्वाः सिद्धत्वादिति वाच्यम्, जुहूशब्देन तत्साध्यापूर्वलक्षणात्। तथा च वाक्यार्थः—पर्णतयावत्तहविर्धारणद्वारा जुह्वपूर्वं भावयेदिति। एवं च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यम्। अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्। अन्यथा स्रुवादिष्वपि पर्णतापत्तेः। सेयं पर्णता अनारभ्याधीतापि सर्वप्रकृतिष्वेवान्वेति न विकृतिषु। तत्र चोदकेनापि तत्प्राप्तिसंभवात् पौनरुक्त्यापत्तेः।

## अर्थालोकः

वाक्यप्रमाणं लक्षयति—**समभिव्याहार** इति। समभिव्याहारपदं विवृणोति—**साध्यत्वादीति**। आदिपदेन साधनत्वादयो ग्राह्याः। द्वितीयादीत्यत्रादिपदेन तृतीयादयो ग्राह्याः। द्वितीयादीनां विभक्तीनां सत्वे विभक्तिश्रुत्यैव विनियोगसंभवाद्वाक्यस्य विनियोगे प्रसर एव न स्यादिति भावः। एवं द्वितीयाद्यभावेऽपि **शेषशेषिवाचकपदयोः** अङ्गाङ्गिवाचकपदयोस्सहोच्चारणं वाक्यमत्राभिप्रेतम्। तेन न सर्ववाक्यानां विनियोजकत्वसिद्धिः। उदाहरति—**यस्येति**। **यस्य** यजमानस्य **पर्णमयी** पलाशवृक्षविकारः, जुहूः 'बाहुमात्र्यस्स्रुचः पाणिमात्रपुष्कराः त्वग्बिला हंसमुखप्रसेका' इति लक्षणलक्षितं यज्ञसम्बन्धिपात्रम्। स यजमानः पापं श्लोकम् अपकीर्तिं न शृणोतीति वाक्यस्यार्थः। लक्षणसमन्वयं दर्शयति—**अत्रे**त्यादिना। अत्र पर्णता शेषः जुहूश्च शेषी। शेषवाचकपर्णपदोत्तरं न तृतीया, शेषिवाचकजुहूपदोत्तरञ्च न द्वितीयास्ति। तथापि तयोस्समभिव्याहारोऽस्ति। तस्मादेवाङ्गाङ्गिभाव इत्याह—**पर्णताया इति**। **जुह्वङ्गत्वम्** जुहूनिष्ठाङ्गितानिरूपिताङ्गत्वम्। जुहूद्देशेन पर्णताया विधाने आनर्थक्यमाशङ्कते—**न चेति**। **अन्यथापि** विनापि पर्णतया जुह्वाः स्वरूपस्येति शेषः। जुहूस्वरूपोद्देशेन पर्णताया विधाने विधीयमानपर्णताया आनर्थक्यम् काष्ठान्तरेणापि जुहूस्वरूपं निष्पादयितुं शक्यत्वात् इति भावः। **इति वाच्यम्** इति न च वाच्यमिति सम्बन्धः। तत्र हेतुमाह—**जुहूशब्देनेति**। तत्साध्यस्य जुहूसाध्यस्य अपूर्वस्य अदृष्टस्य लक्षणात्। जुहूपदेन

जुह्वपूर्वं लक्ष्यत इत्यर्थः। विधीयमानपर्णताया उद्देश्यं जुहूः, उद्देश्यतावच्छेदकं जुहूत्वम्, तदवच्छिन्नजुहूद्देशेन तस्या विधाने आनर्थक्यं स्यादिति उद्देश्यताव-च्छेदकं जुहूत्वं परित्यज्य अपूर्वसाधनत्वस्य तदवच्छेदकत्वकोटौ निवेशे विधेय-पर्णताया नानर्थक्यम्। अपूर्वसाधनत्वावच्छिन्नोद्देशेन पर्णताविधाने नानर्थक्य-मिति भावः। नन्वेवमपूर्वसाधनत्वावच्छिन्नत्वम् उपभृदादिष्वपि वर्तते, तत्रापि पर्णता स्यादित्यत आह—**अवत्तेति**। अवत्तम् अवदानसंस्कारेण संस्कृतं यद्धविः हूयमानं द्रव्यम् तद्धारणं जुह्वा एव वर्तते नोपभृदादेः। अतो द्वारकोटौ तन्निवेशः। अवत्तहविर्धारणं कुर्वत् यदपूर्वसाधनं तदुद्देशेन पर्णतायां विधीय-मानायां नोपभृदादिषु पर्णतायाः प्रसक्तिरित्यर्थः। एतेन निष्पन्नं नियमं प्रदर्श-यति **एवञ्चे**त्यादिना। जुह्वा अपूर्वं तदैव सम्पादयितुं शक्यते यदा पर्णतया जुहूः क्रियत इत्यर्थः। अवत्तेत्यादिविशेषणव्यावर्त्यं दर्शयति—**अन्यथेति**। अवत्तहविर्धारणद्वारेति विशेषणादान इत्यर्थः। **स्रुवादिष्वपि** आदिपदेनोपभृद्-ध्रुवादीनां ग्रहणम्।[1] स्रुवः—'खादिरः स्रुवः' 'अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्त-पुष्करः' इति कात्यायनोक्तलक्षणलक्षितं पात्रम्। अवत्तहविर्धारणं जुहूरेव करोति नान्यत्पात्रम्। अतः स्रुवादीनां व्यावृत्तिरिति भावः। पर्णतागत-विशेषमाह—**सेयमिति**। 'यस्य पर्णमयी' इति वाक्यविहिता पर्णतेत्यर्थः। किञ्चित्प्रकरणमारभ्याधीतं वाक्यमारभ्याधीतम्, प्रकरणसंबन्धेन विना तथैवाधीतं वाक्यमनारभ्याधीतम्। 'यस्य पर्णमयी' इति वाक्यमनारभ्याधीतम्। दर्शपूर्णमासादिप्रकरणेऽनधीतमित्यर्थः। प्रकरणसमधीतानां प्रकरणे निवेशः, किन्तु ये प्रकरणानधीताः तेषां क्व निवेशः? प्रकृतित्वेन विकृतित्वेन च क्रतवो विभक्ताः। तेषु प्रकृतिविकृतिसाधारण्येन तेषां निवेशः? उत प्रकृतिष्वेव? इति संशये निर्णयमाह—**सर्वप्रकृतिष्वेवेति**। प्रकृतित्वेनाभिमतेषु क्रतुष्वेव निवेशः, न विकृतिष्वपीत्येवकारार्थः। **चोदकेन** अतिदेशेन, **तत्प्राप्तिसम्भवात्** तेषामना-रभ्याधीतानामङ्गानां प्राप्तिसम्भवात्। **पौनरुक्त्यापत्तेः** द्विरुक्तत्वापत्तेः। अनारभ्याधीतानां सर्वक्रतुगामित्वे विकृतिष्वप्युपदेशेन प्राप्तिः, **'प्रकृतिवद्विकृतिः कर्त्तव्या'** इत्यतिदेशेनापि तेषां प्राप्तिरिति पौनरुक्त्यम् पौनरुक्त्यञ्च दोषः। अतोऽनारभ्याधीतानां प्रकृतिगामित्वमेवेति सिद्धम्।

**अनुवाद**—समभिव्याहार[2] अर्थात् सहोच्चारण को वाक्य कहते हैं।[3] साध्यत्वादि

---

१. स्रुक्शब्दस्स्रुवशब्दश्चेति शब्दद्वयम्। चकारान्तः स्त्रीलिङ्गः स्रुक्छब्दः जुहूपभृद्ध्रुवाणां वाचकः। स्रुवशब्दोऽकारान्तः पुल्लिङ्गो निर्दिष्टलक्षणलक्षितः पात्रविशेषवाची।

२. समभिव्याहारः=सम्+अभि+वि+आ+हृ

३. (क) 'वाक्यं स्यात् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः'—साहित्यदर्पण, २. १.
(ख) 'वाक्यं तु आकाङ्क्षायोग्यतासंनिधिमतां पदानां समूहः।—तर्कभाषा.

वाचक द्वितीयादि नहीं रहने पर भी सहोच्चारण ( समभिव्याहार ) रहता है। वस्तुतः अङ्ग ( शेष ) एवं प्रधान ( शेषि ) वाचक पदों के सहोच्चारण को ( समभिव्याहार ) वाक्य कहते हैं। यथा—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'—अर्थात् जिस व्यक्ति की जुहू पलाश[1] काष्ठ निर्मित होती है वह अपना अपयश नहीं सुनता। इस वाक्य में पलाश ( = पर्णता ) और जुहू[2] का एक साथ उच्चारण ( सहोच्चारण ) है अतः पर्णता जुहू की अङ्ग होती है।

यहाँ यह कहना समीचीन नहीं है कि पलाश के अलावा किसी दूसरे काष्ठ से जुहू को बनाया जा सकता है अतः पर्णता का उपादान व्यर्थ है क्योंकि जुहू शब्द को जुहू द्वारा उत्पन्न होने वाला अपूर्व समझना चाहिये अर्थात् **'जुहू से साध्य अपूर्व'** में लक्षणा है।[3]

'अवत्त ( खण्ड करके ग्रहण किया हुआ ) हविर्धारण द्वारा पलाश से निर्मित पात्र विशेष से जुहू साध्य अपूर्व का लाभ करे' यह वाक्यार्थ होगा अर्थात् जब पलाश से 'जुहू' निर्मित होगी तभी उसके द्वारा साध्य अपूर्व उत्पन्न होगा अन्यथा नहीं यह सिद्ध होता है अतः पलाश की व्यर्थता नहीं हुई। 'अवत्तहविर्धारणद्वारा' यह अर्थ करना आवश्यक होगा अन्यथा स्रुव आदि अन्य यज्ञपात्र भी पर्ण द्वारा निर्मित होने योग्य माने जायेंगे। यद्यपि पर्णता का सामान्य विधि ( = अनारभ्याधीत ) में विहित होने पर समग्र प्रकृति यज्ञ में ही अन्वित होगी, विकृति में नहीं। क्योंकि विकृति यज्ञ में **'प्रकृतिवद्विकृतिः कर्त्तव्या'** इस चोदक वाक्य से ही पर्णता की प्राप्ति है अतः विकृति याग में पर्णता का अन्वय करने पर पुनरुक्ति दोष होगा।

## अर्थालोकलोचन

इस अनुभाग में वाक्य प्रमाण का निरूपण किया गया है। शेषशेषि या अङ्गाङ्गि-वाचक पदों का सहोच्चारण वाक्य कहा जाता है। यह आवश्यक नहीं है कि साध्यत्वादि-वाचक द्वितीयादि विभक्ति का प्रयोग हो; क्योंकि उनके अभाव में भी सहोचारण या समभिव्याहार रहता है। अभिव्याहार का तात्पर्य है कथन या उचारण। वस्तुतः शब्दों के परस्पर सम्बद्ध उच्चारण से ही मीमांसक सम्मत वाक्य का लक्षण हो जाता है। परन्तु यह सहोचारण अङ्ग एवं अङ्गी वाचक पदों का ही होना चाहिए अन्यथा यथार्थ वाक्यार्थ बोध नहीं होगा। 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इस मन्त्र में **पर्णमयी** एवं जुहू पद साथ-साथ उच्चरित है एवं अङ्ग तथा अङ्गी का बोध कराते हैं। 'पर्णता' जुहू का अङ्ग है। यहाँ यह भी द्रष्टव्य है पर्णनिर्मित जुहू द्वारा ही शास्त्रोक्त फलसाधन भूत अपूर्व की उत्पत्ति सम्भव है—अन्यथा नहीं। अतः इस विधिवाक्य का अर्थ **'पर्णतया अवत्तहविर्धारणद्वारा जुह्वपूर्वं भावयेत्'** अर्थात् पलाश निर्मित जुहू

---

१. **'पलाशः** किंशुकः **पर्णो** यज्ञियो रक्तपुष्पकः।

२. जुहूः—हूयते अनयेति यज्ञपात्रविशेषः।

३. पर्णता से बनाई हुई जुहू से ही अपूर्व की उत्पत्ति होती है। काष्ठान्तर निर्मित जुहू से अपूर्व की उत्पत्ति नहीं होती हैं।

में खण्ड किये हुये हवि को रखकर जुहू से होने वाले अपूर्व का सम्पादन करें'। इस प्रकार के अर्थावबोध से अन्य पात्रों के विशेष प्रयोजन की सिद्धि जुहू से निर्मित पात्र से भिन्न होगी।[1]

इस प्रसङ्ग में 'अनारभ्य विधि' पद पर भी विचार करना प्रसङ्गतः प्राप्त है।

**'किञ्चित्प्रकरणमारभ्याधीतं वाक्यमारभ्याधीतम्; प्रकरणसम्बन्धेन विना तथैवाधीतं वाक्यमनारभ्याधीतम्।'** अर्थात् प्रकरण विशेष के सन्दर्भ में पठित वाक्य 'आरभ्य अधीत' है इससे भिन्न दूसरा है। 'यस्य पर्णमयी' इत्यादि वाक्य दर्शपूर्णमासादि प्रकरण में पठित नहीं है अतः इस प्रकार 'अनधीत' वाक्यों का सन्निवेश कहाँ किया जाय? प्रकृति एवं विकृति रूप में यज्ञ का विभाजन किया गया है अतः इस प्रकार के वाक्यों का सन्निवेश प्रकृति में होना चाहिये। यह सम्भव कैसे होगा? **इस प्रश्न का समाधान है— 'तत्र चोदकेनापि तत्प्राप्तिसंभवात् पौनरुक्त्यापत्तेः'।**

भाव यह है—चोदक पद का अर्थ है—**'चोदकं वाक्यं चोदको ग्रन्थो वा'।** इस तरह के वाक्यों द्वारा **'प्रकृतिवद्विकृतिः कर्तव्या'** सदृश साधारण नियम का विधान मिलता है। 'चोदक' को 'अतिदेश' भी कहते हैं।[2] प्रकृति याग के प्रकरण से धर्मों को विकृति के प्रकरण में ले आना। इसे ही **'अतिदेश'** या **चोदक** वाक्य कहते हैं। नियम भी है कि प्रकृति के धर्मों का विकृति में अतिदेश होता है।

'पर्णता' की भी प्राप्ति चोदक वाक्य से होती है। अतः जैमिनीयन्यायमालाविस्तर में कहा है—

**'पर्णवाक्यात् पर्णताया यावत्क्रतुप्रवेशे जुहूद्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्र अतिदिश्यते'।**

## अर्थालोकः

क्रतुषु प्रकृतिविकृतिभावस्वरूपं विशदयति—**यत्रेति । समग्रेति ।** स्वापेक्षितनिखिलाङ्गानां यत्र प्रत्यक्षतः पाठः तत्र प्रकृतिरिति व्यावहारः।

---

१. अन्यपात्र—स्रुव, स्रुच्, उपभृत् ध्रुवा आदि है।

'वैकङ्कती ध्रुवा प्रोक्ता आश्वत्थी चोपभृन्मता।
जुहूः पलाशकाष्ठस्य खादिरस्य स्रुवो मतः॥'

२. अतिदेश का लक्षण—

'अन्यत्रैव प्रणीतायाः कृत्स्नायाः धर्मसंहतेः।
अन्यत्र कार्यतः **प्राप्तिरतिदेशः** स उच्यते॥

**'अतिदेशो नाम** ये परत्र विहिताः धर्मास्तमतीत्य अन्यत्र तेषां **देशः**। यथा, देवदत्तस्य भोजनविधिं कृत्वा' शालिसूपमांसापूपैर्देवदत्तो भोजयितव्यः, इति तमेव विधिं यज्ञदत्तेऽतिदिशति 'देवदत्तवद् यज्ञदत्तो भोजयितव्य' इति। श्लोकमपि उदाहरन्ति। प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु। धर्मप्रदेशो येन स्यात् **सोऽतिदेश** इति स्थितिः॥—**जैमिनिसूत्र ७।१।१२ पर शबरस्वामी कृत भाष्य।**

दर्शपूर्णमासादिरित्यदिपदेन ज्योतिष्टोमादयो ग्राह्याः। दर्शपूर्णमासप्रकरणे प्रधानयागैः फले संपादनीये उपकारकतया यावदङ्गान्यपेक्ष्यन्ते तावदङ्गानां समाम्नानात् दर्शपूर्णमासयागः प्रकृतिरित्यर्थः। विकृतिस्वरूपमाह—**यत्र नेति।** सर्वाङ्गोपदेशः—समग्राङ्गपाठो नास्ति तत्र विकृतिरिति व्यवहारः। उदाहरणम्—**सौर्या**दिरिति। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति विहिता सौर्येष्टिरित्यर्थः। आदिपदेन सर्वा अपीष्टयो ग्राह्याः। विकृतिषु सर्वाङ्गोपदेशाभावे हेतुः—**कतिपयेति।** कतिपयानामङ्गानां प्रकृतित इति शेषः। **अतिदेशेन** प्रकृतिवद्विकृतिः कर्तव्येति व्यापारेण। **प्राप्तत्वात्** ज्ञातत्वादित्यर्थः।

सौर्यविधिवाक्येन सूर्यो देवता चरुर्द्रव्यमित्येतावन्मात्रमवगम्यते। 'निर्वपेत्' इत्यत्राख्यातोपात्तभावनायाः भाव्याकाङ्क्षायां करणाकाङ्क्षायाञ्च सत्यां फलं भाव्यत्वेन धात्वर्थश्च करणत्वेनान्वेति। कथम्भावाकांक्षायां तत्पूरकोपकारकपदार्थानां प्रकरणे आम्नानाभावात् 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशवाक्यानुसारेण एकदेवताकत्वौषधिप्रभवद्रव्यकत्वनिर्वपतिशब्दघटितत्वादिसादृश्यैराग्नेययाग उपमीयते—यथा आग्नेययागेन फलं सम्पादितं तथा सौर्ययागेनापीति। तत्र यथोपकारकपदार्थाः कथम्भावाकांक्षापूरकाः तथैव त एवात्र तदाकांक्षापूरका इति सौर्यस्य विकृतित्वमिति भावः।

## प्रकृतिविकृतिलक्षणम्

**यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यथा दर्शपूर्णमासादिः। तत्प्रकरणे सर्वाङ्गपाठात्। यत्र न सर्वाङ्गोपदेशः सा विकृतिः। यथा—सौर्यादिः। तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात्। अनारभ्यविधिः सामान्यविधिः।**

एवं प्रकृतिविकृतिस्वरूपं स्थूलशो निरूप्य पर्णताया अनारभ्य विधिप्रसङ्गमुपसंहरति—**अनारभ्यविधिरिति।** नन्वनारभ्याधीतानां प्रकृतिगामित्वमिति पूर्वमुक्तम्, किन्तु केषाञ्चनानारभ्याधीतानां प्रकृतिगामित्वं न सम्भवति। तथाहि—'सप्तदश सामिधेनीरनुब्रूयात्' इति श्रूयते। दर्शपूर्णमासयोः 'प्र वो वाजा' इत्यादयो मन्त्रा एकादश संख्याका आम्नाताः। इमे सामिधेनीमन्त्रा इति ख्यायन्ते। होत्रा ऋत्विजा इमे पठ्यन्ते। पठनावसरेऽध्वर्युः एकैकस्या ऋचोऽन्ते एकैकां समिधमाहवनीये प्रक्षिपति। अतस्समिदिन्धनप्रकाशका इमे मन्त्राः सामिधेन्य इति कथ्यन्ते। तत्र 'पञ्चदशसामिधेनीरनुब्रूयात्' इति विधिना सामिधेनीषु पाञ्चदश्यं विहितम्। पञ्चदशसंख्याकाः सामिधेन्यः पठनीया

इत्यर्थस्सम्पन्नः। मन्त्राणामेकादशसंख्याकत्वेऽपि 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति विध्यनुसारेण आवृत्त्या पञ्चदशसंख्या सम्पादनीया भवति। तत्रानारभ्याधीतसाप्तदश्यस्य प्रकृतिगामित्वे प्रकृतौ पाञ्चदश्यावरोधात् प्राकरणिकपाञ्चदश्येन तद् बाध्यत इति कथं प्रकृतिगामित्वकथनमनारभ्याधीतानां संगच्छते ? अस्तु, विकृतिगामित्वमित्यपि न सङ्गतम् दर्शपूर्णमासविकृतिषु प्रकृतितः पाञ्चदश्यस्यातिदेशेन प्राप्तत्वात्। अतस्साप्तदश्यस्य कुत्र निवेश इति चेदुच्यते—यासु पशुवैमृधमित्रविन्दादिषु विकृतिषु साप्तदश्यस्य पुनः पाठः तासु उपसंहारन्यायेन साप्तदश्यस्य निवेशः। किं प्रयोजनम् ? प्रत्यक्षपठितसाप्तदश्येनैव कार्ये संपद्यमाने पुनरनारभ्याधीतसाप्तदश्यनिवेशेनेति चेदाह वार्तिककारः—**'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः'** इति। तदिदं सूचितम्—**सामान्यविधिरिति।** क्रतुविशेषमनारभ्य सामान्यत एव पाठात् सामान्यविधित्वम् अर्थादनारभ्यविधित्वम्, क्रतुविशेषपठितत्वञ्च विशेषविधित्वमिति तात्पर्यम्।

**अनुवाद**—जहाँ पर सब अङ्गों का उपदेश हो उसे **प्रकृतियाग** कहते हैं। जैसे 'दर्शपूर्णमास' आदि। क्योंकि दर्शपूर्णमास प्रकरण में सभी अङ्गों का पाठ है। जिसमें सब अङ्गों का उपदेश न किया गया हो उसे **'विकृतियाग'** कहते हैं।[1] यथा सौर्यादि। इस याग में कई अङ्गों की प्राप्ति **अतिदेश** से होती है। अनारभ्य विधि को सामान्य विधि कहते हैं।

## अर्थालोकलोचन

याग दो प्रकार के हैं—प्रकृति याग एवं विकृति याग। **प्रकृति याग** वह है जिनमें अङ्गों का पूरा पूरा विधान है। **विकृत याग** वह है जिनमें किसी विशेष अङ्ग का विधान किया गया है। शेष अङ्गों को बताया नहीं है परन्तु ये अङ्ग वही होंगे जो प्रकृति याग के हैं। हर प्रकृति याग के विकृति याग होते हैं। अनारभ्यविधि एवं अतिदेश की विवेचना इससे पूर्व की जा चुकी है अतः वहीं द्रष्टव्य है।

---

१. आपस्तम्बसूत्र के भाष्यकार कपर्दि स्वामी ने प्रकृति एवं विकृति का पार्थक्य सूत्र ३१ पर भाष्य लिखते हुये निम्न ढंग से किया है—

'येषां प्रधानानां श्रुत्याद्यवगतशेषवैः पदार्थैः कल्पित उपकारः कथमंशपूरकस्ताः **प्रकृतयः**। ततश्च विकृतयः कथमंशपूरकमुपकारं गृह्णीयुः। विकृत्यपेक्षं हि प्रकृतित्वम्। येषां च अविहितेतिकर्त्तव्यतानामन्यत्र विहितेनोपकारेण कथमंशः पूर्यते ता **विकृतयः**।...एवं च काश्चित् प्रकृतय एव अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमाः। काश्चिद् विकृतयः प्रकृतयश्च यथा वैश्वदेवाग्नीषोमीयपशुप्रमथनिकाय्यद्वादशाहादयः। काश्चिद् विकृतय एव यथा कुण्डपायिनानामयने अग्निहोत्रसौर्यवायव्यपशुद्भिरपौण्डरीकादयः।'

## वाक्यस्य प्रकरणादिभ्यः प्राबल्यनिरूपणम्

तदिदं वाक्यं प्रकरणादिभ्यो बलवत्। अत एव 'इन्द्राग्नी इदं हविः' इत्यादेरेकवाक्यत्वाद् दर्शाङ्गत्वम्; न तु प्रकरणात् दर्शपूर्णमासाङ्गत्वम्।

### अर्थालोकः

एवं वाक्यं निरूप्य तद्गतं प्राबल्यं निरूपयति—तदिदमित्यादिना। प्रकरणं ह्युभयाकाङ्क्षारूपम्। यत्साकांक्षं न तत्प्रमाणपदवीमारोढुमर्हति। तदा तत्प्रमाणं भवितुमर्हति यदा चाकाङ्क्षापूरणाय वाक्यान्तरेणैकवाक्यतामापन्नं स्यात्। अतः प्रकरणस्य विनियोजकत्वसिद्धये यावत्तत् वाक्यान्तरेणैकवाक्यतां भजते ततः पूर्वमेव वाक्यं लिङ्गादिकं कल्पयित्वा विनियोजकमिति प्रकरणाद्वाक्यं बलीय इति भावः। **अत एव** प्रकरणाद्वाक्यस्य प्राबल्यादेव। प्राबल्ये उदाहरणम्—**इन्द्राग्नी** इति।

अत्रायं विषयविवेकः—दर्शपूर्णमासयोरस्ति सूक्तवाकनिगदः—सुष्ठूक्तं वदति इति सूक्तवाकः। अयं मन्त्रसमूहो निगदशब्देन व्यवह्रियते। निगदस्यास्य प्रस्तरप्रहरणे विनियोगः—'सूक्तवाकेन प्रस्तरं प्रहरति' इति वाक्यात्। प्रस्तरो नाम प्रथमो लूनो दर्भमुष्टिः, तं वेद्यामास्तीर्य तदुपरि हवींष्यासाद्यन्ते। प्रधानयागादिकं परिसमाप्यान्ते प्रस्तरस्याहवनीये प्रहरणमध्वर्युणा क्रियते, तदा निगदमिमं होता पठति। पूर्वं या या देवता इष्टास्तासां स्मरणाय नामानि सङ्कीर्त्य 'इदं हविरजुषत अवीवृधत महोज्यायोऽक्रत' इति देवताया एकत्वे, तस्या द्वित्वे च 'इदं हविरजुषेताम् अवीवृधेताम् अक्राताम्' इत्येवं पाठाः प्रवृत्ताः। तत्र पूर्णिमायां प्रधानयागेषु अग्निः, विष्णुप्रजापत्यग्नीषोमेष्वन्यतमा, अग्नीषोमौ चेति देवताः। दर्शे च अग्निः इन्द्रः इन्द्राग्नी वेति देवताः। तत्र सोमयाजिनस्सान्नाय्येऽधिकारात् दर्शे दधिपयोद्रव्यकस्सान्नाय्ययागः, असोमयाजिनस्तु 'नासोमयाजी सन्नयेत्' इति निषेधात् सान्नाय्ये नाधिकारः, तत्स्थाने ऐन्द्राग्नः पुरोडाशः। सूक्तवाके 'अग्निरिदं हविरजुषत अवीवृधत महोज्यायोऽक्रत' 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यादिषु इष्टदेवतास्मारकेषु 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यपि श्रुतम्। 'इन्द्राग्नी' इति पदसामर्थ्येन दर्शसमवेतोऽयमिति लिङ्गादवगम्यते। तेन सह 'इदं हविः' इत्यादेस्समभिव्याहारो दृश्यते। प्रकरणञ्च दर्शपूर्णमासयोः। प्रकरणाद्दर्शपूर्णमासोभयार्थत्वं ज्ञायते, समभिव्याहारात्मकवाक्याच्च दर्शाङ्गत्वम्। अत्र व्यवस्थामाह—एकवाक्यत्वात् 'इन्द्राग्नी-

पदेनैकत्वादित्यर्थः। अत एव सूक्तवाकमन्त्राः दर्शे पूर्णिमायाञ्च विभज्य विनियुज्यन्ते। प्रकरणात् इत्यनेनाधिकाराख्यं प्रकरणं ग्राह्यम्, नतूभयाकाङ्क्षा-रूपम्। उभयाकाङ्क्षालक्षणप्रकरणं क्रियारूपाणामेवाङ्गानां विनियोजकम्, मन्त्रास्तु न क्रियारूपाः। अतोऽत्र प्रकरणपदेनाधिकाराख्यमेवेति ज्ञेयम्।

**अनुवाद**—वाक्य प्रमाण प्रकरण आदि से बलवान् है। अतएव 'इन्द्राग्नी इदं हविः' यह मन्त्र वाक्य प्रमाण से **'दर्श'** नामक याग का अङ्ग होता है न कि प्रकरण प्रमाण से **'दर्श'** एवं **'पूर्णमास'** दोनों का अंग।

## अर्थालोकलोचन

प्रस्तुत सन्दर्भ में वाक्य प्रमाण के प्राबल्य का निरूपण किया जा रहा है। 'इन्द्राग्नी इदं हविः' यह समग्र मन्त्र निम्न प्रकार से है।

**'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्।**
**इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्॥'**[1]

[तैत्तिरीयब्राह्मण ३. ५. १०]

इस मन्त्र का दर्शपूर्णमास में सूक्तवाक निगद जप में पाठ किया जाता है। 'अग्नी-षोमाविदं..........ज्यायोऽक्राताम्' यह अंश एक स्वतन्त्र वाक्य है और इसका पाठ **पूर्णमास** याग में करना चाहिये। एवं 'इन्द्राग्नी इदं....' स्वतन्त्र वाक्य होने से 'दर्शयाग' में पठित होना चाहिये क्योंकि मीमांसक सम्प्रदाय के अनुसार **अग्नि एवं सोम** पूर्णमास याग के देवता है और **इन्द्र एवं अग्नि** दर्शयाग के अतः प्रकरणानुरोध से **अग्निषोमौ** इतना अंश छोड़कर शेष अंश का पाठ **दर्शयाग** में और **'इन्द्राग्नी'** इस पद को छोड़कर शेष अंश का पाठ **'पूर्णमास याग'** में करना चाहिये। इस प्रकार के विनियोग से प्रकरण की मर्यादा रक्षित होती है अथवा वाक्य और प्रकरण के तुल्यबल होने से उनका वैकल्पिक विनियोग होगा। ये दोनों तुल्यबल इसलिये है कि इन दोनों के विनियोग की स्वतन्त्रता श्रुति पर आधारित है क्योंकि विनियोग का सामर्थ्य केवल श्रुति में है। अतः श्रुति के आश्रित होने से वाक्य एवं प्रकरण दोनों तुल्यबल हैं। पर सिद्धान्ती इस समाधान पर सहमत नहीं है। उसका विचार हैं कि **'पारदौर्बल्यम् अर्थविप्रकर्षात्'** अर्थात् यहाँ भी पूर्ववत् वाक्य की अपेक्षा प्रकरण 'पर' होने से दुर्बल होता है। प्रकरण से श्रुति तक व्यवधान है। भाव यह है कि—**'अग्निषोमौ इदं हविः'** इत्यादि मन्त्र में अग्निषोमपद रहित 'इदं हविः' इत्यादि पदों का **इन्द्राग्नी पदों** के साथ अन्वय श्रवण नहीं है अतः प्रकरण प्रमाण से प्रथमतः दोनों के अन्वयरूप **वाक्य की कल्पना** करनी होगी उस वाक्य से 'इन्द्राग्नी' प्रकाशन रूप **सामर्थ्य की कल्पना** भी आवश्यक है। पुनश्च उस

---

१. इस मन्त्र का सरलार्थ यह है—

'हे अग्नि एवं सोम! तुम दोनों ने हवि का सेवन किया है, उसकी वृद्धि की है एवं उसे महत्त्वपूर्ण बना दिया है। हे इन्द्र एवं अग्नि! तुम दोनों ने इस हवि का सेवन किया है, उसकी वृद्धि की है एवं उसे महत्त्वपूर्ण बना दिया है।'

'लिङ्ग' द्वारा **'इन्द्राग्नी'** अर्थात् इन्द्र एवं अग्नि देवताओं से सम्बन्धित कोई [ **श्रुति की कल्पना** 'अनेन मन्त्रभागेनेन्द्राग्निविषया काचित्क्रियानुष्ठेया ] क्रिया करनी चाहिये। तदनन्तर विनियोग होगा। इस तरह प्रकरण प्रमाण एवं विनियोग के मध्य वाक्य, लिंग एवं श्रुति का व्यवधान है परन्तु वाक्य एवं विनियोग के मध्य लिङ्ग एवं श्रुति दो का ही व्यवधान है। अतः प्रकरण से वाक्य बलवान् है अतः 'अग्नीषोमाविदं हविः' यह मन्त्र **पूर्णमास**[१] का अङ्ग होता है और 'इन्द्राग्नी इदं हविः' इत्यादि मन्त्र **दर्श**[२] का अङ्ग होता है।

## प्रकरणनिरूपणम्

उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु 'समिधो यजती'त्यादि-वाक्ये फलविशेषस्यानिर्देशात्समिद्यागेन भावयेदिति बोधानन्तरं किमित्युपकार्याकाङ्क्षा। दर्शपूर्णमासवाक्येऽपि 'दर्शपूर्णमासाभ्यां स्वर्गं भावये'दिति बोधानन्तरं कथमित्युपकारकाकाङ्क्षा। इत्थं चोभया-काङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्।

### अर्थालोकः

प्रकरणं निरूपयति—**उभयेति**। अङ्गाङ्गिनोरुभयोरित्यर्थः। परस्पर-मङ्गाङ्गिनोरुभयोराकाङ्क्षा प्रकरणमिति यावत्। उदाहरति—**यथेति**। **प्रयाजादिषु** 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति पञ्चभिर्वाक्यैर्विहिताः पञ्च यागाः प्रयाजाः कथ्यन्ते। आदिपदेनाघाराज्यभागानूयाजपत्नीसंयाजादयो ग्राह्याः। समिदादिवाक्येषु समिदादिपदानि नामधेयानि। एतेषां यागानामाकाङ्क्षां दर्शयितुमाह—**फलेति**। प्रकृतवाक्येषु फलं न निर्दिष्टम्। ततः किमित्याह—**समिद्यागेनेति**। समिच्छब्दो यागनामेत्युक्तम्। यागस्य चाख्यातोपात्तभावनायां करणत्वेनान्वय इति प्रागभिहितम्। तथा च सिद्धं बोधं दर्शयति—समिद्यागेन भावयेदिति। अत्र भावनाया भाव्याकाङ्क्षापूरकपदाभावात् किमित्याकाङ्क्षा जायत इत्याह—**किमिति**। उपकार्यं फलं तद्विषयिण्याकाङ्क्षेत्यर्थः। इयमङ्गाकाङ्क्षा, अङ्गिन आकाङ्क्षां दर्शयति—**दर्शपूर्णमासेति**। अस्मिन् **वाक्ये** स्वर्गस्य फलस्य

---

१. **पूर्णमास**—'मास इति चन्द्रमसः आख्या। पूर्णो-मासो यस्मिन् काले स पूर्णमासः।

२. **दर्शः**—'एकत्र स्थितचन्द्रार्कदर्शनात् दर्श इति उच्यते।' दर्श इति सूर्याचन्द्रमसोः परः सन्निकर्षः अभिधीयते। 'अमावास्या त्वमावास्या दर्शः सूर्येन्द्रसंगमः'

—अमरः

दर्श को अमावास्या भी कहते हैं। 'अमाशब्दः सहार्थे। यस्मिन् काले सूर्याचन्द्र-मसोः सहवासः स कालः अमावास्या।

'स्वर्गकामः' इत्यनेन निर्दिष्टत्वात् भावनायाश्च धात्वर्थस्य करणत्वेनान्वयात् सिद्धं बोधमाह—**दर्शपूर्णमासाभ्यामिति**। अत्र साध्यसाधनयोराकाङ्क्षयोः पूरकसामग्रीसत्वेऽपि तृतीयकथम्भावाकाङ्क्षा न शान्तेति तां दर्शयति—**कथमितीति**। उपकारकः अङ्गम्। अङ्गवाक्येष्वुपकार्याकाङ्क्षा प्रधानवाक्ये चोपकारकाकाङ्क्षा तया उभयाकाङ्क्षया। सिद्धं फलमाह—**प्रयाजादीनामिति**।

ननु प्रयाजादीनामुपकार्याकाङ्क्षायां विश्वजिन्न्यायेन फलं कल्प्यताम्। अश्रूयमाणफलकेषु कर्मसु 'स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात्' इति विश्वजिन्न्यायः प्रवर्तते। तथा च प्रयाजैः स्वर्गं भावयेदिति तेषां स्वतन्त्रफलार्थत्वं सिध्यतीति चेन्न, प्रयाजानां स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षयैव तेषां फलार्थत्वं वक्तव्यम्, विश्वजिन्न्यायेन कल्प्यमानस्य फलस्य साधनाकाङ्क्षाभावात्। यस्मिन् वाक्ये फलं श्रूयते तत्खलु साधनमाकाङ्क्षति। अतोऽन्यतराकाङ्क्षयैव प्रयाजानां फलार्थत्वं सिध्यति। अन्यतराकाङ्क्षा नाम स्थानम्। स्थानञ्च पञ्चमं प्रमाणम्। प्रयाजानां दर्शपूर्णमासार्थत्वे प्रकरणं प्रमाणम्। स्थानाच्च प्रकरणं बलीयः। बलीयसा प्रमाणेन दर्शपूर्णमासार्थत्वे सिध्यति, दुर्बलप्रमाणेन स्वतन्त्रफलार्थत्वं न समुचितम्।

**अनुवाद**—दो वाक्यों की परस्पर आकाङ्क्षा को **प्रकरण** कहते हैं। जैसे प्रयाजादि याग में **'समिधो यजति'** इस वाक्य में फलविशेष का निर्देश नहीं है अतः **'समिद्यागेन भावयेत्'** अर्थात् 'समित् याग से भावना करें ऐसा वाक्य बोध होने पर, जिसकी भावना करे इस तरह से उपकार्य फल की आकाङ्क्षा होती है। एवं दर्शपूर्णमास वाक्य में भी 'दर्श एवं पूर्णमास से स्वर्ग की भावना करे' ऐसा वाक्य बोध होने पर, किस प्रकार स्वर्ग की भावना करे इस तरह अङ्ग की अपेक्षा होती है। इस प्रकार उभयाकाङ्क्षा रूप प्रकरण से प्रयाजादि दर्शपूर्णमास के अङ्ग होते हैं।

## अर्थालोकलोचन

वाक्य प्रमाण की विशद विवेचना के पश्चात् प्रकरण प्रमाण का प्रतिपादन किया जा रहा है। प्रकरण का लक्षण है—'उभयाकाङ्क्षा प्रकरणम्'। इसके अन्य भी लक्षण यत्र तत्र उपलब्ध होते हैं यथा –'अङ्गप्रधानोभयवाक्यगता आकाङ्क्षा प्रकरणम्' 'वाक्यैकवाक्यता प्रकरणम्, 'अङ्गवाक्यतासापेक्षं प्रधानवाक्यं प्रकरणम्' 'कर्त्तव्यस्य इतिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणम्।' संक्षेपतः दो वाक्यों की परस्पर आकाङ्क्षा को प्रकरण कहा जा सकता है। किसी वाक्य में क्रिया के सम्पादन का विधान मिलता है और तद्भिन्न वाक्य में फल का विधान प्राप्त होता है। पहले प्रकार के वाक्यों में 'किं भावयेत्'? की आकाङ्क्षा है और दूसरे प्रकार के वाक्यों में 'कथं भावयेत्?' की। इस प्रक्रिया को दृष्टान्त द्वारा इस प्रकार समझ सकते हैं। 'समिधो यजति, तनूनपातं यजति' इत्यादि प्रयाजादि वाक्य केवल क्रिया का विधान करते हैं इनमें फल का

निर्देश उपलब्ध नहीं होता। अतः फलाकाङ्क्षा होने पर 'किं भावयेत् ? किसका सम्पादन करे ? यह प्रश्न उठता है। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' यह दूसरा वाक्य है जिसका अर्थ है 'दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्' अर्थात् 'दर्श' एवं 'पूर्णमास' यागों से स्वर्ग की भावना करें। परन्तु स्वर्गादिरूप फल विधान होने पर भी क्रिया का विधान नहीं है अतः आकाङ्क्षा होती है—**कथं स्वर्गं भावयेत्** ? इस विवेचन से यह स्पष्ट हो जाता है ये दोनों वाक्य परस्पर साकांक्ष है। अतः परस्पराकांक्षा रूप प्रकरण प्रमाण से प्रयाजादि अङ्ग है और स्वर्गादिरूप उत्कृष्ट फल का विधायक होने के कारण दर्शपूर्णमास अङ्गी है। अङ्गाङ्गिभाव एक दूसरे के बिना सम्भव नहीं है अतः प्रकरण का लक्षण[1] इसमें सर्वथा घटित होता है।

## प्रकरणद्वैविध्यम्—महाप्रकरणमवान्तरप्रकरणञ्च

तच्च प्रकरणं द्विविधम्। महाप्रकरणमवान्तरप्रकरणञ्चेति। तत्र मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणम्। तेन च प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम्। एतच्च प्रकृतावेव उभयाकाङ्क्षायाः संभवान्न तु विकृतौ। तत्र 'प्रकृतिवद्विकृतिः कर्त्तव्ये'त्यतिदेशेन कथंभावाकाङ्क्षाया उपशमेनापूर्वाङ्गनामप्युभयाकाङ्क्षया विनियोगासंभवात्। तस्मादपूर्वाङ्गानां स्थानादेव विकृत्यर्थत्वमिति।

अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम्। तेन चाभिक्रमणादीनां प्रयाजाद्यङ्गत्वम्। तच्च संदंशेनैव ज्ञायते। तदभावे चाविशेषात्सर्वेषां फलभावनाकथंभावेन ग्रहणप्रसङ्गेन प्रधानाङ्गत्वापत्तेः।

## अर्थालोकः

प्रकरणं विभजते—**तच्चेति**। महाप्रकरणं लक्षयति—**मुख्येति**। **मुख्य भावना**—फलभावना। फलं भाव्यं यस्यां भावनायां सा मुख्यभावनेत्यर्थः। **तेन** महाप्रकरणेन। **एतच्च** महाप्रकरणञ्च। प्रकृतावेवेत्यनन्तरं विनियोजकमिति शेषः। यत्र समग्राङ्गोपदेशः सा प्रकृतिरिति प्रकृतेः प्राग् लक्षणमुक्तम्। उपदिष्टाङ्गानाम् उपकार्याकाङ्क्षा, प्रधानस्य चोपकारकाकाङ्क्षेति हेतुमाह—**उभयेति**। एवमुभयाकाङ्क्षा विकृतौ नास्तीत्याह—**न त्विति**। यत्र न समग्राङ्गोपदेशः सा विकृतिरिति लक्षणलक्षितायां विकृतौ सौर्यादावित्यर्थः।

---

१. **उभयाङ्क्षा**—उभयं वाक्यद्वयं तस्य मिथो या आकाङ्क्षा सैव **प्रकरणपदवाच्या**। तथा च मिथः साकाङ्क्षवाक्यद्वयं एव प्रकरणे पर्यस्यति। द्वयमिति उपलक्षणम्। **तेन** तथाविधवाक्यत्रयस्य तच्चतुष्टयस्य वा प्रकरणत्वेऽपि न क्षतिः।—[ द्रष्टव्य—अमला टीका पृ० ७२ ]

विकृतौ महाप्रकरणस्य विनियोजकत्वाभावमुपपादयति—**तत्रेति** । तत्र विकृतौ । **उपशमेनेति** । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र कथम्भावाकाङ्क्षायां स्वसन्निधौ पर्याप्ताङ्गानामनाम्नानात् प्रकृतितोऽङ्गानि गृह्णाति। तैरङ्गैराकाङ्क्षायाः शान्तत्वेनेत्यर्थः। प्राकृताङ्गानां प्रकृत्युपकारकत्वस्य सिद्धत्वेन नोपकार्याकाङ्क्षा, विकृतेः केवलमुपकारकाकाङ्क्षा। सा चातिदेशप्राप्ताङ्गैः शान्तेत्युभयाकाङ्क्षाभावात् न महाप्रकरणं विकृतौ विनियोजकमिति भावः। ननु सौर्ययागसन्निधौ कतिपयान्यपूर्वाङ्गानि यान्युपहोमादीनि तान्येव विकृतेरुपकारकाकाङ्क्षां पूरयन्तु। तथा सत्युभयाकाङ्क्षासत्त्वात् विकृतौ महाप्रकरणं विनियोजकं भवितुमर्हतीत्यत आह—**अपूर्वेति**। सत्यमपूर्वाण्यङ्गानि वैकृतानि सन्ति, सत्यञ्च तेषामुपकार्याकाङ्क्षा सती, किन्तु विकृतिर्न तान्याकाङ्क्षत इत्युभयाकाङ्क्षाभावेन न प्रकरणं विनियोजकमित्याह—**विनियोगासम्भवादिति**। प्राकृतानां क्लृप्तोपकारकत्वेन वैकृतानाञ्च कल्प्योपकारकत्वेन भेदात् क्लृप्तकल्प्योपकारकयोः क्लृप्तोपकारकाणां प्रथमोपस्थितत्वेन तैराकाङ्क्षायां शान्तायां उभयाकाङ्क्षासत्वात् वैकृतानां न प्रकरणं विनियोजकमिति भावः। अपूर्वाङ्गानां प्रकरणाग्राह्यत्वे तेषां विनियोजकं प्रमाणं किमित्यत आह—**स्थानादेवेति**। **विकृत्यर्थत्वं** विकृत्यङ्गत्वम्।

एवं महाप्रकरणं निरूप्यावान्तरप्रकरणं निरूपयति **अङ्गेति**। अङ्गविधायकवाक्येषु आख्यातप्रतिपाद्या भावना अङ्गभावना तत्सम्बन्धिप्रकरणमित्यर्थः। **तेन** अवान्तरप्रकरणेन। प्रयाजाद्यङ्गत्वमित्यनन्तरं बोध्यत इति शेषः। **अभिक्रमणादीनामिति**। पञ्च प्रयाजान् विधाय केचन विशेषा आम्नाताः। तत्र 'अभिक्रामं जुहोति' इति श्रुतम्। अध्वर्युः प्रयाजानुष्ठानावसरे किञ्चिदभिक्रम्याभिक्रम्याहवनीयदेशं प्रति पदनिक्षेपणं कुर्वन् जुहुयादित्यर्थः। तदस्याभिक्रमणस्य पदनिक्षेपणरूपव्यापारस्य प्रयाजाङ्गत्वमवान्तरप्रकरणात्। 'समिधो यजति' 'तनूनपातं यजति' इत्यादौ आख्यातोपत्ताङ्गभावनायाः मुख्यभावनावत् किं केन कथमित्याकाङ्क्षा जायन्ते। तत्र साध्याकांक्षायां प्रधानयागोपकारः, साधनाकांक्षायाञ्च धात्वर्थश्चान्वयं प्राप्नुतः—समिद्यागेन तनूनपाद्यागेन प्रकृतयागोपकारं भावयेदिति। कथम्भावाकाङ्क्षायाम् अभिक्रमणादयोऽन्वियन्ति—अभिक्रमणादिभिरुपकृतैः प्रयाजैः प्रकृतयागोपकारं कुर्यादिति। ननु दर्शपूर्णमासप्रकरणेऽविशेषेण सर्वाण्यङ्गानि समाम्नायन्ते। यथा प्रयाजादयः तथैवाभिक्रमणादयः। तत्र प्रयाजानां दर्शपूर्णमासाङ्गत्वम् अभिक्रमणादीनाञ्च तदनङ्गत्वं किन्तु प्रयाजाङ्गत्वमिति कथं ज्ञायताम्? इत्यत आह—**तच्चेति**। अभिक्रमणादीनां

प्रयाजाङ्गत्वञ्चेत्यर्थः । **सन्दंशेनैव** सन्दंशस्वरूपमनुपदमेव स्फुटीभविष्यति । **तदभावे** सन्दंशाभावे । **फलभावना** फलभाव्यकभावना तत्कथम्भावेनाभिक्रमणादीनामपि प्रधानार्थत्वमिति चेन्न; सन्दंशाभावे प्रधानार्थत्वमेव तेषाम् । अस्ति चात्र सन्दंशः । सति सन्दंशे तेन प्रयाजार्थत्वमेवाभिक्रमणस्य युक्तम् । तदिदमुपरिष्टाद् व्यक्तीभविष्यति ।

**अनुवाद**—प्रकरण के दो भेद होते हैं—महाप्रकरण एवं अवान्तरप्रकरण। उनमें मुख्य भावना[1] सम्बन्धी प्रकरण को महाप्रकरण कहा जाता है। इस महाप्रकरण प्रमाण से प्रयाजादि दर्श एवं पूर्णमास के अङ्ग होते हैं। महाप्रकरण प्रकृतियाग में प्रवृत्त होता है क्योंकि प्रकृति याग में ही उभयाकाङ्क्षा होती है विकृति याग में नहीं। विकृति याग में उभयाकाङ्क्षा 'प्रकृतिवद् विकृतिः कर्त्तव्या' इस अतिदेश वाक्य से शान्त हो जाती है अतः नवीन अङ्गों का ( जो प्रकृति याग में विहित नहीं है ऐसे ) का विनियोग भी उभयाकाङ्क्षा से नहीं हो सकता, अत एव 'स्थानप्रमाण' से ही नवीन अङ्ग विकृति याग के अङ्ग समझे जाते हैं।

अङ्गभावना[2] सम्बन्धी प्रकरण को ही अवान्तर प्रकरण कहते हैं। इससे प्रयाजादि याग के प्रति अभिक्रमणादि[3] क्रियायें अङ्ग मानी जाती है। अङ्गत्व का ज्ञान संदंश ( दो के मध्य पठित ) से होता है। संदंश के विना प्रयाज, एवं अभिक्रमणादि सदृश अन्य क्रियायें फल भावना अर्थात् फलाकाङ्क्षा में अन्वित होकर प्रधान दर्शादि याग का अङ्ग समझी जाने लगेंगी।

## अर्थालोकलोचन

मीमांसक के मत में स्वर्ग रूप फल ही मुख्य होता है अतः 'यागेन स्वर्गं भावयेत्' में स्वर्ग को मुख्यभावना या फल भावना से अभिहित किया जाता है। महाप्रकरण का सम्बन्ध मुख्य भावना से होता है। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' ( दर्शपूर्णमासाभ्यां स्वर्गं भावयेत ) एवं 'समिधो यजति' समिद्यागेन भवयेत्, दोनों ही वाक्यों से भावना का बोध होता है परन्तु 'स्वर्गं भावयेत्' में स्वर्गादि की उत्कृष्टता से इसे मुख्य भावना का प्रतिपादक माना जाता है। 'समिधो यजति' आदि से अङ्ग भावना का बोध होता है क्योंकि प्रयाजादि अङ्गों का विधान इनके द्वारा होता है अतः अङ्गाङ्गिभाव या मुख्य प्रधान भाव का निर्णय महाप्रकरण द्वारा होता है।

एक अन्य तथ्य को विकृति याग के दृष्टान्त द्वारा समझा जा सकता है। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चस कामः' यह विकृति याग है। दर्शपूर्णमास इसका प्रकृति याग है। इस

---

१. **मुख्यभावना**—'यागेन स्वर्गं भावयेदिति फलभावना ।

२. **अङ्गभावना**—अङ्गविधिबोधितभावना प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्येवमादिरूपा ।

३. **अभिक्रमणं**—होमकाले आहवनीयमभितः सञ्चरणम् । होमकाले आहवनीयसमीपे वर्तनमिति यावत् । [ द्रष्टव्य—प्रतिपादिका टीका पृ०-७० ]

वाक्य का अर्थ है—**'सौर्यचरुणा ब्रह्मवर्चसं भावयेत्'**। परन्तु जब यह आकाङ्क्षा होती है कि 'सौर्यचरुणा कथं ब्रह्मवर्चसं भावयेत्' तब अतिदेश सिद्धान्त 'प्रकृतिवद् विकृतिः कर्त्तव्या' द्वारा कथंभावाकाङ्क्षा की शान्ति हो जाती है अतः प्रकरण की प्रवृत्ति विकृति याग में नहीं होती।

अङ्गभावना से सम्बन्धित प्रकरण को अवान्तरप्रकरण कहा गया है। 'प्रयाजाः कर्त्तव्याः' वाक्य से 'समिधो यजति' आदि पाँच प्रकार के याग का विधान है ये सभी याग प्रधानभूतदर्शपूर्णमास के अङ्ग हैं क्योंकि अङ्गभावना में **'कथंभावाकांक्षा'** निहित है—प्रयाजैः कथं भावयेत् ? इस सन्दर्भ में अभिक्रमणादि क्रिया का भी विधान मिलता है। 'अभिक्रमणेन किं भावयेत्' आदि वाक्य **'फलाकाङ्क्षा'** से युक्त है। अतः दोनों वाक्य परस्पर साकाङ्क्ष हुए। प्रकरण के माध्यम से ही अभिक्रमणादि प्रयाजादि के अङ्ग सिद्ध होते हैं अतएव **'अभिक्रमणोपकृतैः प्रयाजैर्भावयेत्'** वाक्यार्थ बोध होने से अभिक्रमणादि की 'कथंभावकाङ्क्षा' पूरी होती है। फलाकाङ्क्षा की पूर्त्ति 'अभिक्रमणेन प्रयाजोपकारं भावयेत्' इस तरह के वाक्य बोध से होगी। प्रस्तुत प्रसङ्ग में अङ्गभावना के रूप में अभिक्रमणादि का प्रयाजादि से सम्बन्धित बताया गया है अतः यह 'अवान्तर प्रकरण' के अन्तर्गत परिगणित होगा।

अब शङ्का यह होती है कि अभिक्रमणादि का प्रयाजाङ्गत्व कैसे जाना जाता है ? इसका समाधान ग्रन्थकार ने दिया है—तच्च **( अभिक्रमणादीनां** प्रयाजाङ्गत्वम् **) संदंशेनैव ज्ञायते।**

इससे पूर्व यह निश्चय किया गया है कि अवान्तर प्रकरण का सम्बन्ध अङ्गभावना से है परन्तु अभिक्रमण को संदंश पठित [ दो के मध्य पठित ] समझने के लिये यह जानना आवश्यक है कि अभिक्रमण का पाठ प्रयाजादि यागों में विहित अन्य क्रियाओं अर्थात् **घृतानयन** एवं **मिथुनवेदन** के मध्य किया गया है। अतः ये क्रियाएँ भी प्रयाजादि का अङ्गभूत हैं। इस प्रकार अभिक्रमण का अङ्गत्व संदंश से ही विदित होता है। भाव यह है कि—जैसे अवान्तर प्रकरण को विनियोजन न मानने पर दर्शपूर्णमास याग की फल भावना की **'कथंभावाकाङ्क्षा'** होने पर प्रयाजादि का सम्बन्ध हो जाता है उसी प्रकार प्रयाज के मध्य पठित अभिक्रमणादि का सम्बन्ध स्वतन्त्र रूप से प्रधान याग से होगा और तब अभिक्रमणादि प्रयाज के अङ्ग नहीं होंगे।[1]

## सन्दंशलक्षणम्

एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वं सन्दंशः, यथाभिक्रमणे। तद्धि 'समानयते जुह्वाम् उपभृतस्तेजो वा' इत्यादिना प्रयाजानुवादेन किंचिदङ्गं विधाय विधीयते 'यस्यैवं विदुषः प्रयाजा

१. संदंश के स्वरूप का निरूपण अग्रिम अनुभाग में किया गया है। इसका शाब्दिक अर्थ है—'लोहकण्टकविद्धलोहशलाकाद्वयरूपः कश्चन पदार्थः संदंशशब्देन लोके उच्यते'। हिन्दी में 'सड़सी' नाम से व्यवहार होता है।

इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् नुदते'। अभिक्रामं जुहोत्यभिजित्यै' इति। तदनन्तरं 'यो वै प्रयाजानां मिथुनं वेद' इत्यादिना किंचिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये विहितमभिक्रमणं तदङ्गम्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदिति ज्ञाते कथमेभिरपूर्वं कर्त्तव्यमिति कथंभावाकांक्षायाः सत्त्वात्। स च सन्दंशपतितैरभिक्रमणादिभिः शाम्यति। न चाङ्गभावनायाः कथंभावाकांक्षाभावः, भावनासामान्येन तत्रापि तत्संभवात्।

## अर्थालोकः

ननु को नाम सन्दंशः? येनाभिक्रमणादीनां प्रयाजार्थत्वं सिध्यति न प्रधानार्थत्वमिति चेदाह—**एकेति**। एकमङ्गमनूद्य विहितयोर्द्वयोरङ्गयोर्मध्ये विहितत्वं सन्दंशत्वम्। **अभिक्रमणमिति**। 'अभिक्रामं जुहोति' इति विहितमभिक्रमणं पदनिक्षेपणरूपमित्यर्थः। अभिक्रमणस्य सन्दंशपतितत्वमुपपादयति—**तद्धीत्यादिना**। अत्रेदं बोध्यम्—स्रुक्छब्दाभिधेयेषु जुहूपभृद्ध्रुवाख्येषु पात्रेषु आज्यस्थालीतः स्रुवेण प्रयाद्यर्थमाज्यं गृह्णात्यध्वर्युः। तत्र 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इत्याज्यग्रहणं चतुर्वारं विहितम्। तच्चाज्यं प्रयाजार्थमिति तदर्थः। 'अष्टावुपभृति गृह्णाति, प्रयाजानूयाजेभ्यस्तत्' इति वाक्येनाष्टवारमाज्यं गृह्णीयात् तच्च प्रयाजानूयाजार्थम्। 'चतुर्ध्रुवायां गृह्णाति, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इति वाक्येन ध्रुवायां यच्चतुर्वारग्रहणं विहितं तत्सर्वयज्ञार्थम्। प्रयाजार्थमाज्यं जुह्वामुपभृति च विद्यते। तत्र जुहूगताज्येन प्रथमप्रयाजत्रयमनुष्ठीयते। उपभृद्गताज्येनावशिष्टप्रयाजद्वयमनुष्ठीयत इति स्थितिः। प्रयाजाश्च जुहूपात्रेणैव इज्यन्ते। जुहूगताज्येन समिद्यागे तनूनपाद्यागे इडोयागे च सम्पादितेऽवशिष्टप्रयाजद्वयस्य तत्राज्याभावात् उपभृद्गताज्यं जुह्वां समानीयते। तदिदं प्रदर्शयति—**समानयत** इति। तेजोरूपमौपभृतमाज्यं अवशिष्टप्रयाजद्वयानुष्ठानाय जुह्वामानयतीति तदर्थः। इदमेकं प्रयाजोद्देशेन विहितमङ्गम्। **किञ्चिदङ्गम्** जुह्वामौपभृताज्यसमानयनरूपमङ्गम्। एतदनन्तरं विहितमङ्गं दर्शयति—'अभिक्रामं जुहोति' इति। 'यस्यैवं विदुषः' इत्यादिरर्थवादः। एवंविदुषः एवं ज्ञानवतो यस्य यजमानस्य प्रयाजा इज्यन्तेऽनुष्ठीयन्ते तस्येति शेषः। एभ्यो लोकेभ्य भ्रातृव्यान् शत्रून् प्रणुदते विशेषेण व्यथयतीत्यर्थः। अर्थादेवं ज्ञानसम्पन्नो यो यजमानः प्रयाजाननुतिष्ठति तस्य शत्रवः क्लेशमवाप्नुवन्तीति भावः। एवं सार्थवादमभिक्रमणं विधायानन्तरं द्वितीयमङ्गं दर्शयितुं तदर्थवादमाह—**यो वै** इति। इत्यादिना

इत्यादिपदेन 'प्रयाजानिष्ट्वा हवींष्यभिधारयति' इत्यस्य ग्रहणम्। यो वै इत्यर्थवादः, नानेन किञ्चिद्विधीयते 'प्रयाजानाम्' इति पदेन प्रयाजसम्बन्धमात्रं ज्ञायते। विधानन्तु 'प्रयाजानिष्ट्वा' इत्यनेनैवेति बोध्यम्। **किञ्चिदङ्गं विधीयते** प्रयाजशेषेण हविरभिधारणरूपमङ्गं विधीयत इत्यर्थः। **प्रयाजाङ्गमध्य** इति। पूर्वमङ्गं जुह्वामौपभृतसमानयनरूपम् पाश्चात्यमङ्गञ्च हविरभिधारणरूपम्। अनयोर्मध्य इत्यर्थः। पूर्वमुत्तरञ्चाङ्गं यथा प्रयाजसम्बन्धि तथा मध्यपतितमभिक्रमणमपि **तदङ्गं** प्रयाजाङ्गमित्यर्थः। अयमेव सन्दंशः।

नन्वस्तु सन्दंशः, अस्तु च तेनाभिक्रमणादेर्ग्रहणम्, तथापि 'समिधो यजति' इत्यादिषु भावनायाः कथम्भावाकाङ्क्षायां सत्यां तत्पूरकत्वेन सन्दंश उपकुर्यात्। सा चाकाङ्क्षाङ्गभावनाया नास्ति। उभयाकाङ्क्षैव खलु प्रकरणम्। प्रयाजादयः स्वयं दर्शपूर्णमासयोरङ्गम्। न तत्र फलं किञ्चिच्छ्रूयते, येन तत्र कथम्भावाकाङ्क्षा समुदियादित्यत आह—**प्रयाजैरिति**। प्रयाजविधायकवाक्येषु फलश्रवणाभावे प्रयाजा दर्शपूर्णमासोपकारकाः। तेषामुपकारकत्वञ्चादृष्टजननद्वारा। स्वस्वानुष्ठानेनापूर्वं सम्पाद्य यागोपकारः कर्तव्यः। अपूर्वद्वारा यागोपकारः फलं प्रयाजानाम्। तत्राकाङ्क्षास्तीत्याह—**कथमेभि**रिति। **एभिः** प्रयाजैः। सर्वस्या अपि क्रियाया अनुष्ठाने कश्चन प्रकारो भवति। प्रकारश्च विशेषः। समिद्यागेन यागोपकारं भावयेदित्युक्ते केन प्रकारेणेत्याकांक्षा जायत एव। अतोऽङ्गभावनास्वपि क्रियानुष्ठानप्रकाराकांक्षास्त्येव। सैवाकांक्षा कथम्भावाकांक्षा, इतिकर्तव्यताकांक्षेत्यभिधीयत इति भावः। एवमाकांक्षायां जातायां प्रकरणस्य तत्र नोपयोगः, प्रयाजक्रियाया इतिकर्तव्यताकाङ्क्षावत्त्वात्। अतस्तदाकांक्षापूरणाय प्रकरणातिरिक्तं प्रमाणमावश्यकम्। तदेवावान्तरप्रकरणम्। तत्र च नियामकस्सन्दंश इत्याह—**सन्दंशेति**। अत्र शङ्कते—**न चेति**। समाधत्ते—**भावेने**ति। भावनात्वावच्छिन्नत्वेनेत्यर्थः। तत्रापि प्रयाजाद्यङ्गभावनायामपि। **तत्सम्भवात्** कथम्भावाकांक्षासम्भवात्। अतोऽवान्तरप्रकरणेनाभिक्रमणादीनां प्रयाजाङ्गत्वं सिद्धम्।

**अनुवाद**—प्रधान याग के एक अंग का अनुवाद करके विधीयमान दो अंगों के मध्य में किये जाने वाले विधान को संदंश कहते हैं। यथा—अभिक्रमण में।[1] इस

१. **अभिक्रमणम्** (क) 'प्रतिप्रयाजं किञ्चिदनन्तरम् आहवनीयसमीपदेशं प्रतिपदप्रक्षेपणम्।' —सारविवेचिनी.

(ख) 'अभिक्रामम् अभिक्रम्य अभिक्रम्य अदूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहूयात्। एवमुत्तरम्। तदेतद**भिक्रमणम्**।'—सायण.

अभिक्रमण में प्रयाज का अनुवाद करके 'समानयते जुहा उपभृतस्तेजो वा''[1] अर्थात् उपभृत नामक पात्र विशेष से जुहू में घृत लाता है।' इत्यादि वाक्य से घृतानयन रूप अङ्ग का विधान करके, अभिक्रमण संज्ञक क्रिया का विधान **'यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् नुदते अभिक्रामं जुहोत्यभिजित्यै'** अर्थात् इस प्रकार जानने वाला विद्वान् यदि प्रयाजों का अनुष्ठान करता है तो वह भ्रातृष्पुत्रादि शत्रुओं को इस लोक से भगा देता है, अर्थात् पराजित कर देता है, विजय के लिये उसे अभिक्रमण का अनुष्ठान करना चाहिये आदि वाक्य से किया जाता है। इसके अनन्तर **'यो वै प्रयाजानां मिथुनं वेद'** अर्थात् जो इन दोनों = ( मिथुन ) प्रयाजों को जानता है इस वाक्य से प्रयाज द्वय के ज्ञान रूप अङ्ग का विधान किया जाता है। अतः प्रयाज के अङ्गद्वय—(१) घृतानयन एवं (२) मिथुन वेदन के बीच में पठित 'अभिक्रमण' क्रिया भी ( संदंश से ) प्रयाज का अङ्ग होती है। क्योंकि **'प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेत्'** अर्थात् 'प्रयाज से अपूर्व सम्पादन कर यागोपकार की भावना करे' इस प्रकार बोध होने पर 'इनसे अपूर्व की भावना कैसे की जाय' यह 'कथं भावाकाङ्क्षा' ( कथं भाव = कैसे किया जाय ) इस प्रकार की इच्छा होती है। इसे 'कैसे की जाय' रूप आकांक्षा का उपशमन संदंश पठित अभिक्रमणादि क्रियाओं से होती है। इस प्रसङ्ग में यह कहना ठीक नहीं है कि अङ्ग भावना में 'कथं भाव' रूप आकाङ्क्षा नहीं होती क्योंकि प्रत्येक भावना में कथं भावाकाङ्क्षा रहती है। अङ्ग भावना भी भावना सामान्य होने से 'कथं भावाकाङ्क्षा' युत होगी।

## अर्थालोकलोचन

अवान्तर प्रकरण के निरूपण के समय ग्रन्थकार ने 'संदंश' का संकेत मात्र किया है उसके स्वरूप पर वहाँ विचार प्रसङ्ग प्राप्त न होने से प्रस्तुत अवतरण में सोदाहरण प्रतिपादन किया जा रहा है। संदंश का लक्षण है—**'एकाङ्गानुवादेन विधीयमानयोः अङ्गयोः अन्तराले विहितत्वम्'**। इस लक्षण को सरलतया इस प्रकार व्यक्त किया जा सकता है—

'एकाङ्गस्य दर्शपूर्णमासाङ्गस्य प्रयाजरूपस्य अनुवादेन विधीयमानयोः अङ्गयोः घृतानयनमिथुनवेदनरूपयोः प्रयाजाङ्गयोः अन्तराले मध्ये विहितत्वम्'।

'प्रयाजाः कर्त्तव्याः' इस विधायक वाक्य से 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' पञ्च प्रयाज माने जाते हैं। याज्ञिक प्रक्रिया के अनुसार जुहू नामक पात्र विशेष से समिधाग, तनूनपाद्याग एवं इड् याग में घृत की आहुतियाँ दी जाती हैं। बर्हिर्याग एवं स्वाहाकार याग में उपभृत् नामक पात्र विशेष से 'जुहू' में घृतानयन होता है। हमें इसका विधान **'समानयते ( आज्यम् ) जुह्वामुपभृतः'**—इत्यादि वाक्य से मिलता है। इस विधान के अनन्तर **'यस्यैवं विदुषः··· अभिजित्यै'** वाक्य द्वारा अभिक्रमण संज्ञक क्रिया विहित है। अभिक्रमण क्रिया के विधान

१. उपभृतो घृतपात्रविशेषात्सकाशाज्जुह्वां जुहूरूपपात्रविशेषे अर्धमाज्यं समानयेदिति तदर्थः तेजःशब्दोत्र घृतवाची।

के पश्चात् **'यो वै प्रयाजानां मिथुनं वेद'** इस वाक्य से 'मिथुनवेदन' का प्रसङ्ग निरूपित है। इस प्रकार याज्ञिकी क्रिया की दृष्टि से क्रमशः (१) घृतानयन, (२) अभिक्रमण एवं (३) मिथुनवेदन का विधान है। इससे पूर्व यह कहा गया है कि घृतानयन बर्हिर्याग, एवं स्वाहाकार याग नामक प्रयाज के निमित्त है अतः यह 'प्रयाजाङ्ग' असन्दिग्ध रूप से है। 'मिथुनवेदन' का स्वरूप अर्थवाद की तरह प्रतीत होता है तथापि वह प्रयाजाङ्ग ही है। 'अभिक्रमण' इन दोनों के मध्य पठित है अतः संदंश न्याय की आवश्यकता है। संदंश न्याय की सहायता से ही 'अभिक्रमण' को प्रयाज का अङ्ग माना जाता है। इस विवेचन को पट्टिका की सहायता से निम्नलिखित रूप में समझा जा सकता है।




प्रस्तुत प्रसङ्ग में एक शङ्का यह है कि—अङ्ग भावना में कथंभावाकाङ्क्षा का उदय नहीं हो सकता ? इस शङ्का का निरूपण अनुमान प्रमाण से अर्थ कौमुदीकार ने निम्नलिखित ढंग से किया है—

**'प्रयाजादिभावना कथंभावाकाङ्क्षाशून्या, अङ्गभावनात्वात्'**

तात्पर्य यह है कि अङ्ग भावना चूँकि अपनी प्रधान भावना की कथंभावाकाङ्क्षा की पूर्त्ति करती है, अतः स्वयं आकाङ्क्षाशून्य होगी।[1] परन्तु यह तर्क उचित नहीं है क्योंकि सामान्य सिद्धान्त के अनुसार भावना कथंभावाकाङ्क्षायुक्त रहती है अतः अङ्गभावना या प्रधानभावना का पार्थक्य प्रदर्शित करना समीचीन नहीं है। इस प्रकार प्रयाजादि में कथंभावाकाङ्क्षा की स्वीकृति ठीक है।[2]

## प्रकरणं क्रियाया एव साक्षाद् विनियोजकम्

तदिदं प्रकरणं क्रियाया एव साक्षाद्विनियोजकं द्रव्यगुणयोस्तु तद्द्वारा। तथाहि—'यजेत स्वर्गकामः' इत्यत्र फलभावनायां कथंभावाकाङ्क्षायां सन्निधिपठिताश्रूयमाणफलकं क्रियाजातमुपकार्या-

---

१. 'अत्र प्रधानभावनानामेव इतिकर्त्तव्यताकाङ्क्षा, तासामेव फलसाधनत्वेन कथमिति आकाङ्क्षोदयात्. न अङ्गभावनानाम्, तासामफलत्वात् इति वदतां **प्रभाकराणां** मतमनुवदति।' —सारविवेचिनी.

२. 'प्रयाजाद्यङ्गभावना कथंभावसाकाङ्क्षाभावनात्वाद् दर्शादिभावनावदिति प्रयोगोऽत्र द्रष्टव्यः।' —अर्थकौमुदी.

काङ्क्षयेतिकर्त्तव्यतान्वेनान्वेति । क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात् । न हि हस्तेन कुठारेण छिन्द्यादित्यत्र कथंभावाकाङ्क्षायामुच्चार्यमाणोऽपि हस्तोऽन्वेति । किन्तु हस्तेनोद्यम्य निपात्येति उद्यमननिपातने एव । हस्तश्च तद्द्वारैवान्वेतीति सार्वजनीनमेतत् ।

## अर्थालोकः

प्रकरणगतं कश्चिद्विशेषमाह—**तदिदमि**त्यादिना । एवकारेण द्रव्यगुणजात्यादीनां व्यावृत्तिः । ननु द्रव्यगुणादीनां व्यावृत्तौ सत्यामङ्गत्वं तेषां कथं सिध्यतीत्यत आह—**तद्द्वारेति** । क्रियाद्वारेत्यर्थः । तदिदमुपपादयति—**तथाही**त्यादिना । स्पष्टम् । **न हीति** । छिन्द्यादित्याख्यातोपात्तभावनायाः **कथम्भावाकाङ्क्षायां** कथं कुठारेण छिन्द्याम् इत्याकारिकायाम् हस्त इत्युच्चार्यमाणो हस्तो न ह्यन्वेतीत्यन्वयः । हस्त इत्युच्चार्यमाणोऽपि आकाङ्क्षाया अनुपरमादिति भावः । तत्र किमुच्चारणीयमित्यत्राह—**उद्यम्येति** । हस्तेनोद्यम्य निपातयेत्युक्ते तदाकांक्षाया उपरमादित्यर्थः । **सार्वजनीनं** सर्वजनविदितमित्यर्थः ।

**अनुवाद**—महाप्रकरण एवं अवान्तरप्रकरण—इन प्रकरणद्वय से साक्षात् क्रिया ही विनियुक्त होती है, द्रव्य एवं गुण का विनियोग तो क्रिया के द्वारा होता है । यथा—**'यजेत स्वर्गकामः'** इस विधिवाक्य से 'स्वर्गरूप फलभावना का सम्पादन कैसे किया जाय' इस तरह फलभावना में कथंभावाकाङ्क्षा होने पर समीप पठित अश्रूयमाण फलयुक्त क्रिया समूह का ही, प्रधान की आकाङ्क्षा से इतिकर्त्तव्यता रूप में अन्वय होता है । लोक में भी कथंभाव अथवा इतिकर्त्तव्यता की आकाङ्क्षा होने पर क्रिया का ही अन्वय दृष्टिगत होता है । यथा—**हस्तेन कुठारेण छिन्द्यात्** अर्थात् हाथ से कुल्हाड़े द्वारा लकड़ी काटनी चाहिये यहाँ पर 'कथंभाव' की आकांक्षा होने पर यद्यपि 'हस्तेन' हाथ से ऐसा उच्चारण किया गया है तथापि 'हस्त' का अन्वय नहीं होता अपितु हाथ से उठाकर ( =उद्यमन ) एवं गिराकर ( = निपातन ) इस उद्यमन एवं निपातन रूपक्रियाद्वय का ही अन्वय होता है । और हाथ का उद्यमनादिरूप क्रिया द्वारा अन्वय होता है इस प्रकार की प्रतीति सार्वजनिक है ।

## अर्थालोकलोचन

महाप्रकरण एवं अवान्तरप्रकरण से अङ्गाङ्गिभाव या शेषशेषिभाव का ज्ञान होता है, यह इससे पूर्व कहा जा चुका है । किन्तु प्रकरण प्रमाण का श्रुतिलिङ्ग आदि प्रमाणों से कुछ मौलिक भेद है । इस भेद को स्पष्ट करने हेतु ग्रन्थकार ने कहा है—**'प्रकरणं क्रियाया एव साक्षाद्विनियोजकम्'** ।

श्रुति प्रमाण द्वारा व्रीहिरूप द्रव्य का, आरुण्य रूप गुण का, प्रोक्षणरूप क्रिया का **'इमामगृभ्णन्'** आदि मन्त्र का एवं एकत्व, पुस्त्वं आदि का विनियोग होता है । लिङ्गप्रमाण द्वारा केवल मन्त्रों का विनियोग जाना जा सकता है यथा—'बर्हिर्देवसदनं दामि या

'स्योनं ते सदनं कृणोमि'। वाक्य द्वारा जातिरूप अङ्ग का विनियोग मिलता है। यथा—**'यस्य पर्णमयी जुहूर्भवति'** में पर्णता का विधान है। इन तीनों प्रमाण से भिन्न प्रकरण प्रमाण केवल क्रिया का विनियोजक होता है। वस्तुतः यह क्रिया का विनियोजक साक्षात् रूप से होता है द्रव्यगुणादि का परम्परया। आशय यह है कि 'यजेत स्वर्गकामः' इस महाप्रकरणगत वाक्य में कथंभावाकाङ्क्षा है जिससे मुख्यभावना या फलभावना तक पहुँचा जा सके। इस वाक्य के समीप में प्रयाजादि यागों का समूह भी पठित है जिनमें केवल क्रिया समूह ( क्रियाजातम् ) का ही विधान है, फल की कोई चर्चा नहीं है अतः इन्हें ( प्रयाजादि ) को **'अश्रूयमाणफलक'** कहा गया है अतः इनमें कथंभावाकाङ्क्षा का अभाव होते हुये भी फलाकाङ्क्षा है। इस परिस्थिति में दोनों ही **'नष्टाश्वदग्धरथन्याय'** से परस्पर की आकाङ्क्षापूर्त्ति में सहायक होते हैं। यह महाप्रकरण के सम्बन्ध में है।

इस प्रकार यदि अवान्तरप्रकरण पर दृष्टिपात करें तो विदित होगा जैसे प्रयाजादि क्रियाएँ दर्शयाग की अंग हो जाती हैं उसी प्रकार अभिक्रमण आदि क्रियाएँ अवान्तर प्रकरण से अंग होती हैं। इस प्रकार प्रयाज एवं अभिक्रमण दोनों क्रियाओं के विनियोजक क्रमशः महाप्रकरण एवं आवान्तर प्रकरण हुए। अतः 'प्रकरणं क्रियाया एव[१] साक्षाद्विनियोजकम्'—यह बात चरितार्थ होती है।

## प्रकरणस्य स्थानादिभ्यः प्राबल्यविवेचनम्

इदञ्च स्थानादिभ्यो बलवत्। अत एव 'अक्षैर्दीव्यति' 'राजन्यं जिनाति' इति देवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि स्थानान्न तदङ्गम्, किन्तु प्रकरणाद्राजसूयाङ्गमिति।

## अर्थालोकः

प्रकरणस्य स्थानादिभ्यः प्राबल्यं निरूपयति—**तदिदमित्यादिना**। उदाहरति—**अक्षैरिति**। अत्रायं विषयः—अस्ति राजसूययागः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति विहितः। राजसूयेनेति नामधेयम्। राजन् पदं क्षत्रियवाचकम्। राज्यं करोति यः स राजेति न व्युत्पत्तिः किन्तु राज्ञस्सतस्तत्कर्म राज्यम् इति। स्वाराज्यकामो राजा क्षत्रियः राजसूयसंज्ञकयागेन तत्फलं सम्पादयेदिति वाक्यार्थः। अस्मिन् प्रकरणे बह्वय इष्टयो दर्विहोमाः, पशुयागाः, सोमयागाश्च विहिताः। इमे समप्रधानाः। तत्राभिषेचनीयाख्यः कश्चन सोमयागः।. तत्सन्निधौ विहितः 'अक्षैर्दीव्यति' इति। अक्षैर्दीवनं द्यूतखेलनम्। राजन्यं जिनाति राजन्यजयः। 'शौनश्शेपमाख्यापयति' शुनश्शेपोपाख्यानश्रावणं विदेवनादय इत्यादिपदेनेमे ग्राह्याः। **धर्माः** अङ्गानि। एतेषां किं प्रकरणाद्राजसूयाङ्गत्वम् उत स्थानात् अभिषेचनीयाङ्गत्वमिति संशय आह—**स्थानान्नेति**। तदङ्गं अभिषेचनीयसोमाङ्गम्। **प्रकरणात्** राजसूयप्रकरणात्। विदेवनादीनां

स्थानात्सोमयागाङ्गत्वमन्यतराकांक्षया वक्तव्यम्, अभिषेचनीयस्य सोमयागत्वेन ज्योतिष्टोमविकृतित्वात् 'प्रकृतिवत्' इत्यतिदेशेन प्राप्ताङ्गैर्निराकाङ्क्षत्वात्। तत्राकाङ्क्षामुत्थाप्य यावद्विनियोक्तुं स्थानमारभते, तावदुभयाकाङ्क्षायुक्तं प्रकरणं वाक्यादि कल्पयित्वा झटिति प्रकरणं विनियुङ्क्त इति स्थानात् प्रकरणं बलीय इति राजसूयाङ्गत्वमेव विदेवनादीनाम्।

नन्विदमनुपपन्नम्—प्रकरणपठितानामिष्टिपशुसोमानां तत्तद्यागविकृतित्वात्, अतिदेशेन प्राप्तैरङ्गैरेव कथम्भावाकाङ्क्षाशान्तेः कथं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति चेद्—अभिक्रमणवदत्राप्यवान्तरप्रकरणं स्वीकृत्य राजसूयाङ्गत्वमाहुः। अथवा कृत्वाचिन्तया स्थानप्रकरणविरोधोदाहरणं स्वीकर्तव्यम्। विशेषस्तु पूज्यपादविरचितन्यायप्रकाशटीकातोऽवगन्तव्यः।

**अनुवाद**—प्रकरण प्रमाण स्थानादि प्रमाणों से बलवान् है। अत एव **'अक्षैर्दीव्यति'** ( = अक्षों से जुआ खेलता है ) एवं **'राजन्यं जिनाति'** ( = राजा को जीतता है ) इस तरह देवन ( = जुआ खेलना) आदि धर्म 'अभिषेचनीय' क्रिया के सन्निकट पठित होने पर भी 'स्थानाख्य प्रमाण' से अभिषेचनीय के अङ्ग नहीं होते अपितु प्रकरण प्रमाण के बल पर राजसूय के अङ्ग होते हैं।

## अर्थालोकलोचन

**'राजा राजसूयेन स्वराज्यकामो यजेत'** इति विधिवाक्य से 'राजसूययाग' का विधान है। इस याग में 'पशुयाग', 'इष्टियाग' एवं 'सोमयागादि विविध प्रधान कर्मों का उल्लेख मिलता है। इनमें एक 'अभिषेचनीय' याग है जिसकी सन्निधि में 'अक्षैर्दीव्यति' 'राजन्यं जिनाति' आदि अङ्गकर्मों का उपदेश है। संशय यह होता है कि क्या ये अक्षक्रीड़ा ( = देवन) आदि कर्म स्थान ( सन्निधि ) के अनुसार अभिषेचनीय याग के अङ्ग हैं अथवा प्रकरण के अनुसार राजसूय याग के अङ्ग हैं? पूर्वपक्ष का मन्तव्य है कि ये कर्म अभिषेचनीय याग के समीप में पठित है अतः उस याग के ही अङ्ग है, राजसूय के नहीं। यदि कहा जाय कि सन्निधिमात्र ही अन्वय में हेतु नहीं होती अतः यह कहना ठीक नहीं है कि सन्निधि के कारण उक्त कर्म अभिषेचनीय याग के अङ्ग है तो यह भी सत्य नहीं है। यदि मान लिया जाय कि प्रकरण की आकाङ्क्षा होने से उक्त कर्म प्रकरणवश राजसूय याग के भी अङ्ग माने जा सकते हैं तब आकाङ्क्षा एवं सन्निधि का कोई विनिगमक न होने से दोनों ही समान रूप से अपेक्षित हैं। अतः तुल्यबल होने से उक्त कर्म प्रकरण के अनुसार राजसूययाग के अङ्ग है और सन्निधिवश अभिषेचनीय याग के भी। परन्तु सिद्धान्ती इन तर्कों को संगत नहीं मानता। **सिद्धान्त पक्ष का मत है** कि स्थान जब श्रुति की कल्पना करता है तो उसे प्रकरण, वाक्य, लिङ्ग की कल्पना करके ही श्रुति की कल्पना करनी पड़ती है इसलिये स्थान विलम्ब से उपस्थित होकर विषय के अङ्गत्व का बोध कराता है परन्तु प्रकरण श्रुति के समीप होने के कारण शीघ्र उपस्थित होकर विषय के अङ्गत्व का बोध कराता है। अतः स्थान की अपेक्षा प्रकरण प्रबल है।

## स्थाननिरूपणम्

देशसामान्यं स्थानम् । तत् द्विविधं—पाठसादेश्यमनुष्ठानसादेश्यञ्चेति। स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम्—यथासंख्यपाठः सन्निधिपाठश्चेति । 'तत्रैन्द्राग्नमेकादशकपालं निर्व्वपेत्' 'वैश्वानरं द्वादशकपालं निर्वपेदि'त्येवं क्रमविहितेषु 'इन्द्राग्नी रोचना दिवः' इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवंरूपो विनियोगो यथासंख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकांक्षायां प्रथमतो विहितं कर्म्मैव प्रथममुपतिष्ठते, समानदेशत्वात् । एवं द्वितीयमन्त्रस्यापि ।

वैकृताङ्गानां प्राकृताङ्गाननुवादेन विहितानां सन्दंशापतितानां विकृत्यर्थत्वं सन्निधिपाठात् । यथा आमनहोमादीनाम् । तेषां हि कैमर्थ्याकांक्षायां फलं विकृत्यपूर्व्वमेव भाव्यत्वेन सम्बध्यते, उपस्थितत्वात् । स्वतन्त्रफलकत्वे विकृतिसंनिधिपाठानर्थक्यापत्तेः ।

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽहनि अग्नीषोमीयः पशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्माः पठ्यन्ते । अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते ॥

### अर्थालोकः

स्थानं निरूपयति—**देशेति** । **देशसामान्यं** समानदेशवत्वम् । तद्विभजते—**पाठेति** । पाठतस्समानदेशवत्वम् अनुष्ठानतश्च समानदेशवत्वमित्यर्थः ।

'तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः' इति वार्तिके क्रमशब्दः प्रयुक्तः । तस्यार्थान्तरपरत्वभ्रमं वारयितुमाह—**स्थानमिति** । अर्थान्तरं न भवतीत्यनर्थान्तरं पर्याय इत्यर्थः । **द्विविधं** द्विप्रकारम् । प्रकारं दर्शयति—**यथेति** । यथासङ्ख्यमुदाहरति—**ऐन्द्रेति**। ब्राह्मणभागे काम्येष्टिकाण्डमिति कश्चन भागः। तत्र क्रमेण ऐन्द्राग्नादयो यागास्तत्तत्फलोद्देशेन विहिताः । **क्रमविहितेषु** प्रथमं द्वितीयमिति क्रमेण विहितेष्वित्यर्थः । संहिताभागेऽपि क्रमेण 'इन्द्राग्नी रोचनादिवः' इत्यादयो मन्त्रास्समाम्नाताः । **याज्येति** । अग्नयेऽनुब्रूहीत्यध्वर्युप्रैषसमनन्तरं होत्रा पठ्यमानो मन्त्रः पुरोनुवाक्या। 'यज' इति तत्प्रैषानन्तरं होत्रा पाठ्यमानो मन्त्रो याज्या । एतेषां विनियोगं दर्शयति—**यथासङ्ख्यमिति** । एवं विनियोगे कारणमाह—**प्रथमेति** । 'इन्द्राग्नी रोचनादिवः' इति प्रथममन्त्रस्य मन्त्रोऽयं कस्मै प्रयोजनायाम्नात इति कैमर्थ्याकाङ्क्षायाम् **प्रथमतो विहितम्**—

'ऐन्द्राग्नमेकादशकपालम्' इति विहितं प्रथमं कर्मैवोपतिष्ठत इत्यर्थः। समानदेशत्वात् पाठतस्सादेश्यादित्यर्थः। **द्वितीयमन्त्रस्यापीति**। 'वैश्वानरोऽजीजनत्' इति मन्त्रस्य द्वितीयं कर्म वैश्वानरेष्टिरूपमुपतिष्ठते। सन्निधिपाठस्य लक्ष्यं दर्शयति—**वैकृताङ्गानामिति**। विकृतिसन्निधौ पठितानामपूर्वाङ्गानामित्यर्थः। **प्राकृतेति**। प्राकृतमङ्गमननूद्य विहितानामित्यर्थः। एवं सन्दंशमध्येऽपठितानाम्। **विकृत्यर्थत्वं** विकृत्यङ्गत्वम्। सन्दंशमध्यपातित्वेऽभिक्रमणवत्तेषामवान्तरप्रकरणाद्विनियोगस्स्यात्। अतस्सन्दंशापतितानामित्येव पाठः प्रकृते समुचितः। उदाहरति—**यथेति**। 'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः' इति साङ्ग्रहणेष्टिं विधाय तत्सन्निधावाम्नाताः—'आमनमस्यामनस्यदेवा इति तिस्र आहुतीर्जुहोति' इति विहिता होमाः, तेषाम्। अत्रत्यो विशेषस्सारविवेचनीतोऽवगन्तव्यः। **तेषाम्** आमनहोमानाम्। **उपस्थितत्वात्** सन्निधिनोपस्थितत्वात्। मास्तु विकृत्यर्थत्वम्, विश्वजिन्न्यायेन स्वतन्त्रफलार्थत्वमेव स्वीक्रियतामित्यत आह—**स्वतन्त्रेति**। यः फलवतः कर्मणस्सन्निधौ न पठितस्तस्यैव विश्वजिन्न्यायेन स्वतन्त्रफलार्थत्वम्। फलवतः कर्मणस्सन्निधौ पठितस्य तु 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेन विकृत्यपूर्वार्थत्वमेव। अन्यथा प्रजायानूयाजादीनामपि दर्शपूर्णमासाङ्गत्वं न सिध्येदिति भावः।

अनुष्ठानसादेश्यमुदाहरति—**पश्विति**। पशुधर्माणां पश्वङ्गानाम् उपाकरणनियोजनपर्यग्निकरणादीनामित्यर्थः। 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति वाक्यविहितपशुयागोऽग्नीषोमीयः, तदर्थत्वमित्यर्थः। ज्योतिष्टोमे पञ्चदिनसाध्ये त्रयः पशवः—अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति। तत्राग्नीषोमीयः पशुः सोमक्रयसन्निधौ पठितः। सोमक्रयश्च ज्योतिष्टोमे द्वितीयदिने क्रियते। गोहिरण्यवासःप्रभृतीनां द्रव्याणां विनिमयेन सोमलता क्रीयते। इदमेव सोमक्रयणम्। क्रयसन्निधावाम्नातोऽप्यग्नीषोमीयः पशुः 'स एष औपवसथ्येऽह्नि-द्विदैवत्यः पशुरालब्धव्यः' इति वाक्येनौपवसथ्येऽहन्युत्कृष्टस्तत्रैवानुष्ठीयते। पशुधर्मा उपाकरणादयस्तस्मिन्नेव दिने समाम्नाताः। औपवसथ्यमहः ज्योतिष्टोमस्य चतुर्थमहः। एवञ्च द्वितीयदिने समाम्नातोऽपि पशुः चतुर्थदिनेऽनुष्ठीयत इति स्थितिः। **तस्मिन्नेव दिने** चतुर्थ एव दिने, **धर्माः** पश्वङ्गानि। **तेषां** पश्वङ्गानाम्। पश्वङ्गानां पाठतः अग्नीषोमीयस्य पशोरनुष्ठानतश्च समानदेशत्वात् अग्नीषोमीयपशुरेवोपतिष्ठत इत्याङ्गानामग्नीषोमीयार्थत्वमेवेत्याह—**उपस्थितमिति**। ज्योतिष्टोमप्रकरणगतत्वेऽप्यङ्गानां प्रकरणाज्ज्योतिष्टोमार्थत्वं व्यवच्छिनत्ति **एव**कारः। यद्यपि स्थानात्प्रकरणं बलीयः, बलीयसा तेन स्थानं

बाधित्वा ज्योतिष्टोमार्थत्वं बोधयितुं शक्यते, तथापि सोमलतासाध्यकत्वाज्ज्योतिष्टोमस्य तत्रोपाकरणादिपश्वङ्गानामनुपकारकत्वात् आनर्थक्यप्रतिहतन्यायेन स्थानस्यैव प्राबल्येन पशुधर्माणामग्नीषोमीयार्थत्वमेव युक्तमिति भावः।

**अनुवाद—**देश की समानता को 'स्थान' कहते हैं।[1] 'स्थान' के दो भेद हैं—(१) पाठसादेश्य[2] एवं (२) अनुष्ठान सादेश्य[3]। स्थान और क्रम दोनों का अर्थ एक ही है, अर्थात् ये दोनों एकार्थवाची हैं। पाठसादेश्य भी दो प्रकार का है—(१) यथासंख्य-[4] पाठ और (२) सन्निधि पाठ।

**'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'** ( अर्थात् 'इन्द्र एवं अग्नि के लिये ११ कपालों से निर्मित पुरोडाश का निर्वाप करना चाहिए ) और **'वैश्वानरं द्वादशकपालं निर्वपेत्'** ( अर्थात् वैश्वानर के लिये १२ कपालों में निर्मित पुरोडाश का निर्वाप करना चाहिए ) इन दोनों वाक्यों के क्रमशः पाठ के बाद क्रम से **'इन्द्राग्नी रोचना दिवः'** एवं **'वैश्वानरो अजीजनत्'** आदि याज्यानुवाक्या मंत्रों का पाठ होता है। यहाँ पर **'यथासंख्य पाठ'** से प्रथम याग 'ऐन्द्राग्नेष्टियाग' का प्रथम मन्त्र अर्थात् **'इन्द्राग्नीरोचना दिवः'** मन्त्र अङ्ग है एवं द्वितीय **'वैश्वानरेष्टि याग'** का द्वितीय मन्त्र 'वैश्वानरोऽजीजनत्' मन्त्र अङ्ग है। क्योंकि प्रथम पठित मन्त्र में 'यह मन्त्र क्यों है इस प्रकार की आकांक्षा ( कैमर्थ्याकाङ्क्षा ) होने पर समान देश में प्रथम-विहित याग की ही विद्यमानता होती है। इसी प्रकार द्वितीय मन्त्र में 'यह मन्त्र क्यों है इस प्रकार की आकांक्षा होने पर द्वितीय विहित कर्म की उपलब्धि होती [ एवं द्वितीय मन्त्रस्यापि ]।

प्राकृताङ्ग = प्राकृत याग के अङ्गों के अननुवाद से संदंश में अपठित या अविहित जो वैकृतांग = विकृति के अंग हैं वे सन्निधि पाठ से विकृति याग के अंग होते हैं। यथा—आमन होम।[5] क्योंकि आमन होम में कैमर्थ्याकाङ्क्षा होने पर विकृति याग के अपूर्व फल का ही साध्यरूप से उपस्थित होने के कारण अन्वय होता है अर्थात् आमनहोम का फल विकृति याग के फल से ही सफल है। क्योंकि आमन होम का पृथक् फल स्वीकार करने पर विकृति सन्निधि में उसका पाठ व्यर्थ हो जायगा।

---

१. सादेश्य और देश सामान्य का तात्पर्य एक ही है। इनकी व्याख्या इस प्रकार की जा सकती है। 'समानः देशः येषां ते समानदेशाः सदेशाः वा। समानदेशानां सदेशानां वा भावः समानदेशत्वं सदेशत्वं सादेश्यं वा। समानदेशपठितयोरङ्गाङ्गिभावयोग्ययोर्द्वयोः पदार्थयोः समानदेशपठनादेवमिथोङ्गाङ्गिभावो भवतीत्यर्थः।

२. पाठमात्रावगतसमानदेशवर्तित्वमित्यर्थः। द्रष्टव्य—

**तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः।**
**पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम्॥**—श्लोकवार्त्तिक.

३. एकस्मिन् देशे अनुष्ठेयत्वेन निर्दिष्टत्वमित्यर्थः।

४. संख्यामनतिक्रम्य यथा स्यात् तथा पाठः।

५. संगृहीतं मनोऽस्मिन् इति आमनम्। छान्दसोऽन्त्यलोपः।—भट्ट भास्कर.
[ द्रष्टव्य—आमनम् अस्य आमनस्य देवा इति तिस्र आहुतीर्जुहोति। ]

अनुष्ठान सादेश्य संज्ञक स्थान प्रमाण से यह जाना जाता है कि पशुओं के जो उपकरणादि[1] धर्म हैं सब अनुष्ठान समान देश से अग्निषोमीय पशु के अङ्ग हैं। अग्नीषोमीय पशु का अनुष्ठान औपवसथ्य[2] संज्ञकदिन में होता है उसी दिन उपाकरणादि धर्मों का कथन है। इसलिये उन क्रियाओं के सम्बन्ध में कैमर्थ्याकांक्षा अर्थात् फलाकांक्षा होने पर अनुष्ठेय रूप में विद्यमान [अनुष्ठान सादेश्य के कारण] जो अग्निषोमीय पशुजन्य अपूर्व है वही साध्यरूप में अन्वित होता है।

## अर्थालोकलोचन

श्रुति, लिङ्ग, वाक्य, एवं प्रकरण नामक प्रमाणों का विवेचन करके ग्रन्थकार 'स्थान प्रमाण' का प्रतिपादन कर रहे हैं। स्थान की समानता को 'स्थान' प्रमाण कहा गया है। स्थान का अर्थ 'क्रम' भी स्वीकार किया गया है अतः जो विनियोग क्रमानुसारी होगा उसे स्थानप्रमाणगम्य मानना चाहिए। स्थानप्रमाण के उपभेदों को निम्नप्रकार से समझा जा सकता है।




**यथासंख्यपाठाद् विनियोगः—**

मैत्रायणीसंहिता

| | |
|---|---|
| यागयोः प्रधानभूतयोः अनुक्रमः | [3]याज्यानुवाक्यामन्त्राणामङ्गभूतानामनुक्रमः |
| (१) ऐन्द्राग्नम्—<br>'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'<br>मै० सं० २.१.१ | (१) 'इन्द्राग्नी रोचना दिवः' |
| (२) वैश्वानरम्—<br>'वैश्वानरं द्वादशकपालं निर्वपेत्'<br>मै० स० २.१.२ | (२) 'वैश्वानरोऽजीजनत्' |

---

१. पशुधर्माः उपाकरणादयः। प्रजापतेर्जायमानाः (तै० सं० ३।१।५) इत्यादि मन्त्रोच्चारणपूर्वकं पशोरूपस्पर्शनमुपाकरणम्। दर्भज्वालयार्चिः प्रदक्षिणीकरणं **पर्यग्निकरणम्**। यूपे रज्ज्वा बन्धनं **यूपनियोजनम्**। ज्योतिष्टोमप्रकरणे महादीक्षादिनश्चतुर्थे **औपवसथ्यसंज्ञके** दिवसेऽनुष्ठेयत्वेन यद्धर्मजातमुक्तं तत्रैते पशुधर्माः पठ्यन्ते।

२. **द्रष्टव्य**—'एतत् कृत्वा उपवसति' आपस्ताम्ब सूत्र १.२.१४.१५. 'अग्न्यन्वाधानादिपरिस्तरणान्तं कर्म कृत्वा अग्निसमीपे नियमविशिष्टो वास उपवासः'—भाष्य.

३. याज्या = इज्यते अनया, अनुवाक्या = अनूच्यते अनया।

उपरि निर्दिष्ट उदाहरण में यथासंख्य पाठ से यह ज्ञान होता है कि प्रथम मन्त्र प्रथम विधि बोध्य क्रिया का अङ्ग है एवं द्वितीय मन्त्र द्वितीय विधि बोध्य क्रिया का अङ्ग है।

**सन्निधि पाठ से विनियोगः**—'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' विधिवाक्य 'सांग्रहणी[1] नामक' विकृतियाग का विधान करता है। इसका प्रकृतियाग 'दर्शपूर्णमास' है। 'सांग्रहणीयाग' के सन्निकट ही **'आमनम् अस्य आमनस्य देवा इति तिस्र आहुतीर्जुहोति'** यह वाक्य पठित है जिसके द्वारा तीन आमन होमों का विधान है। इन आमन होमों से कोई फल विशेष निर्दिष्ट नहीं है अतः स्वभावतः इनमें 'फलाकांक्षा' है। इस प्रकार सन्निधि पाठ के बल पर 'आमन होम' सांग्रहणी याग का अङ्ग हो जाती है। सांग्रहणीयाग 'अतिदेश वाक्य' प्रकृतिवद्विकृतिः कर्त्तव्या' से समस्त प्राकृताङ्ग को प्राप्त करती है। अतः सन्निधि पाठ से आमन होम विकृति सांग्रहणी के अङ्ग माने गये।[2]

**अनुष्ठानसादेश्य से विनियोग—**




इन क्रियाओं का सम्बन्ध अग्निषोमीय पशु से समान दिन में पठित होने से हैं। औपवस्थ्य दिन में अग्निषोमीय पशु के अनुष्ठान का विधान है और वहीं पर पशुधर्मों का पाठ है। अतः सामीप्य के कारण इन दोनों का सम्बन्ध है।

## स्थानं समाख्यातः प्रबलम्

तच्च स्थानं समाख्यातः प्रबलम्। अत एव शुन्धनमन्त्रः सान्नाय्य-पात्राङ्गं पाठसादेश्यात्, न तु पौरोडाशिकमिति सामाख्यया पुरोडाशपात्राङ्गम्।

---

१. 'मनसा परस्परमैकमत्येन सम्यक् स्वीकारः संग्रहणम्। तद् यस्याम् इष्टौ अस्ति सा सांग्रहणी'—सायण।

२. 'सांग्रहणीं निर्वपेद् ग्रामकामः' इति वाक्यं तु सांग्रहण्या एव फलसम्बन्धं बोधयति, न तु आमनहोमानाम्। तस्मात् फलवत्याः सांग्रहण्याः सन्निधौ आम्नाता अफला आमनहोमाः तदङ्गम्॥—जैमिनीन्यायमाला विस्तरः, पृ० २५७.

## अर्थालोकः

स्थानस्य समाख्यातः प्राबल्यमुपपादयति—**तच्चेत्यादिना**। **शुन्धनमन्त्रः** 'शुन्धध्वं दैव्याय कर्मणे' इत्याकारकः। अनेन मन्त्रेण पात्राणां प्रोक्षणं क्रियते। केषां पात्राणामित्यत्राह—**सान्नाय्येति**। 'सान्नाय्यं दधिपयसी' इति दर्शगतदधि-पयोयागयोः सन्नाय्यमिति संज्ञा। तदीयानि पात्राणि-कुंभी-पवित्रं शाखापवित्रम् दोहनपात्रमित्यादीनि तेषामङ्गम् इत्यर्थः। तत्र हेतुः—**पाठसादेश्यादिति। पौरोडाशिकमिति** समाख्याते मन्त्रकाण्डे पठितोऽप्ययं मन्त्रः सान्नाय्ययागसन्नि-धावाम्नातः। अतः पाठसादेश्यात्तत्पात्रप्रोक्षणाङ्गमेव मन्त्रः, न तु पुरोडाश-संबन्धिपात्रप्रोक्षणाङ्गम्। एतदङ्गत्वे समाख्या प्रमाणमिति वक्तव्यम्। इयञ्च-समाख्या सुखेन व्यवहाराय याज्ञिकैः पुरुषैः कल्पिता। अतस्तदर्थनिश्चयाय तत्कल्पकपुरुषवृत्तिज्ञानयाथार्थ्यं कल्पनीयम्। तस्मात्प्रमाणान्तरसापेक्षत्वात् झटिति निश्चयो न स्यादिति पुरोडाशपात्रप्रोक्षणाङ्गत्वं विलम्बेन स्यात्। ततः पूर्वं शीघ्रप्रवृत्तिकं पाठसादेश्यं सान्नाय्यपात्रङ्गत्वेन मन्त्रं विनियुङ्क्त इति भावः।

**अनुवाद**—स्थानप्रमाण, समाख्याप्रमाण से प्रबल है। अत एव शुन्धन मन्त्र पाठ सादेश्य से सान्नाय्य ( हविष् ) पात्र का अङ्ग होता है परन्तु पौरोडाशिक इस समाख्या= ( यौगिक शब्द ) से पुरोडाश पात्र का अङ्ग नहीं होता।

## अर्थालोकलोचन

दर्शपूर्णमास प्रकरण के अन्तर्गत एक पौराडाशिक काण्ड है जहाँ पुरोडाश के उपकारक कुछ विषयों का निर्देश है। वहाँ पर **'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै'** मन्त्र सान्नाय पात्र के शुन्धन मन्त्र रूप में पठित है यहाँ संशय यह है कि उक्त मन्त्र का पौरोडाशिक समाख्या के अनुसार उलूखल, मुसल, जुहू, आदि द्रव्यों के संस्कार में विनियोग अथवा स्थान (=सन्निधि) के अनुसार सान्नाय पात्र के शोधन में प्रयुक्त होगा ? पूर्वपक्ष का मत है कि उक्त मन्त्र पौरोडाशिक समाख्या के अनुसार उलूखल आदि द्रव्यों का संस्कारक है।

सिद्धान्त पक्ष का समाधान यह है कि—'पौरोडाशिक' पद में पुरोडाशस्येदं, इस विग्रह से प्रकृति का पुरोडाश एवं ( ठक् ) प्रत्यय का काण्ड अर्थ होता है किन्तु इस प्रकार से पुरोडाश पात्र की सन्निधि प्रत्यक्ष न होने से अर्थापत्ति द्वारा उसकी कल्पना की जायेगी। समस्या यह है पुरोडाश पात्र की सन्निधि प्रत्यक्षतः न होने पर शुन्धन विधायक मन्त्र की 'पौरोडाशिक' समाख्या नहीं होगी। इस प्रकार समाख्या से सन्निधि कल्पित होगी, परन्तु प्रकरण विना परिकल्पित काण्ड सन्निधि भी अनुपपन्न है। अतः परस्पर आकांक्षारूप सम्पूर्ण पुरोडाश पात्रप्रकरण की कल्पना करनी पड़ेगी। तदनन्तर लिङ्ग एवं श्रुति से

विनियोग होगा इस प्रकार समाख्या विनियोग से अत्यन्त व्यवहित हो जाता है। परन्तु सान्नाय पात्रों का शुन्धन मन्त्र से सन्निधि प्रत्यक्ष सिद्ध है क्योंकि मन्त्र द्वारा 'कथं भावाकांक्षा' होने पर निकटस्थ सान्नायपात्र का भाग्य अपूर्व ही साध्यत्वेन अन्वित हो जाता है अतः 'समाख्या' विनियोग से विप्रकृष्ट है एवं स्थान सन्निकृष्ट।

**दर्शयाग की याज्ञिकी प्रक्रिया सूचकचित्र**




## समाख्यानिरूपणम्

समाख्या यौगिकः शब्दः। सा च द्विविधा—वैदिकी लौकिकी च। तत्र होतुश्चमसभक्षणाङ्गत्वम् होतृचमस इति वैदिक्या समाख्यया। अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्यवमिति समाख्यया इति संक्षेपः। तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि।

### अर्थालोकः

समाख्यां निरूपयति—**समाख्येति**। **वैदिकी** वेदे श्रुता अपौरुषेयी। **लौकिकी** याज्ञिकैः कल्पिता पौरुषेयी। **तत्र** वैदिकलौकिकसमाख्ययोर्मध्ये। ज्योतिष्टोमे सन्ति चमसा होत्रुद्गातृयजमानाध्वर्युपदाङ्किताः, तैश्च सोमरसो हूयते, होमान्ते तत्तच्चमसेन होत्रुद्गात्रादयस्सोमरसं भक्षयन्ति च। तत्र वैदिक्या समाख्ययाङ्गाङ्गिभावं दर्शयति—**होतुरिति**। 'होतृचमसः' इति समाख्या, तया चमसस्थसोमरसभक्षणाङ्गत्वं होतुः। यथा होतुस्तदङ्गत्वं तथाध्वर्योरपि लौकिक्या दर्शयति—**अध्वर्योरिति**। **तत्तत्पदार्थाङ्गत्वम्** तेन तेन क्रियमाणं पदार्थं प्रति तस्य तस्याङ्गत्वमित्यर्थः। **आध्वर्यवमिति**। अध्वर्युकाण्डपठितपदार्थानुष्ठानेऽ-

ध्वर्योरङ्गत्वमित्यर्थः । विनियोगविधिप्रमाणनिरूपणप्रसंगमुपसंहरति—तदेवमिति ।

**अनुवाद**—यौगिक[1] शब्दों को समाख्या[2] कहते हैं। समाख्या के दो भेद हैं—( १ ) **वैदिकी समाख्या**, ( २ ) **लौकिकी समाख्या**। इनमें **'होतृचमसः'** इस वैदिकी समाख्या से 'होता' चमस [ सोमरस ] भक्षण का अङ्ग माना जाता है।[3] **'आध्वर्यवम्'** इस लौकिकी समाख्या से 'अध्वर्यु' नामक ऋत्विक् तत्तत् क्रियाओं का अङ्ग समझा जाता है।[4]

इस प्रकार श्रुति आदि ६ प्रमाणों का संक्षेप में निरूपण किया गया।

## अर्थालोकलोचन

समाख्या का लक्षण—'यौगिकः शब्दः' किया गया है। इसके दो भेद माने गये हैं—(१) वैदिकी (२) लौकिकी। वेद में पठित यौगिक शब्दों को वैदिकी समाख्या कहा जाता है। **'प्रतु होतुश्चमसः, प्र ब्रह्मणः प्र उद्गातृणाम्'** इस प्रकार का वैदिक वाक्य है। इसके अनुसार होता ब्रह्मा एवं उद्गाता के साथ **'चमस'** नामक पात्र में सोमरस का पान करता है। **'होतुश्चमसः'** शब्द से यही भाव प्रकट होता है। 'होतुश्चमसः' से दो बातों का संकेत मिलता है—

(१) चमसभक्षणम्—चमसस्थितसोमपान।

(२) होतुश्चमसभक्षणाङ्गत्वम् अर्थात् सोमरस पान क्रिया होने के कारण 'प्रधान या अङ्गी' है एवं 'होता' उसका अङ्ग। [ द्रष्टव्य—'भक्षणस्य क्रियात्मकत्वेन प्राधान्यात् तत्कर्तुः होतुः भवति तदङ्गत्वम्।' ]

'चमसः' का अर्थ है चम्—चमति, चम्नोति, चम्यते पीयते सोमः अत्र स्थितः इति चमसः। इस प्रकार 'होतुश्चमसः' वैदिकी समाख्या है क्योंकि इसका पाठ वेद में मिलता है। 'आध्वर्यवम्' लौकिकी समाख्या है। इसका अर्थ, 'अध्वर्यु सम्बन्धी कर्म। अध्वर्यु नामक ऋत्विक् का सम्बन्ध यजुर्वेद से है अतः 'आध्वर्यवम्' समाख्या से यह ज्ञान होता है कि 'अध्वर्यु' यजुर्वेद की सभी क्रियाओं का अङ्ग है।

इस प्रकार विनियोग विधि के सहायक प्रमाणों का निरूपण समाप्त हुआ। इस प्रसङ्ग में निरूपित अब तक के विषय को चित्र के द्वारा निम्नलिखित ढंग से पूज्यपाद गुरूजी ने समझाया है—

---

१. स्वान्तर्निविष्टपदसमुदायार्थान्वयेन योऽर्थः प्रतीयते तद् बोधकः यौगिकः।

२. सम्यगाख्यायते अनेनेति व्युत्पत्त्या रूढ, योगरूढ, यौगिक', 'रूढयौगिकरूपवाचकमात्रस्यैव समाख्यातत्वं व्यावर्त्यते।

३. 'अस्य योगस्य वैदिकशब्दमात्रोपयोगितया भक्षणाधिकरणबोधकश्चमसशब्दो **वैदिकी समाख्या**।

४. अध्वर्योः कर्म आध्वर्यवमिति।

छात्राणां सुखावबोधाय स्मृतिशक्तिदार्ढ्याय च काञ्चन पट्टिका प्रदर्श्यते—






## विनियोगविधिबोधिताङ्गानि

एतत्सहकृतेन विनियोगविधिना 'समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेत' इत्येवंरूपेण यानि विनियोज्यन्ते तान्यङ्गानि द्विविधानि, सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि—गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव संनिपत्योपकारकाणि, आरादुपकारकाणीति च उच्यन्ते ।

## अर्थालोकः

प्रमाणषट्कसहकृतो विनियोगविधिर्यान्यङ्गानि बोधयति तानि विभजते—**द्विविधानीति ।** **क्रियारूपाणि** साध्यरूपाणीत्यर्थः। सिद्धान्यङ्गानि परिगणयति—**जातीति ।** आदिना लिङ्गकालादेर्ग्रहणम् । जातिः पर्णतारूपा, द्रव्यं व्रीह्यादिकम्, संख्या एकत्वद्वित्वादिः । **तानि** जात्यादीनि । **दृष्टार्थान्येव** यागादिनिष्पादक रूपेण दृष्टफलकानीत्यर्थः । 'सर्वे द्रव्यविधयो नियमविधयः' इति न्यायेन जुहूद्देशेन विधीयमानायाः पर्णतायाः यागोद्देशेन च विधीयमानानां व्रीहीणामपूर्वार्थत्वं भाति, तथापि नियमजन्यं तदपूर्वं न पर्णतया व्रीहिभिर्वा जायते, किन्तु पर्णतया सम्पादितजुहूद्वारा, व्रीहिभिर्निष्पादितयागद्वारैवापूर्वं जायत इति जात्यादीनां दृष्टार्थत्वे न काचिद्धानिरिति ज्ञेयम्। क्रियारूपाणामङ्गानां द्वैविध्यमाह—**द्विविधानीति ।** गुणकर्मणां नामान्तरं **सन्निपत्योपकारकाणि,** प्रधान-

---

**नोट :—**[ इससे पूर्व के कई चित्र प्राध्यापक राजेन्द्र गडकर द्वारा सम्पादित 'अर्थसंग्रह' से साभार ग्रहण किये गये हैं । ]—सम्पादक.

कर्मणां नामान्तरम् आरादुपकारकाणि। यागादिषु सन्निपत्य यान्युपकारकाणि तानि सन्निपत्योपकारकाणि, दूरे विद्यमानानि सन्ति यान्युपकारकाणि तान्यारादुपकारकाणीत्यर्थः।

**अनुवाद**—श्रुत्यादि ६ प्रमाणों से सहायता प्राप्त कर **'समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेत** ( अर्थात् 'समिद् आदि यागों से उपकृत हुये दर्श और पूर्णमास-संज्ञक यागानुष्ठान द्वारा इष्ट का सम्पादन करे ) इस तरह की विनियोग विधि से जिन अङ्गों का विधान होता है वे अङ्ग दो प्रकार के है—सिद्धरूप एवं क्रियारूप। इनमें 'जाति' 'द्रव्य' एवं 'संख्या' आदि सिद्धरूप अङ्ग है इन सबका प्रयोजन दिखाई देने वाला ( =दृष्ट ) है। क्रियारूप अङ्ग के दो भेद हैं—( १ ) गुणकर्म एवं ( २ ) प्रधानकर्म। इनमें से गुणकर्म को 'सन्निपत्योपकारक कर्म'[1] एवं 'प्रधानकर्म' को 'आरादुपकारक कर्म'[2] कहा जाता है।

## अर्थालोकलोचन

विनियोगविधि द्वारा विनियोजित अङ्गों के दो भेद माने गये हैं—( १ ) सिद्धरूप एवं ( २ ) क्रियारूप। प्रथम रूप अर्थात् सिद्ध रूप क्रिया की तरह उत्पाद्य या साध्य नहीं होता अतः इसके अङ्ग रूप में जाति, द्रव्य एवं संख्या आदि भेद परिगणित हैं। इस से पहले क्रमशः **'पशुना यजेत'** से 'पशुत्व' जाति का, **'व्रीहिभिर्यजेत'** से व्रीहिरूप 'द्रव्य' का **'एकहायन्या गवा सोमं'** इत्यादि वाक्य द्वारा 'संख्या' आदि का दृष्टान्त दिया जा चुका है। इनका प्रयोजन भी प्रत्यक्ष ( =दृष्ट ) है क्योंकि इनसे साध्य क्रियाओं का अनुष्ठान होता है। अतः मेरे परमगुरु जी का मत है—

**'दृष्टार्थान्येवेति—तैः क्रियानिर्वृत्तिरूपदृष्टप्रयोजनस्यैव जननादिति भावः—** ( सारविवेचिनी, पृ० ८१ )।

क्रियारूप के दो भेद हैं—(१) **गुणकर्म** एवं (२) **प्रधानकर्म**। गुणकर्म साक्षात् नहीं अपि तु परम्परया प्रधान क्रिया का अङ्ग होता है परन्तु प्रधानकर्म साक्षात् अङ्ग होता है। गुणकर्म को ही **'सन्निपत्योपकारक'** कहा जाता है क्योंकि ये किसी अङ्ग के माध्यम से मुख्य याग दर्शपूर्णमासादि के उपकारक होते है। परन्तु प्रधान कर्म या **'आरादुपकारक'** साक्षात् रूप में प्रधान क्रिया दर्शपूर्णमासादि के उपकारक होते हैं। इन दोनों के सम्बन्ध में विशेष रूप से आगे विचार किया जायेगा।

## सन्निपत्योपकारकाणि

कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम्। यथा अवघातप्रोक्षणादि। तच्च दृष्टार्थम्, अदृष्टार्थम्, दृष्टादृष्टार्थञ्चेति।

१. संनिपत्य द्रव्यादिषु संबध्य उपकुर्वन्ति तानि।

२. 'आरात् दूरतः साक्षादित्यर्थः, द्रव्यादिसंबन्धमनपेक्ष्य इति यावत्'। ( 'आराद्' दूरसमीपयोः 'अमरः' ) उपकुर्वन्ति तानि।

तत्र दृष्टार्थमवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। तद्धि द्रव्यत्यागांशेनैव अदृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति।

## अर्थालोकः

**कर्मेति।** कर्माणि यागादीनि, तेषामङ्गं व्रीह्यादि द्रव्यम्, आदिपदेन देवतादिर्ग्राह्यः। तदुद्देशेन यद्विधीयते तत् सन्निपत्योपकारकमित्यर्थः। उदाहरति—**यथेति।** 'व्रीहीनवहन्ति' इति विहितोऽवघातः, 'व्रीहीन् प्रोक्षति' इति विहितं प्रोक्षणम्। सन्निपत्योपकारकं त्रिविधमित्याह—**तच्चेति। दृष्टार्थम्** अवहनेन तुषविमोकरूपदृष्टफलजननादवहननं दृष्टार्थम्। **अदृष्टार्थम्** प्रोक्षणेन जलोक्षणेन व्रीहिषु न दृष्टं फलं किञ्चिदिति प्रोक्षणमदृष्टार्थम्। दृष्टादृष्टमुदाहरति—**पश्विति।** पशुयागेऽग्नीषोमीयादावङ्गतया विहितः पुरोडाशः—तत्साध्यको यागः पशुपुरोडाशः। पशौ या देवता तद्देवताक एव पशुपुरोडाशयागः 'यद्दैवत्यः पशुः तद्दैवत्यः पुरोडाशः' इति विधानात्। **द्रव्यत्यागांशेन** अग्नीषोमाभ्यामिदं न ममेति त्यागांशेनेत्यर्थः। अत्र चादृष्टमेव फलम्। दृष्टं फलं दर्शयति—**देवतेति।** द्रव्यत्यागावसर उद्देश्यभूताया अग्नीषोमदेवतायाः स्मरणं दृष्टं जनयतीति दृष्टार्थत्वं पशुपुरोडाशस्येत्यर्थः।

**अनुवाद :—**( होमादि ) कर्म के अङ्गभूत द्रव्य आदि को उद्देश्य करके जो कर्म विहित होता है उसे सन्निपत्योपकारक कहते हैं। जैसे—अवघात एवं सेचनादि (=प्रोक्षण)। इस सन्निपत्योपकारक के तीन भेद हैं—( १ ) दृष्ट प्रयोजन, ( २ ) अदृष्ट प्रयोजन, एवं ( ३ ) दृष्टादृष्ट प्रयोजन। इनमें अवघातादि में दृष्ट प्रयोजन है। प्रोक्षणादि में अदृष्ट प्रयोजन हैं एवं पशु परोडाशादि में दृष्टादृष्ट दोनों प्रयोजन है। क्योंकि द्रव्य त्याग अंश से ( फलापूर्वरूप ) अदृष्ट प्रयोजन को एवं देवतास्मरण रूप दृष्ट प्रयोजन दोनों की सिद्धि करता है।

## अर्थालोकलोचन

सन्निपत्योगकारक कर्म के तीन भेद माने गये हैं ( १ ) **दृष्टार्थक** ( २ ) **अदृष्टार्थक** ( ३ ) एवं **दृष्टादृष्टार्थक**।

दर्शपूर्णमासयागरूपी कर्म का द्रव्यरूपी व्रीहि अङ्ग है। इस व्रीहि के लिये अवघातादि क्रिया का विधान **'व्रीहीनवहन्ति'** आदि वाक्यों से किया गया है। प्रोक्षणादि क्रियाएँ भी विहित है। अतः अवघात प्रोक्षणादि कर्म को **'कर्माङ्गद्रव्याद्युद्देशेन' विधीयमान'** कहा जा सकता है। अतः निष्कर्ष रूप में यह **गुणकर्म** या **सन्निपत्योपकारककर्म** है। अवघात प्रोक्षादि गुणों का व्रीहि द्रव्य के आश्रित रहने से गुणकर्म कहना उचित ही है। और ये सभी प्रधान याग 'दर्शपूर्णमास' के उपकारक है अतः इन्हें सन्निपत्योपकारक कहा गया है।

**'व्रीहीन् अवहन्ति'** वाक्य द्वारा अवघात का विधान है जो परम्परया प्रधान कर्म का उपकारक है चूँकि इससे 'तुषविमोकादि' प्रत्यक्ष दिखाई पड़ने वाला कार्य सिद्ध होता है अतः इसे **'दृष्टार्थक'** कहा जाता है।

**'व्रीहीन् प्रोक्षति'** वाक्य से 'प्रोक्षण' क्रिया विहित है। प्रोक्षण यद्यपि **दृष्टरूप** में व्रीहि पर कोई प्रभाव नहीं उत्पन्न करता तथापि **अदृष्टार्थ** की कल्पना करना उचित है।

**'पशुपुरोडाशादि याग'** को दृष्टादृष्टार्थक का दृष्टान्त माना गया है। जब देवता को उद्देश्य करके पशु या पुरोडाश का त्याग किया जाता है तब **'इन्द्राय स्वाहा। इदमिन्द्राय। इदं न मम।'** रूप से मन्त्र पढ़ा जाता है। यहाँ 'द्रव्यत्यागांश' अदृष्टार्थक है। लेकिन यह क्रिया 'देवतोद्देश' से की गई है। अतः इस अंग को **'दृष्टार्थक'** माना जाता है। इस प्रकार सन्निपत्योपकारक के सन्दर्भ में **'दृष्टार्थक अदृष्टार्थक'** एवं 'दृष्टादृष्टार्थक' का विवेक हो सकता है।

## आराडुपकारकाणि

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म 'आराडुपकारकम्'। यथा—प्रयाजादि। आराडुपकारकं च परमापूर्वोत्पत्तावेवोपयुज्यते। सन्निपत्योपकारकं तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते। इदमेव चाश्रयिकर्मेत्युच्यते। तदेवं निरूपितः संक्षेपतो विनियोगविधिः।

## अर्थालोकः

आराडुपकारकं लक्षयति—**द्रव्यादीति**। यागीयद्रव्यं देवतां वोद्देश्यतयाऽपरिगृह्य तथैव विहितं कर्म आराडुपकारकमित्यर्थः। उदाहरणम्—**प्रयाजादि**। 'समिधो यजति' इत्यादौ समिद्यागस्य विधानं न द्रव्यं देवतां वोद्दिश्य प्रवृत्तम्। समिद्यागेन भावयेत् प्रकृतयागोपकारम् इत्येतावन्मात्रमत्र विधानमित्याराडुपकारकत्वमस्येति भावः। आराच्छब्दार्थप्रदर्शनायाह—**परमेति**। सर्वाङ्गसहितयागानुष्ठानानन्तरं स्वर्गादिफलजनकं यजमानात्मनि जायमानमपूर्वं परमापूर्वम्, तदुत्पत्तावुपयुज्यत आराडुपकारकमङ्गमित्यर्थः। अत एवाराच्छब्दस्यात्र दूरमित्यर्थः। एतद्वैलक्षण्यं सन्निपत्योपकारकस्य प्रतिपादयति—**द्रव्यदेवतेति**। द्रव्यदेवतयोस्संस्कारः प्रोक्षणावहननस्मरणादिरूपः तद्द्वारा। **यागस्वरूपेऽपि** यागस्वरूपनिष्पत्तावपीत्यर्थः। आराडुपकारकाणां यागस्वरूपनिष्पत्तौ न व्यापारः, सन्निपत्योपकारकणान्तु द्रव्यप्रोक्षणम् तदवहननम्, तण्डुलनिष्पादनम्, तत्पेषणम्, पिष्टस्य भर्जनम्, पुरोडाशसम्पादनम् तस्य द्व्यवदानादिनाग्नौ प्रक्षेपः यजमानत्यागश्चेत्येतावति क्रियमाणे, एवं देवतायाः स्मरणाख्ये च क्रियमाणे यागस्वरूपसम्पादनक्रियासु व्यापार इति भेदः।

**अयमत्र निष्कर्ष :—**'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र दर्शशब्दवाच्यानाम् सोमयाजिनः आग्नेयसान्नाय्ययागानाम्, असोमयाजिनः आग्नेयैन्द्राग्नयोः' पूर्णमासशब्दवाच्यानाम् आग्नेयोपांशुयाजाग्नीषोमयागानां स्वर्गफलसम्पादकत्वं बोधितम्। स्वर्गश्च फलं कालान्तरे भविष्यति। यदा स्वर्गः न तदा इमे यागा विद्यन्ते, यागानां क्रियारूपत्वेन क्षणिकत्वात्। वेदेन च फलयागयोस्साध्यसाधनभाव उपदिश्यते। तदन्यथानुपपत्त्या यागः स्वजन्यापूर्वद्वारा फलसाधनमिति फलयागयोस्साध्यसाधनभाव उपपादनीयः। ननु वेदप्रामाण्यान्यथानुपपत्त्या यागः तावत् स्थास्यति यावत्फलं नोपजायते, किमवान्तरव्यापारापूर्वकल्पनेनेति चेन्न; अर्थान्यथानुपपत्त्या यत्कल्प्यते तस्य प्रत्यक्षाविरोधेनैव कल्पनमुचितमिति शास्त्रकाराणां सिद्धान्तात्। ननु साध्यसाधनभावसिद्धये यद्यपूर्वमेव कल्पनीयं तर्हि यागध्वंसस्यैव क्लृप्तस्य फलसाधनत्वं उच्यताम्। ध्वंसस्तु यागस्यानिवार्यः। किं पदार्थान्तरकल्पनक्लेशेन? इति चेन्न; ध्वंसस्य नित्यत्वेन फलोपभोगानन्तरमपि फलजननप्रसङ्गात्। न च यागध्वंसस्य नित्यत्वेऽपि फलध्वंसस्य प्रतिबन्धकत्वस्वीकारेण न तस्य फलजनकत्वमिति वाच्यम्, अनन्तानन्तध्वंसानां तत्प्रतिबन्धकध्वंसानां कल्पनापेक्षयापूर्वस्यैकस्य कल्पने लाववात्। तत्र सन्ति नानापूर्वाणि—अङ्गापूर्वाणि उत्पत्त्यपूर्वाणि समुदायापूर्वाणि, फलापूर्वाणीति। दर्शपूर्णमासयोभिन्नकालानुष्ठेयानां त्रयाणां त्रयाणां प्रधानयागानां पूर्वमुत्तरञ्च सन्निपत्योपकारकारादुपकारकाङ्गान्यनुष्ठीयन्ते। स्थूलशः—प्रोक्षणावहननोत्पवनपेषणादीनि सन्निपत्योपकारकाणि, आघाराज्यभागप्रयाजादीन्यारादुपकारकाणि। तत्र सन्निपत्योपकारकानुष्ठानेन जायमानान्यपूर्वाणि तत्तत्प्रधानानुष्ठानजन्योत्पत्त्यपूर्वोत्पत्तावुपयुज्यन्ते। अर्थात्—प्रधानयागानुष्ठानेन जायमानानि त्रीण्युत्पत्त्यपूर्वाणि तदैव जायेरन् यदा हि सन्निपत्योपकारकपूर्वाङ्गै रङ्गापूर्वाणि सम्पादितानि भवन्ति। एवञ्च सति तत्तदङ्गापूर्वद्वारा त्रयाणां प्रधानयागानां अङ्गैस्सह साहित्यं सम्पादितं स्यात्। प्रधानयागानुष्ठानादूर्ध्वं यानि सन्निपत्योपकारकाण्यङ्गानि इडाभक्षणस्विष्टकृत्सूक्तवाकादीनि तैर्जायमानान्यङ्गापूर्वाणि तत्तदुत्पत्त्यपूर्वस्थितौ उपयुज्यन्ते। एवं सर्वाङ्गसहितैः त्रिभिरुत्पत्त्यपूर्वैः पूर्णमाससम्बन्धिभिः कालान्तरे दर्शे करिष्यमाणतत्तदङ्गसहितोत्पत्त्यपूर्वैस्सह साहित्यसिध्यर्थं समुदायापूर्वमेकमुत्पद्यते। दर्शयागानुष्ठनानन्तरं यान्युत्पत्त्यपूर्वाणि जायन्ते तैरप्येकं समुदायापूर्वं जायते। उभे अपि समुदायापूर्वे परमापूर्वं जनयतः। अत्रैवारादुपकारकारकैरुभयत्रानुष्ठीयमानैर्यान्यपूर्वाणि जायन्ते तेषामुपयोगः। यथा परमापूर्वजनने तत्तदुत्प-

त्यपूर्वाणां समुदायापूर्वस्य वोपयोगस्तथैव पूर्वोत्तराराादुपकारकाणामुपयोगः । तदिदमुक्तं ग्रन्थकारेण—आरादुपकारकञ्चेत्यादिनेत्यवगन्तव्यम् ।

द्रव्यदेवतासंस्कारद्वारा यागस्वरूपोपकारकेषु यानि दृष्टादृष्टार्थानि कर्माणि पशुपुरोडाशादीनि सन्निपत्योपकारकाणि कर्माणि तेषां संज्ञान्तरमाह—**आश्रयिकर्मेति** । सर्वेषां सन्निपत्योपकारकाणामाश्रयिकर्मेति न व्यवहार इति बोध्यम् । तथा च पार्थसारथिमिश्रः—'दृष्टादृष्टश्च किञ्चित्कर्म, यदाश्रयिशब्दाभिधानीयकं भजते, यथा पशुपुरोडाशयागः' इति ।

**अनुवाद—**द्रव्यादि रूप उद्देश्य के बिना, जब केवल कर्म का विधान किया गया तो उस कर्म को 'आरादुपकारक' कहते हैं । यथा—प्रयाजादि । परमापूर्व को उत्पन्न करने में आरादुपकारक की उपयोगिता है । सन्निपत्योकारक की याग स्वरूप एवं द्रव्य देवता संस्कार से यागोत्पत्ति के अपूर्व में भी उपयोगिता है । सन्निपत्योपकारक कर्म को 'आश्रयिकर्म' कहते हैं ।

## अर्थालोकलोचन

यागसंबन्धी द्रव्य या देवता का उद्देश्य न कर योंही कर्म का जहाँ विधान हो उस कर्म की आरादुपकारक संज्ञा है । अर्थात उत्पत्ति वाक्य में जिन द्रव्य व देवता को स्पर्श नहीं करते हुए केवल विधीयमान अङ्ग आरादुपकारक है । 'समिधो यजति' 'तनूनपातं यजति' 'आज्यभागौ यजति' 'अनूयाजैर्यजते' आदि वाक्यों में समिद्याग से यागोपकार करना चाहिए, तनूनपाद्याग से यागोपकार करना चाहिए, ये ही श्रुत हैं यहाँ यागसंबन्धी द्रव्य या देवता का उल्लेख नहीं है, जैसे 'व्रीहीन् प्रोक्षति' 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' में है । अतः सन्निपत्योपकारक एवं आरादुपकारक का भेद सिद्ध होता है । इतना ही नहीं, सन्निपत्योपकारक अङ्गों के अनुष्ठान से प्रत्येक याग जन्य उत्पत्त्यपूर्व की उत्पत्ति होती है, आरादुपकारक अङ्गों के अनुष्ठान से परमापूर्व या फलापूर्व की उत्पत्ति होती है । अर्थात् उत्पत्त्यपूर्व के उपकारक संनिपत्योपकारक अङ्ग हैं, परमापूर्व के उपकारक आरादुपकारक हैं । अपूर्व के संदर्भ में विशेष रूप से यह जानना चाहिए कि प्रत्येक श्रौत कर्म में प्रधान याग एवं अङ्ग कर्म अनेक होते हैं । अङ्गों में भी प्रधान याग के पूर्ववर्ती और तदुत्तरवर्ती होते हैं । पूर्व उत्तर अंग सहित प्रधान याग फल संपादन में दक्ष बनता है । प्रधान याग की दक्षता में पूर्व उत्तर अङ्ग सहायक हैं । यहाँ प्रश्न उठता है कि क्रियात्मक होने से अङ्ग और प्रधान दूसरे क्षण में नष्ट हो जाते हैं तो अङ्गों प्रधान के सहायक कैसे बनेंगे, प्रधान भी फल का संपादन कैसा करेगा ? उत्तर में कहा जाता है कि अंग नश्वर होते हुए एक एक 'अपूर्व' उत्पन्न कर नष्ट होते हैं । इस प्रकार प्रधान पूर्ववर्ती संनिपत्योपकारक अंग अपने अपूर्वों के द्वारा प्रधान याग में ऐसा सामर्थ्य को पैदा करते हैं जिससे प्रधान याग नश्वर हो कर भी अपना अपूर्व का जनक बन सके । अंगों से उत्पन्न होने वाले 'अंगापूर्व' प्रधान से उत्पन्न होने वाले 'उत्पत्त्यपूर्व' कहलाते हैं । इससे यह सिद्ध हुआ कि प्रधान पूर्ववर्ती संनिपत्योपकारक अपने-अपने अपूर्वों द्वारा प्रधान याग से मिल कर

प्रधान को उत्पत्त्यपूर्व जनक बनने का समर्थ बनाये। अंगों की सहायता से उत्पत्त्यपूर्व को उत्पन्न करा दिया तो प्रधान के उत्तरवर्ती संनिपत्योपकारकों की क्या आवश्यकता रह जाती है? उन अंगों का उत्पत्त्यपूर्व की उत्पत्ति में प्रयोजन नहीं होते हुए भी उसकी स्थिरता में उत्तराङ्ग सन्निपत्योपकारकों का उपकार माना जाता है। इस प्रकार पूर्वोत्त-राङ्गसहित प्रधान ने उत्पत्त्यपूर्व को उत्पन्न कर तद्द्वारा परमापूर्व जिससे फल की उत्पत्ति होती है उत्पन्न करावेगा। उत्पत्त्यपूर्व भी अकेला परमापूर्व का जनक नहीं बन सकता, जब तक प्रधान के पूर्वोत्तरवर्ती आरादुपकारक अंगों से संबन्ध नहीं बनता है। अत एव पूर्वोत्तरवर्ती आरादुपकारक परमापूर्व की उत्पत्ति में सहायक हैं। यह प्रक्रिया जिस याग में एक ही प्रधान याग हो वहाँ लागू होती है। जहाँ कि अनेक प्रधान हैं और विभिन्न काल में अनुष्ठेय होते हों वहाँ दूसरी ही प्रक्रिया है। जैसा कि दर्शपूर्णमास क्रतु में पूर्णमास में तीन प्रधान हैं एवं दर्श अमावास्या में तीन प्रधान हैं। ये छः याग मिल कर दर्श-पूर्णमास याग कहलाते हैं। यहाँ प्रति पर्व में प्रधान के अंगों का अनुष्ठान होता है। पूर्णमास के तीन प्रधान याग तीन उत्पत्त्यपूर्वों को अंगों की सहायता से उत्पन्न कर तीनों उत्पत्त्यपूर्व एक समुदायापूर्व को उत्पन्न कराते हैं, एवं दर्श के भी तीन उत्पत्त्यपूर्व एक समुदायापूर्व के जनक होते हैं। ये दोनों समुदायापूर्व मिलकर एक परमापूर्व के जनक बनते हैं। पूर्वापेक्षया यहाँ समुदायापूर्व दो अधिक हैं।

यहाँ प्रश्न होता है कि इतना गहन अपूर्व प्रक्रिया को क्यों माना जाता है। 'दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेत' वाक्य स्वर्ग का साधक दर्शपूर्णमास याग बतलाता है। लोक में क्रिया क्षणिक होते हुए भी वेद प्रामाण्य बल से श्रौत क्रियायें नष्ट नहीं होते हैं। ऐसा मानने पर अपूर्व कल्पना की आवश्यकता नहीं है। प्रश्न ठीक है किन्तु वेद भी लोक-विरुद्ध पदार्थ का प्रतिपादन नहीं कर सकता है। लोकानुगुण ही पदार्थों का बोधक वेद होता है। अस्तु, तथापि अपूर्व कल्पना के बिना ही तत्तद्याग ध्वंस का फलजनकत्व मानिये। यागनश्वर होते भी उसका ध्वंस (नित्याभाव) नित्य है, वह ही कालान्तर में फलोत्पादक बन सकता है, अपूर्व की क्या आवश्यता है? इस के उत्तर में यह कहा जाता है कि ध्वंस नित्य होने से फलोपभोग होने के अनन्तर भी वह ध्वंस फलोत्पादक बन जायेगा तो अन्यान्य क्रतुओं का वैयर्थ्य होगा। इसकी अपेक्षा अपूर्व कल्पना ही उचित है। पुनः प्रश्न होता है कि ध्वंस नित्य होने पर भी फलोपभोग से जो फल ध्वंस होता है वह, फल जनक ध्वंस का प्रतिबन्धक मानने पर पुनः फलोत्पत्ति का अवसर नहीं है। मीमांसक का अभिप्राय है कि इस प्रकार अनन्त ध्वंस और उनका अनन्त अनन्त प्रतिबन्धक ध्वंस मानने की अपेक्षा अपूर्व प्रक्रिया में ही लाघव है।

## प्रयोगविधिलक्षणम्

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैक-वाक्यतापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च तद-विलम्बेऽपि प्रमाणाभाव इति वाच्यम्। विलम्बे हि अङ्गप्रधानविध्येक-

वाक्यतावगततत्साहित्यानुपपत्तिः । विलम्बेन क्रियमाणयोः पदार्थयोः 'इदमनेन सह कृतम्' इति साहित्यव्यवहाराभावात् । स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि 'किमेतदनन्तरमेतत् कर्तव्यमेतदनन्तरं वा' इति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते । अत एवाङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम् ।

## अर्थालोकः

विनियोगविधिं परिसमाप्य प्रयोगविधेस्स्वरूपं विचारयितुं तल्लक्षणमाह—**प्रयोगेति** । प्रयोगस्यानुष्ठानस्य प्राशुभावः शैघ्र्यं तस्य बोधको विधिः प्रयोगविधिः । अस्य विधेः 'अग्निहोत्रं जुहोति' इत्युत्पत्तिविधेरिव 'दध्ना जुहोति' इति विनियोगविधेरिव च स्वरूपबोधकं पृथग्वाक्यं नास्तीति दर्शयति—**स चेत्यादिना** । अङ्गवाक्यैः 'समिधो यजति' 'तनूनपातं यजति' इत्यादिभिः एकवाक्यतां प्राप्तः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति प्रधानविधिरेव प्रयोगविधिरित्यर्थः । अर्थात् प्रायाजानूयाजादिभिरुपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति कल्पितं वाक्यमेव प्रयोगविधिपरिचायकमिति भावः । प्रयोगविधेः प्रमेयं दर्शयति—**स हीति** । फलसंपादनाय साङ्गं प्रधानमनुष्ठापयन् प्रयोगविधिरित्यर्थः । **विलम्बे प्रमाणाभावात्** पदार्थानामनुष्ठान इति शेषः । प्रयोगप्राशुभावस्य नामान्तरं दर्शयति—**अविलम्बेति** । ननु विलंबे यथा प्रमाणाभावस्तथाविलम्बेऽपि । कथं विलम्बे प्रमाणाभाव उच्यत इति शङ्कते—**न चेति** । वाच्यं न च वाच्यमिति सम्बन्धः । अविलम्बे प्रमाणं दर्शयितुं विलम्बेऽनुपपत्तिमाह—**विलम्बे हीति** । अङ्गीक्रियमाण इति शेषः । **अङ्गेति** । अङ्गानां प्रधानविध्येकवाक्यतया अवगतं यत्साहित्यं तस्यानुपपत्तिरित्यर्थः । अङ्गानां प्रधानेन साहित्याभावे फलजनकत्वं प्रधानस्यानुपपन्नं स्यादिति भावः । तत्र कारणमाह—विलम्बेनेति । यद्यपि विलम्बनिषेधकं किमपि वचनं नास्ति, तथापि प्रयोगविध्यवगतसाहित्यबलादेव तद्बाधनमिति भावः । **इदम्** अङ्गम् । **अनेन** प्रधानेन । ननु प्रधानेन साहित्यानुपपत्त्याङ्गानां समानकालत्वमेव भवतु, अविलम्बस्य कुतः प्राप्तिरिति चेन्न; एककालावच्छेदेनानेकेषां पदार्थानामनुष्ठानानुपपत्तेः । अतः प्रयोगविधिरविलम्बमेव प्रयोगप्राशुभावरूपं विधत्त इति स्वीकर्तव्यम् । अविलम्बसिद्धये नियामकमाह—**नियत** इति । निश्चित इत्यर्थः । **भवति** सिध्यति । एवमनङ्गीकारे बाधकमाह—**अन्यथेति । प्रयोग-**

**विक्षेपापत्तेः** प्रयोगवैकल्यापत्तेरित्यर्थ। भूयस्सु पदार्थेषु क्रियमाणेषु केषाञ्चिदननुष्ठानम् केषाञ्चिच्च द्विरनुष्ठानं भवेत्। तथा सति क्रतुवैकल्यं निश्चितमिति भावः। ननु तादृशः क्रमोऽपि प्रमाणेन स्वीकर्तव्यः। प्रमाणञ्च तत्र नास्तीत्यत आह—**अत** इति। प्रयोगप्राशुभावं विदधत्प्रयोगविधिरेव नियतं क्रममपि विधत्त इति प्रमाणाभावो नाशङ्कनीय इत्यर्थः। तथा सति प्रयोगावधिना प्राशुभावो विधीयते क्रमश्चेति वाक्यभेदस्स्यादित्यत आह—**पदार्थविशेषणतयेति**। स्वातन्त्र्येण द्वयोर्विधाने भवेद्वाक्यभेदः। विशेष्यविशेषणभावेन विधाने न वाक्यभेदः इति भावः। एवं क्रमस्य पदार्थविशेषणतया विधाने प्रयोगविधेर्लक्षणान्तरमपि सिध्यतीत्याह—**अत एवेति**। अङ्गानामनुष्ठाने यो विधिः क्रमं बोधयति स विधिः प्रयोगविधिरित्यर्थः।

**अनुवाद**—जिस विधिवाक्य से प्रयोग को शीघ्र करने का बोध होता है उसे 'प्रयोग विधि' कहते हैं। वह प्रयोग विधि अङ्गवाक्यों के साथ एकवाक्यता होने पर 'प्रधानविधि' ही है। प्रयोगविधि अंगों सहित प्रधान क्रिया का अनुष्ठान कराती हुई उसकी ( क्रिया की ) शीघ्रता ( अविलम्ब ) का विधान करती है। विलम्ब होने में किसी प्रमाण के नहीं रहने से 'प्रयोगविधि' प्रयोग में शीघ्रता का विधान करती है। ( यहाँ यह संशय होता है कि ) प्रयोग विलम्ब में जैसे प्रमाण का अभाव है उसी प्रकार प्रयोग की शीघ्रता में भी कोई प्रमाण नहीं है। ( समाधान यह है कि ) प्रयोग में विलम्ब होने से अङ्ग एवं उसके प्रधान ( अङ्गी ) की एकवाक्यता से अवगत होने वाले [1]साहित्य की उत्पत्ति नहीं होगी। विलम्ब से अनुष्ठित अंङ्ग एवं प्रधान में 'यह क्रिया इसके साथ अनुष्ठित हुई' इस प्रकार साथ-साथ होने का व्यवहार नहीं होगा। जब क्रम नियत रहता है तभी अङ्ग एवं प्रधान के अनुष्ठान में शीघ्रता होती है। अन्यथा 'क्या यह क्रिया इस क्रिया के अनन्तर होगी अथवा दूसरी क्रिया के पश्चात्?' इस प्रकार का संशय होगा एवं प्रयोग में ( अनुष्ठान में ) विक्षेप अर्थात् बाधा उपस्थित होगी। अतः प्रयोग विधि ही अनुष्ठानों की अविलम्ब सिद्धि के लिये पदार्थ के विशेषण रूप में नियत क्रम का विधान करती है। प्रयोग विधि से नियतक्रम विशिष्ट के विधान होने के कारण 'अङ्गों के क्रम बोधक विधि को प्रयोग विधि कहते है' ऐसा भी लक्षण हो सकता है।

## अर्थालोकलोचन

विनियोग विधि का विवेचन समाप्त करके ग्रन्थकार ने प्रयोगविधि के स्वरूप पर विचार प्रस्तुत करने के लिये प्रथमतः उसका लक्षण किया है--**'प्रयोग प्राशुभावबोधको विधिः प्रयोगविधिः।'** अर्थात् अनुष्ठान की शीघ्रता बोधक विधि को प्रयोगविधि कहते हैं। वस्तुतः उत्पत्तिविधि के लिये जिस प्रकार **'अग्निहोत्रं जुहोति'** या विनियोगविधि स्वरूप बोधक 'दध्ना जुहोति' आदि वाक्य उपलब्ध होते हैं उस प्रकार 'प्रयोगविधि' बोधक वाक्य नहीं है अतः उसका निरूपण प्रकारान्तर से ग्रन्थकार करता है। प्रयाजादि याग

---

१. **तत्साहित्यम्** = तेषामङ्गप्रधानानां साहित्यं सहभावः सहानुष्ठानमित्यर्थः।

अंग है और 'दर्शपूर्णमास' प्रधान याग है। अब अङ्ग वाक्यों का प्रधान वाक्य **'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'** से एकवाक्यता होने पर **'प्रयाजानूयाजादिभिरुपकृतवद्भ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'** इस प्रकार का कल्पित वाक्य ही **'प्रयोगविधि'** का परिचायक होता है। यदि अङ्गों का प्रधान के साथ 'साहित्य' का अभाव अर्थात् साथ-साथ अनुष्ठान का अभाव हो तो प्रधान द्वारा फलोत्पत्ति सम्भव नहीं होगी। यद्यपि विलम्ब से अनुष्ठान निषेधक वाक्य नहीं मिलता तथापि प्रयोगविधि द्वारा निर्दिष्ट साथ-साथ अनुष्ठान की प्रक्रिया ही विलम्ब से अनुष्ठान में बाधिका है। अविलम्ब से अनुष्ठान की सम्पन्नता में नियामक तत्त्व यह भी है कि 'प्रयाजादि अंग' एवं 'दर्शपूर्णमासादि प्रधान' की एकवाक्यता से ही दोनों की साथ-साथ अनुष्ठेयता का ज्ञान होता है। यह पहले कहा जा चुका है। यदि प्रयोग में विलम्ब होगा तो **'साहित्य'** की उत्पत्ति नहीं होगी। इसके अलावा, 'साहित्य' अङ्ग एवं प्रधान का अविलम्ब क्रम नियत रहने पर ही होता है। यथा पहले **'आग्नेय हविष्'** का अभिघारण करना चाहिए तत्पश्चात् **'ऐन्द्रदधि** हविष्' का अभिघारण करना चाहिए। इसके अनन्तर 'आग्नेय याग' का अनुष्ठान एवं तत्पश्चात् **'ऐन्द्रयाग'** का अनुष्ठान करना चाहिए। इस प्रकार का यदि क्रम नियत न हो तो प्रयोग के समय सन्देह उत्पन्न होगा। अतः प्रयोगविधि ही अनुष्ठानों की अविलम्ब सिद्धि के लिये नियत क्रम का विधान करती है अन्यथा अनुष्ठान में विक्षेप उत्पन्न होता है। अत एव अर्थालोक में कहा गया है—**'प्रयोगप्राशुभावं विदधत्प्रयोगविधिरेव नियतं क्रममपि विधत्त इति प्रमाणाभावो नाशङ्कनीय इत्यर्थः।'**

**इस प्रसङ्ग में यह संशय हो सकता है**—प्रयोगविधि द्वारा अनुष्ठान की शीघ्रता भी विहित होती हैं और क्रम भी नियत होता है अतः वाक्यभेद संज्ञक दोष होगा। परन्तु यह शंका उचित नहीं है क्योंकि स्वतन्त्ररूप से यदि प्रयोगविधि द्वारा दोनों का विधान होता तब वाक्यभेद की स्थिति उत्पन्न होती। विशेष्यविशेषणरूप विधान से वाक्यभेद नहीं होता अर्थात् क्रम को पदार्थ ( क्रिया ) का विशेषण मान लेने पर कोई दोष नहीं है। इस प्रकार प्रयोगविधि से क्रमविशिष्ट के विधान होने से 'अङ्गों के क्रमबोधक विधि को प्रयोगविधि कहते है' ऐसा लक्षणान्तर भी दिया जा सकता है।
[ पदार्थविशेषणतया = अङ्गविशेषणतया ]

## क्रमस्वरूपम्

तत्र क्रमो नाम विततिविशेषः, पौर्वापर्यरूपो वा।

## अर्थालोकः

को नाम क्रम इत्यत्राह—**विततीति**। अनष्ठानवेलायामनेकपदार्थवृत्तिः कश्चन गुणो विततिः। विस्तारार्थकतनुधातोः स्त्रियां क्तिनि विततिरिति सिध्यति। तत्रैकेन कर्त्रा बहुषु पदार्थेष्वनुष्ठीयमानेषु पदार्थानां विततिरिति व्यवहारः, एककालावच्छेदेनानेकैः कर्तृभिः बहुष्वनुष्ठीयमानेषु पदार्थेषु वितति-

शब्दो न व्यवह्रियत इति सूचयितुं **पौर्वापर्यरूपो वेत्युक्तम्** । वाकारो न विकल्पे, किन्त्वनास्थायां बोध्यम् । पौर्वापर्यरूपो विततिविशेषः क्रम इति यावत् ।

**अनुवाद**—( क्रम का लक्षण कहते हैं )—विस्तार ( वितति ) विशेष को क्रम कहते हैं । अथवा पूर्वोत्तर भाव से स्थिति को क्रम कहते हैं ।[1]

## अर्थालोकलोचन

इस अनुभाग में क्रम के स्वरूप पर संक्षेप से विचार किया गया है । यागादि अनुष्ठान के समय कई प्रकार के कार्य यजमान को करने पड़ते हैं उस समय अनुष्ठीयमान प्रत्येक कार्य का क्रमज्ञान होना आवश्यक है अन्यथा विक्षेप होगा । अत एव क्रम को एक विशेष प्रकार विस्तार या वितति कहा गया है । क्रम से अनुष्ठित कई प्रकार की क्रियाएँ विस्तार विशेष को प्राप्त करती है । क्रम ज्ञान से क्रियाओं का अनुष्ठान अव्यवहित रूप में होता है । ग्रन्थकार क्रम का लक्षणान्तर भी प्रस्तुत करता हैं इससे प्रतीत होता है प्रथम लक्षण में उसकी अनास्था है । पौर्वापर्य को क्रम का दूसरा लक्षण माना है । अर्थात् कौन पूर्व में है और कौन बाद में इसी को क्रम कहते हैं ।

## श्रुत्यादिषट्प्रमाणानि

तत्र षट् प्रमाणानि—श्रुत्य-र्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्यानि ।

## श्रुतिलक्षणम्

तत्र क्रमपरवचनं श्रुतिः । तच्च द्विविधम्—केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र 'वेदं कृत्वा वेदिं करोती' ति केवलक्रमपरम्, वेदिकरणादेर्वचनान्तरप्राप्तत्वात् । 'वषट्कर्तुः प्रथमभक्ष' इति तु क्रमविशिष्टपदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनग्रहस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तौ आश्विनो दशमो गृह्यत इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् ।

## अर्थालोकः

यथा अङ्गत्वबोधने प्रमाणान्युक्तानि तथा क्रमबोधनेऽपि प्रमाणानि परिगणयति—**श्रुत्यर्थेति** । श्रुतेर्लक्षणं विभागञ्चाह—**क्रमेति** । यद्वचनं क्रमबोधनार्थमेव प्रवृत्तं तद्वचनं क्रमपरवचनमित्यर्थः । यथा–अथ, क्त्वाप्रभृतिः । केवलक्रमपरवचनमुदाहरति—**वेदमिति** । वेदो नाम प्रथमो लूनो दर्भमुष्टिः,

---

१. पूर्वं च अपरं च पूर्वापरे, तयोः भावः पौर्वापर्यम्, तस्य रूपं यस्य सः पौर्वापर्यरूपो वितानः ।

वोदिर्नाम हविषां निधानाय चतुरङ्गुलखननादिसंस्कारसंस्कृता भूमिः। केवल-क्रमपरत्वे हेतुः—**वचनान्तरेति**। नास्मिन् वाक्ये वेदवेद्योर्विधानम्, तयोर्वचनान्तरेण विहितत्वात्। अतः क्त्वाप्रत्ययेन वेदानन्तर्यं वेदिकरणस्य विधीयत इत्यर्थः। क्रमविशिष्टमुदाहरति—**वषट्कर्तुरिति**। याज्यामन्त्रस्यान्ते 'वौषट्' इति समुच्चार्यमाणशब्दो वषट्कारः, तस्य कर्ता होता, तस्य प्रथमं हविर्भक्षणमित्यर्थः। ननु कथमिदं क्रमविशिष्टपदार्थविधानपरम्? हविर्भक्षोद्देशेन प्राथम्यमात्रविधानेनापि चरितार्थत्वादित्यत आह—**एकेति**। एकप्रसरता नाम सम्भूयैकारार्थप्रकाशकत्वम्, तस्य भङ्गः तद्भयेनेत्यर्थः। 'प्रथमभक्षः' इति समस्तं पदम्। तत्र भक्षमुद्दिश्य प्राथम्यरूपक्रमस्य विधाने उद्देश्यविधेययोर्भिन्नार्थकत्वेन एकार्थीभावलक्षणसामर्थ्याभावात् समासो न स्यात्। अतः क्रममात्रस्यात्र विधानमशक्यमित्याह—**अशक्यत्वादिति**। एवञ्च वाक्यान्तरेण विहितमपि भक्षणं प्राथम्यविशिष्टं विधीयत इति क्रमविशिष्टपदार्थविधानपरमिदं वाक्यमिति भावः।

प्रमाणान्तरापेक्षया श्रुतेः प्राबल्ये कारणमाह—**तेषामिति**। तेषां प्रमाणान्तराणामित्यर्थः। अर्थपाठादिषु प्रमाणेषु तादृशं वचनं नास्ति यच्च क्रमबोधकं भवेत्, किन्तु तत्कल्पनीयम्। यावच्च तत्कल्प्यते तावत्क्रमपरवचनं क्रमं बोधयतीति तस्य प्राबल्यमिति भावः। उदाहरति—**आश्विनेति**। ज्योतिष्टोमे सन्त्यनेके ग्रहाः। ग्रहा नाम सोमरसग्रहणाय सबिला उलूखलाकाराः दारुमयाः पात्रविशेषाः। तैः तत्तद्देवतायै सोमरसो गृह्यते। तद्विधायकानि वाक्यनि—'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' 'आश्विनं गृह्णाति' इत्यादीनि क्रमेण पठितानि। तदिदमाह—**पाठेति। तृतीयस्थाने** अश्विनग्रहस्य पठित्वात् तत्स्थाने तद्ग्रहणं कर्तव्यमिति वचनात् ग्रहणप्रसक्तिः ज्ञेया। तत्र वचनान्तरमाह—**आश्विन** इति। अत्र दशम इति पदं ग्रहणस्य स्थानं साक्षाद् बोधयति। पाठेन तु तदन्यथानुपपत्या क्रमबोधकं वचनं कल्पनीयमिति पाठक्रमस्य दौर्बल्यम्। **इत्युक्तम्** पञ्चमचतुर्थप्रथमाधिकरण इति शेषः।

ननु प्रथमं श्रुत्यर्थयोः प्राबल्यदौर्दल्यनिरूपणं कर्तव्यम्, कथं तद्विहाय श्रुतिपाठयोस्तन्निरूपितमिति चेदत्र वार्तिककार आह—

'श्रुत्यर्थयोर्विरोधस्तु नैवं वचनसम्भवे।
यथा श्रुत्येव हि न्याय्यमर्थस्य परिकल्पनम्॥' इति।

अयमर्थः—अर्थः प्रयोजनम्, तद्वशेन यः क्रमः कल्प्यते सोऽर्थक्रमः। तच्च कल्पनं यथाश्रुत्येव भवतीति न श्रुत्यर्थयोर्विरोधस्सम्भवति। अतस्तत्परित्यज्य श्रुतिपाठयोर्विरोधोदाहरणं प्रदर्शितमिति।

**अनुवाद**—क्रम के निर्णायक ६ प्रमाण है—( १ ) **श्रुतिक्रम** ( २ ) **अर्थक्रम** ( ३ ) **पाठक्रम** ( ४ ) **स्थानक्रम** ( ५ ) **मुख्यक्रम** ( ६ ) **एवं प्रवृतिक्रम।**

क्रमबोधकशब्द को **'श्रुति'** कहते हैं। श्रुति के दो भेद है—( १ ) **केवल क्रमबोधक** एवं[1] ( २ ) **क्रमविशिष्ट पदार्थबोधक। 'वेदं कृत्वा वेदिं करोति'**[2] इस वाक्य में केवल मात्र क्रम का विधान है। वेदी की रचना का विधान दूसरे विधिवाक्यों में मिलता, यहाँ केवल क्रम का विधान 'क्त्वा' प्रत्यय से ( 'कृत्वा' ) हुआ है। **'क्रमविशिष्ट पदार्थबोधक श्रुति'** का उदाहरण **'वषट्कर्तुः प्रथमभक्षः'** ( अर्थात् वषट्कर्त्ता प्रथमतया भक्षण करे ) है क्योंकि यहाँ प्राथम्यविशिष्ट भक्षण विहित है। इसे 'विशिष्ट' इस कारण माना जाता है कि एकवाक्यता के भङ्ग होने के भय से भक्षण का विधान करके पुनः भक्षण का अनुवाद कर प्राथम्य का विधान नहीं किया जा सकता।

यह श्रुति, अर्थ पाठ क्रमादि अन्य प्रमाणों की अपेक्षा बलवती है। अन्य अर्थादिप्रमाण श्रुति ( अर्थात् कमबोधक वचन ) की कल्पना से ( अर्थात् साक्षात् नहीं अपितु परम्परया ) क्रम का बोध कराते हैं। अत एव पाठक्रम से आश्विनग्रह ( सोमग्रह ) का तृतीय स्थान में पाठ होने पर भी ( अर्थात् तृतीय स्थान में ग्रहण की प्राप्ति होने पर भी ) **'आश्विनो दशमो गृह्यते** ( अर्थात् दसवें स्थान पर आश्विन ग्रहण करे ) इस श्रुति वचन से आश्विन ग्रहण दसवें स्थान पर होता है।

**वेदिः** आहवनीयगार्हपत्ययोर्मध्ये चतुरङ्गुलं निखातं भूतलं हविर्निधानस्थानविशेषरूपम्।

## अर्थालोकलोचन

क्रमबोधक षट् प्रमाणों में 'श्रुति' का प्रथमतया परिगणन किया गया है। 'क्रमवाचक शब्द' को श्रुति कहते हैं अत एव भाष्यकार ने कहा है—**'यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते स श्रुत्यावगम्यते'**। अर्थात् श्रुति से क्रियाओं के अनुष्ठान का पौर्वापर्यरूप का ज्ञान सरलतया हो जाता है। श्रुति के दो भेद माने गये हैं ( १ ) **केवल क्रममात्र बोधक,** ( २ ) एवं **क्रमविशिष्टपदार्थबोधक।** प्रथम भेद को समझाने के लिये **'वेदं कृत्वा वेदिं करोति'** इस दृष्टान्त का आश्रय लिया जाता है। इस वाक्य में 'वेद एवं वेदी' के निर्माण का विधान नहीं किया गया है अपि तु 'क्त्वा' प्रत्यय से वेदकरण एवं वेदिकरण का पौर्वापर्यरूपी क्रम का बोध कराया गया है। क्योंकि दर्शपूर्णमास प्रकरण में इन दोनों का विधान पूर्वतः प्राप्त है।

---

१. वेदो दर्भमुष्टिः। अत्र वेदं कृत्वेत्यनेन वाक्येन न वेदकरणं वेदिकरणं च विधीयते। किन्तु केवलं **तयोः पौर्वापर्यरूपः क्रमः।** स चात्र कृत्वेत्यत्रत्यक्त्वाप्रत्ययेन बोध्यते। क्त्वाप्रत्ययश्च स्वप्रकृतिमूलधातूपस्थाप्यक्रियायाः क्रियान्तरापेक्षया पूर्वकालभवत्वं बोधयति। समानकर्तृकयोः पूर्वकाले ( पा० सू० ३. ४. २१। ) इति सूत्रेण पूर्वकालभवक्रियावाचकाद्धातोः क्त्वा प्रत्ययस्य विधानात्।

२. **वेदो** नाम संमार्जनार्थो दर्भमुष्टिविशेषः

**'वषट्कर्तुः प्रथमभक्षः'** द्वारा क्रमविशिष्ट पदार्थ बोधक श्रुति का उदाहरण प्रस्तुत किया गया है। याज्ञिकी मान्यता के अनुसार 'हता' को 'वषट्' शब्द का उच्चारण करने से 'वषट्कर्त्ता' कहते हैं। प्रक्रिया यह है कि देवतोद्देश्य से द्रव्यादि का त्याग करते हुए अध्वर्यु **'अग्नये अनुब्रूहि'** कहकर 'प्रैष्' अर्थात् आज्ञा प्रदान करता है तदनन्तर 'होता' पुरोनुवाक्य का पाठ आहुति देने से पहले करता है। इसके बाद अध्वर्यु 'अग्निं यज' रूप में दूसरा 'प्रैष' करता हैं और तब 'होता' देवता के लिये याज्या मन्त्रों का पाठ करता है— **'याज्यया अधि वषट् करोति'**—देवता के नाम के साथ वषट् शब्द का प्रयोग अन्त में किया जाता है। इसीलिये 'होता' की 'वषट् कर्तृ' संज्ञा है।[1]

'वषट्कर्तुः प्रथमभक्षः' इस दृष्टान्त में 'होता के प्रथम भक्षण' का निर्देश है। यहाँ 'प्रथम' शब्द भक्षण क्रिया के विशेषण रूप में व्यवहृत है। 'प्राथम्य' पद क्रम का भी बोधक है। अतः यह श्रुति वस्तुतः प्राथम्यरूप 'क्रम' से विशष्ट भक्षणरूप पदार्थ का निर्देश कर रही है इस प्रकार इसे **'क्रमविशिष्ट पदार्थ बोधक'** कहा गया है।

इस प्रसंग में संशय यह है कि 'वषट्कर्त्तु प्रथमभक्षः' इस विधिवाक्य को **'केवलक्रम-परक'** क्यों न माना जाय? इसका उत्तर देते हुये ग्रन्थकार ने कहा है—**एकप्रसरता-भङ्गभयेन क्रममात्रस्य विधातुमशक्यत्वात्'**।

प्रस्तुत सन्दर्भ में प्रथमतया 'एकप्रसरता' पद पर विचार करना आवश्यक है। 'प्रसरः' का अर्थ यदि वाक्य माने तो 'एकप्रसरता' का अर्थ 'एक वाक्यता' होगा और 'एकप्रसरताभङ्गः' का निर्गलितार्थ **'वाक्यभेदः'** होगा। आशय यह है कि यदि इस वाक्य को केवल क्रमपरक ही माना जायगा तो यह भी स्वीकार करना पड़ेगा कि इसके द्वारा वषट्कार के लक्षण भी विधान है तब वषट्कर्तुः प्रथमभक्षः' एक ही वाक्य से **'वषट्कारो भक्षयति, एवं वषट्कारो प्रथमं भक्षयति च'** दो वाक्यों की कल्पना करनी होगी, इस तरह वाक्य भेद होगा। अतः इससे 'क्रमविशिष्टभक्षण का बोध करना ही उचित है।

इस श्रुति को अर्थादि प्रमाणों की अपेक्षा बलवान् माना है। क्योंकि क्रमबोध को श्रुति शीघ्रतया कराने में समर्थ है। यथा—**'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति'** मन्त्र में 'आश्विनग्रहण' का पाठ क्रम के आधार पर तृतीय स्थान है परन्तु 'आश्विनो दशमो गृह्यते' इस श्रुति वचन से 'आश्विनग्रहण' का 'दशम स्थान' पहले से निर्दिष्ट है अर्थात् क्रमबोधक वचन प्रत्यक्ष सिद्ध है अतः पाठ से श्रुति प्रबल है।

## अर्थक्रमलक्षणम्

यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः। यथा 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्याग्निहोत्रयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते।

---

१. वषट् शब्द की उत्पत्ति 'वह्' धातु से मानी जाती है। अतः 'इन्द्राय वषट्' का याज्ञिक सम्प्रदायानुसार 'अग्निः इन्द्राय हविर्वहतु' अर्थ होता है।

स चायं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं च स्यात्। न हि होमानन्तरं क्रियमाणस्य पाकस्य किंचिद् दृष्टं प्रयोजयनस्ति।

## अर्थालोकः

अर्थक्रमस्वरूपमाह—**यत्रेत्यादिना** । तदुदाहरति—**यथेति** । **अग्निहोत्रयवागूपाकयोः** क्रमेण विहितयोः। **प्रयोजनवशेन** प्रयोजनं होमनिष्पत्तिः, तद्वशेनेत्यर्थः। पूर्वं यवागूपाके निष्पन्ने, यवाग्वाऽग्निहोत्रहोमः कर्तुं शक्यते। येन केनचिद् द्रव्येणाग्निहोत्रहोमं सम्पाद्य तदनन्तरं यवागूपाके कृते निष्पन्नस्य यवागूद्रव्यस्य वैयर्थ्यापत्तिरिति भावः।

अत एव पाठक्रमादार्थक्रमो बलवानित्याह—**स चायमिति। क्लृप्तप्रयोजनबाधः** निष्पादितद्रव्यस्य क्लृप्तं प्रयोजनं होमनिर्वृत्तिः तस्य बाधः। अस्तु बाध इत्यत आह—**अदृष्टार्थत्वमिति।** ननु 'यवागूं पचति' इति विहितस्य पाकस्य यवाग्वा निष्पत्तिरूपं दृष्टं प्रयोजनमस्त्येव, कथं पाकस्यादृष्टार्थत्वम्? तत्राह—**न हीति।** अनुपयुक्तायाः यवावाः पाकप्रयोजनस्यैवानुपपत्तेः होमापूर्वीययवागूप्रयोजनकत्वमेव पाकस्य स्वीकर्तव्यम्। अन्यथा दृष्टफलकत्वं पाकस्य न स्यादिति भावः।

**अनुवाद**—जहाँ किसी प्रयोजन से क्रम का निश्चय किया जाय उसे अर्थक्रम कहते हैं। जैसे—**'अग्निहोत्रं जुहोति यवागूं पचति'** में अग्निहोत्र होम एवं यवागूपाक में अर्थक्रम है। यहाँ पर यवागू का पाक होम के लिये किया जाता है अतः होमरूप प्रयोजनसिद्धि हेतु यवागू पाक अग्निहोत्र होम से पूर्व होता है।

यह अर्थक्रम पाठक्रम से बलवान् होता है क्योंकि यदि पाठ के अनुसार पहले और तदनन्तर यवागू पाक किया जाय तो यवागू से अग्नि होत्ररूप निश्चित प्रयोजन की सिद्धि में बाधा होगी। एवं यवागू पाक का अप्रत्यक्ष या अदृष्ट प्रयोजन स्वीकार करना होगा। क्योंकि अग्निहोत्र होम के पश्चात् किये जाने वाले यवागूपाक का कोई प्रत्यक्ष प्रयोजन नहीं है।

## अर्थालोकलोचन

क्रम निर्धारण में दूसरा प्रमाण 'अर्थक्रम' है अर्थात् अर्थ या प्रयोजन को दृष्टिगत करके जहाँ क्रम का निर्धारण होता है। अग्निहोत्र प्रकरण में क्रमशः **'अग्निहोत्रं जुहोति'** एवं **'यवागूं पचति'** पाठ मिलता है। यहाँ इन दोनों के क्रम के सम्बन्ध में संशय होता है। परन्तु दोनों वाक्यों पर विचार करने पर **'यवाग्वाः होमार्थत्वम्'** अर्थात् यवागू पाक अग्निहोत्र होम के लिये, यह बोध होता है। यह निर्णय रस्तुतः अर्थक्रम के अनुसार है पाठक्रम के आधार पर नहीं है। अतएव पाठक्रम से अर्थक्रम को बलवान् माना गया है

क्योंकि पाठक्रम के अनुसार पहले 'अग्निहोत्रहोम' है तत्पश्चात्'यवागूपाक'। यदि हम इस क्रम को स्वीकार करेंगे तो **'क्लृप्तबाध'** होगा। क्लृप्तबाध का अर्थ है—**'क्लृप्तं दृष्टं यत् प्रयोजनं यवाग्वाः होमार्थत्वं तस्य बाधः'** अर्थात् यवागू पाक का दृष्ट प्रयोजन अग्निहोत्रहोम की सिद्धि है। अतः पाठक्रम मानने पर उसका 'बाध' होगा क्योंकि अग्निहोत्रहोम के बाद 'यवागू पाक' का कोई दृष्ट प्रयोजन नहीं रहता। अतः अदृष्ट प्रयोजन की कल्पना करनी होगी जो कि **'लभ्यामाने फले दृष्टे नादृष्टपरिकल्पना'** नामक न्याय के विरूद्ध है। अतएव कहा गया है—

'द्रव्यमन्तरेणहोमासंभवात्। द्रव्यनिष्पत्त्यैव प्राथमिकत्वावश्यंभावत्वात्। होमद्रव्यत्वं च यवाग्वाः 'यवाग्वा अग्निहोत्रं जुहोति' इति तृतीयया अवगम्यते। तस्मात् पाठक्रमं बाधित्वा अर्थतः क्रमोऽत्र अभ्युपगन्तव्यः'। —जैमिनीयन्यायमालाविस्तर २६५.

## पाठक्रमलक्षणम्

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। यथाप्रत्ययं च पदार्थानामनुष्ठानम्। स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां पाठाद् यः क्रम आश्रीयते स मन्त्रपाठात्।

स चायं मंत्रपाठो ब्राह्मणपाठाद् बलीयान्, अनुष्ठाने ब्राह्मणवाक्यापेक्षया मंत्रपाठस्यान्तरङ्गत्वात्। ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदं कर्तव्यमिति अवबोध्य कृतार्थम्। मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते, अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात्। तत्क्रमस्य च मंत्रक्रमाधीनत्वाद् अन्तरङ्गोऽयं मन्त्रपाठ इति।

प्रयाजानां 'समिधो यजति' 'तनूनपातं यजति' इत्येवंविधपाठक्रमाद् यः क्रमः स ब्राह्मणपाठक्रमात्। यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि, तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याभावात्तान्येव क्रमस्मारकत्वेन स्वीक्रियन्ते।

## अर्थालोकः

पाठक्रमं लक्षयति—**पदार्थेति**। पदार्थानाम् अनुष्ठेयपदार्थानां बोधकानि यानि वाक्यानि तेषां क्रमं योऽवबोधयति स पाठक्रम इत्यर्थः। **तस्माच्च** पाठाच्च। तदिदमुपपादयति—**येनेति**। अनुष्ठानं प्रत्यर्थज्ञानमङ्गमिति पूर्वं निरूपितम्। अर्थज्ञानञ्चाध्ययनफलम्। अध्ययनञ्चानुपूर्वीविशिष्टग्रन्थस्य। यादृशानुपूर्वीविशिष्टग्रन्थस्याध्ययनं तेन च यथार्थज्ञानं जातं तदनुसारेण

पदार्थानुष्ठाने पाठक्रम उपयुज्यत इति भावः। **अर्थप्रत्ययम्** अर्थविषयकनिश्चयम्। एतादृशनिश्चयानुसारेणैव पदार्थानामनुष्ठानमित्यर्थः।

पाठक्रमं विभजते—**स चेति**। **तत्र** मन्त्रपाठब्राह्मणपाठयोर्मध्ये। तदुदाहरति—**आग्नेयेत्यादिना**। वेदेषु ब्राह्मणं संहिता चेति भागद्वयम्। ब्राह्मणे विधायकानि वाक्यानि सार्थवादानि भवन्ति, संहितायाञ्च मन्त्रास्समाम्नायन्ते। कासुचिच्च शाखासु मन्त्रब्राह्मणयोस्सहैवाम्नानमुपलभ्यते। तत्र मन्त्रकाण्डमिति पृथग्व्यवहारः प्रचलतीति स्थितिः। तत्र दर्शपूर्णमासप्रकरणे मन्त्रकाण्डे प्रयाजाज्यभागादिमन्त्रपाठानन्तरमाग्नेयोपांशुयाजाग्नीषोमीययागानां याज्यापुरोनुवाक्यायुगलान्याम्नातानि। ब्राह्मणभागे तु प्रथमम् अग्नीषोमयागस्यानन्तरमाग्नेयस्याम्नानमस्ति। तत्र मन्त्रपाठक्रमेण आग्नेययागस्य प्रथमम् अनन्तरञ्चाग्नीषोमीयस्येति व्यवस्थापयति—**मन्त्रपाठात्** इति। ननु ब्राह्मणपाठात्प्रथममग्नीषोमीययागस्यैवानुष्ठानं कुतो नाश्रीयत इति चेत्—ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वमुपपादयति—**स चायमित्यादिना**। तत्र हेतुमाह—**अन्तरङ्गत्वादिति**। अन्तरङ्गत्वमुपपादयितुं ब्राह्मणपाठस्य बहिरङ्गत्वं प्रतिपादयति—**ब्राह्मणवाक्यं हीति**। कर्मणः प्रयोगकाले ब्राह्मणवाक्यस्य न व्यापारः, किन्तु कर्मणः कर्तव्यत्वमात्रं प्रतिपाद्य चरितार्थं भवति। अतस्तस्य बहिरङ्गत्वमिति भावः। मन्त्रस्तु न तथेत्याह—**मन्त्राः पुनरिति**। पुनरिति वैलक्षण्ये। **प्रयोगकाले** अनुष्ठानकाले। सर्वकर्मणामनुष्ठानं मन्त्रोच्चारणपूर्वकं भवति। मन्त्राश्चानुष्ठेयपदार्थस्मारकाः। यथा यथा पदार्थानां स्मरणं तथा तथा पदार्थानामनुष्ठानमिति अनुष्ठानक्रमो मन्त्रक्रमाधीन इत्याह— **तत्क्रमस्य चेति**। अनुष्ठाक्रमस्येत्यर्थः। अतोऽन्तरङ्गत्वं मन्त्रपाठस्येत्यर्थः। ब्राह्मणपाठमुदाहरति—**प्रयाजानामिति**। येन क्रमेण प्रयाजा विहिताः तेन क्रमेण तेषामनुष्ठानं ब्राह्मणपाठादित्यर्थः। ननु ब्राह्मणवाक्यं प्रयोगाद् बहिरेव कर्मणः कर्तव्यत्वमवबोध्य चरितार्थं भवतीत्युक्तम्। तत्कथं ब्राह्मणवाक्यानि प्रयाजानां क्रमबोधकानीति शङ्कते—**यद्यपीति**। समाधत्ते—**तथापीति**। यं क्रममाश्रित्य ब्राह्मणवाक्यानि 'समिधो यजति' इत्यादीनि प्रवृत्तानि तेनैव क्रमेण तेषामनुष्ठानम्। तत्र हेतुः—**स्मारकान्तरस्याभावादिति**। **तान्येव** ब्राह्मणवाक्यान्येव। क्रमस्मारकत्वेन अनुष्ठानक्रमस्मारकत्वेन।

**अनुवाद—**अनुष्ठेय पदार्थ के बोधक वाक्यों का जो क्रम है उसे 'पाठक्रम' कहते हैं। पाठक्रम पदार्थों के क्रम का आधार होता है क्योंकि जिस क्रम से वाक्य का पाठ रहता है उसी क्रम से पढ़े जाने पर अर्थों का बोध होता है। तदनन्तर जिस क्रम से पदार्थों का

ज्ञान होता है उसी क्रम से उनका अनुष्ठान होता है। पाठक्रम के दो भेद हैं ( १ ) मन्त्र-पाठ एवं ( २ ) ब्राह्मण पाठ। **'आग्नेय'** एवं **'अग्निषोमीय'** याग में जो क्रम इनके याज्या एवं अनुवाक्याओं के पाठ में निश्चित होता है वह मन्त्र पाठ से ही होता है।

यह मन्त्रपाठ ब्राह्मणपाठ से बलवान् होता है क्योंकि अनुष्ठान में मन्त्रपाठ ब्राह्मण पाठ की अपेक्षा अन्तरङ्ग होता है। ( कारण यह है कि ) ब्राह्मण वाक्य क्रियानुष्ठान से पृथक् रहकर 'इदं कर्त्तव्यम्'—ऐसा करना चाहिए इस प्रकार ज्ञापन करके चरितार्थ हो जाता है परन्तु मन्त्र अनुष्ठानकाल में व्यवहृत होता है। क्रियानुष्ठान का क्रम स्मरण-क्रम के अधीन होता है और उस क्रम ( स्मरणक्रम ) का आधार मन्त्र पाठक्रम है अतः मन्त्रपाठ अन्तरंग माना जाता है।

**'समिधो यजति, तनूनपातं यजति'** इस प्रकार प्रयाजयागों का जो क्रम है वह ब्राह्मण पाठ के क्रमानुसार है। यद्यपि ब्राह्मणवाक्य अर्थावबोध कराके चरितार्थ हो जाते हैं तथापि प्रयाजादि यागों का अन्य दूसरा कोई स्मारक न होने से ब्राह्मण वाक्य ही क्रम का स्मारक होता है।

## अर्थालोकलोचन

अर्थक्रम नामक प्रमाण के निरूपण के बाद क्रम प्राप्त **'पाठक्रम'** प्रमाण की विवेचना की जा रही है। 'अनुष्ठेय पदार्थों के बोधक वाक्यों के क्रम का निर्णय करने वाले प्रमाण को **'पाठक्रम'** कहते हैं। तात्पर्य यह है--अनुष्ठान के प्रति अर्थज्ञान अङ्ग है यह पहले कहा गया है। अर्थज्ञान अध्ययन का फल है। आनुपूर्वी विशिष्ट ग्रन्थ के अध्ययन को ही अध्ययन माना गया है। इस प्रकार, विधि पूर्वक अध्ययन से ही यथार्थ-ज्ञान सम्पन्न होता है और उस ज्ञान के आधार पर पदार्थों के अनुष्ठान में पाठक्रम की उपयोगिता है।

पाठक्रम को मन्त्रपाठ एवं ब्राह्मण पाठ नाम से दो भागों में विभक्त किया गया है। वैसे वेद के संहिता भाग में मन्त्र है और ब्राह्मण भाग में अर्थवाद सहित विधायक वाक्य हैं। दर्शपूर्णमास प्रकरण के 'मन्त्र काण्ड' में प्रथमतः आग्नेय 'अनुवाक्या' और 'याज्या' मन्त्रों का पाठ मिलता है तत्पश्चात् अग्नीषोमीय अनुवाक्या और याज्या मन्त्रों का पाठ है। परन्तु ब्राह्मण में प्रथमतः 'अग्निषोमीय' याग का विधान है उसके बाद आग्नेय याग का। ब्राह्मणपाठ से मन्त्रपाठ बलवान् होता है अतः प्रथमतः आग्नेय याग का अनुष्ठान होगा, तदनन्तर अग्निषोमीय का। इस बलवत्ता में हेतु यह है कि मन्त्रपाठ अन्तरङ्ग है और ब्राह्मण पाठ बहिरङ्ग। भाव यह है कि ब्राह्मण वाक्य प्रत्यक्षतः अनुष्ठान के अंगों का केवल विधान करते हैं किन्तु मन्त्रों का अनुष्ठानवेला में उच्चारण होता है अतएव मन्त्र अन्तरंग-समीप है। मन्त्रोच्चारण बिना प्रयोग समवेत अर्थों का स्मरण न होगा, इस स्थिति में यागानुष्ठान ही सम्भव न हो सकेगा अतः मन्त्रपाठ ब्राह्मण पाठ से प्रबल है। परन्तु जहाँ मन्त्रपाठ उपलब्ध नहीं है यथा प्रयाजादि यागों में, वहाँ ब्राह्मण पाठ से ही क्रम का बोध होगा।[1]

१. 'एवं च यत्र कर्माङ्गभूतो मन्त्रः समस्ति तत्र मन्त्रपाठक्रमादेव क्रमः। यत्र च नास्ति, तत्र ब्राह्मणपाठस्यापि अगत्या क्रमबोधकत्वमङ्गीकरणीयमिति भावः।'—**सारविवेचिनी**

## स्थानलक्षणम्

स्थानं नामोपस्थितिः । यस्य हि देशे योऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्के–अग्नीषोमीय–सवनीया–नुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानमितरयोः पश्चात् । तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितिः ।

तथा हि—ज्योतिष्टोमे त्रयः पशुयागाः—अग्नीषोमीयः, सवनीयः आनुबन्ध्यश्चेति । ते च भिन्नदेशाः अग्नीषोमीय औपवसथ्येऽह्नि, सवनीयः सुत्याकाले, आनुबन्ध्यस्त्वन्ते । साद्यस्को नाम यागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं 'सह पशूनालभेत' इति । तच्च साहित्यं सवनीयदेशे, तस्य प्रधानप्रत्यासत्तेः, स्थानातिक्रमसाम्याच्च । सवनीयदेशे ह्यनुष्ठानेऽग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रमो भवति । अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम् । आनुबन्ध्यस्य तु स्वस्थानातिक्रमः, सवनीयस्थानातिक्रमश्च स्यात् । एवमनुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः स्थानातिक्रमः ।

तथा च सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । प्रकृतौ 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इत्याश्विनग्रहणानन्तरं सवनीयो विहित इति साद्यस्केऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति । अतो युक्तं तस्य स्थानात् प्रथममनुष्ठानमितरयोस्तु पश्चादित्युक्तम् ।

### अर्थालोकः

पाठक्रमं निरूप्य स्थानं लक्षयति—**स्थानमिति** । अङ्गताबोधकस्थानापेक्षया क्रमबोधकस्थानस्य वैलक्षण्यं बोधयितुं स्थानशब्दार्थमाह—**उपस्थितिरिति** । प्रकृतौ नानादेशेषु ये पदार्था अनुष्ठिताः तेषां विकृतौ अतिदेशेन एकस्मिन् देशेऽनुष्ठाने प्राप्ते कः क्रमोऽवलम्बनीय इति जिज्ञासायाम् उपस्थित्या क्रमस्य निश्चयः कर्तव्य इत्याह—**यस्य हीत्यादिना** ।

**यस्य** सवनीयस्य । **तत्पूर्वतने** सवनीयपूर्वतने । **स एव** सवनीय एव । **युक्तमिति** । उपस्थित्यधीनत्वादनुष्ठानस्येति भावः । उक्तमर्थं लक्ष्ये सङ्गमयति—**साद्यस्क** इति । एकस्मिन्नेव दिने सद्यः सोमक्रयविशिष्टः सोमयाग-

स्साद्यस्क इत्यर्थः। आनुबन्ध्यानामित्यनन्तरं पशुयागानामिति शेषः। **सवनीयदेशे** सवनरूपसोमयागसम्बन्धित्वात्सवनीयः, तद्देश इत्यर्थः। साद्यस्कस्यैकदिनसाध्यत्वात् तस्य च सवनीयत्वात् तत्र त्रयाणामपि पशुयागानां **सहानुष्ठाने आदौ** प्रथमम्। **इतरयोः** अग्नीषोमीयानुबन्ध्ययोः पश्चादनुष्ठानमित्यर्थः। तदिदमुपपादयति—**तथाहीति। ते च** पशुयागाश्च **भिन्नदेशाः** भिन्नो देश येषान्ते। देशभेदेनानुष्ठेया इत्यर्थः। देशं दर्शयति—**औपवसथ्य** इति। चतुर्थदिन इत्यर्थः। **सुत्याकाले** सोमरसाभिषवकाल इत्यर्थः। पञ्चमदिन इति यावत्। **अन्ते** क्रत्वन्त इत्यर्थः। अवभृथान्त इति यावत्। **सः** साद्यस्कः। **अव्यक्तत्वात्** स्वार्थचोदितदेवतारहितत्वात्। स्वं यागः तदर्थं विहिता या देवता तद्राहित्यमिति यावत्। अर्थात्सोमयागानामुत्पत्तिवाक्येषु क्वापि देवतानां तद्धितान्तेन शब्देन प्राप्तिः न भवति, किन्त्वन्यार्थं तथा श्रुताभिरेव देवताभिर्देवतावत्वं तेषामिति भावः। 'अव्यक्तासु च सोमस्य' इति न्यायेन स साद्यस्कः **ज्योतिष्टोमविकारः** अग्निष्टोमसंस्थाकज्योतिष्टोमविकृतिः। **तत्र** साद्यस्के **साहित्यं** समानतन्त्रानुष्ठानरूपम्। सवनीयदेशेऽनुष्ठानं प्रति कारणमाह—**प्रधानप्रत्यासत्तेः** प्रधानस्य सोमयागस्य प्रत्यासत्तिः सामीप्यम्। प्रधानयागसमनन्तरानुष्ठेयत्वरूपं सामीप्यमित्यर्थः। कारणान्तरमाह—**स्थानातिक्रमसाम्याच्चेति।** प्रकृतावग्नीषोमीयस्य पशोः स्थानमौपवसथ्यमहः, **तत्परित्यज्य** सवनीयदेश उत्कर्षः, एवमानुबन्ध्यस्थानमवभृथान्तम्, तत्परित्यज्य सवनीयदेश अपकर्षः इत्युभयोस्स्वस्वस्थानातिक्रमसाम्यादित्यर्थः। तदिदमाह—**सवनीय देश** इति। स्थानातिक्रमवैषम्यं क्व भवतीति दर्शयति—**अग्नीषोमीयेति।** सवनीयस्य पशोः स्वस्थानं परित्यज्याग्नीषोमीयदेशेऽपकर्षः, आनुबन्ध्यस्य स्वस्थानात् सवनीयस्थानाच्चापकर्ष इति स्थानातिक्रमवैषम्यमिति भावः। एवमानुबन्ध्यदेशे त्रयाणामनुष्ठाने सवनीयस्य [स्वस्थानादुत्कर्षः, अग्नीषोमीयस्य स्वस्थानात् सवनीयस्थानाच्चोत्कर्ष इति वैषम्यम्।

एतादृशवैषम्यपरिहारायानुष्ठानक्रमं निगमयति—**तथाचेत्यादिना।** कोऽसौ सवनीयदेश इत्यत आह—**आश्विनेति।** 'आश्विनं गृह्णाति' इति विहितग्रहग्रहणानन्तरमित्यर्थः। **प्रकृतौ** अग्निष्टोमसंस्थाकज्योतिष्टोमे। **त्रिवृता** त्रिगुणया। **परिवीय** संवेष्ट्य। यथा प्रकृतावाश्विनग्रहग्रहणानन्तर्यं सवनीयस्य तथा विकृतापि साद्यस्के तदनन्तरं सवनीयस्योपस्थितेः तदनुष्ठानमित्याह—**साद्यस्केऽपीति। इतरयोः** अग्नीषोमीयानुबन्ध्ययोः **पश्चात्** सवनीयानुष्ठानोत्तरम्। **इत्युक्तम्** पञ्चमे निरूपितम्।

अनुवाद—उपस्थिति को स्थान कहते हैं। जिसके देश में जिसका अनुष्ठान किया जाता है उससे पूर्ववर्ती पदार्थों का अनुष्ठान कर लेने पर दूसरों की अपेक्षा वही पहले उपस्थित होता है अतः उसका प्रथम अनुष्ठान करना उचित है। अतएव जब **'साद्यस्क'** नामक याग में सवनीय देश में अग्नीषोमीय, सवनीय एवं आनुबन्ध्य इन तीनों पशुओं का जब एक साथ अनुष्ठान करना होता है तो प्रथमतः सवनीय पशु का ही अनुष्ठान होता है तदनन्तर दोनों का ( अग्निषोमीय पशु एवं आनुबन्ध्य पशु का ) अनुष्ठान होता है। क्योंकि उस देश में ( सवनीय देश में ) आश्विनग्रहण के अनन्तर सवनीय की ही प्रथम उपस्थिति होती है।

( इस तथ्य को निम्न प्रकार से जाना जा सकता है )—ज्योतिष्टोम में तीन पशु याग है—( १ ) अग्नीषोमीय ( २ ) सवनीय और ( ३ ) आनुबन्ध्य। इन तीनों यागों के भिन्न भिन्न देश हैं—अग्नीषोमीय का औपवसथ्य नामक दिन में, सवनीय का सुत्याकाल में एवं आनुबन्ध्य का अन्तिम दिन में। साद्यस्क यागविशेष को कहा जाता है।[1] इसमें किसी देवता का निर्देश न होने से यह ज्योतिष्टोम याग का विकृति याग है। अतः अतिदेश वाक्य से साद्यस्क याग में पूर्ववर्णित तीनों पशुयाग प्राप्त होते हैं। साद्यस्क याग में तीन पशुओं के साथ अनुष्ठान का विधान **'सह पशूनालभेत'** अर्थात् पशुओं का आलम्भन साथ साथ करे, इस श्रुतिवाक्य से होता है। यह साहित्य ( पशुओं के आलम्भन का यह सहानुष्ठान ) सवनीय देश में अर्थात् सुत्याकाल में होता है क्योंकि सवनीय का प्रधान सोम के साथ सम्बन्ध ( प्रत्यासत्ति ) है एवं सवनीय देश में सहानुष्ठान ( साहित्य ) होने से केवल अग्नीषोमीय एवं आनुबन्ध्य ही अपने अपने स्थान का अतिक्रमण करेंगे।[2]

सुत्याकाल ( सवनीय देश ) में अनुष्ठान करने से अग्नीषोमीय एवं आनुबन्ध्य ही अपने अपने स्थान का अतिक्रमण करते हैं और प्रधान सोम के साथ सम्बन्ध ( प्रत्यासत्ति ) भी प्राप्त करते हैं और अग्नीषोमीय देश में [ अर्थात् औपवस्थ्य दिन में ] अनुष्ठान करने पर सवनीय का केवल अपने स्थान ( सुत्याकाल ) का अतिक्रमण होता है। अग्नीषोमीय पशु का जो सवनीय देश है उसका भी अतिक्रमण होता है इसी तरह आनुबन्ध्य पशु के अपने स्थान [ अवभृथ के बाद ] का अतिक्रमण होता है और सवनीय स्थान ( सुत्याकाल ) का भी अतिक्रमण होता है इस प्रकार तीनों द्वारा अपने

१. साद्यस्कः = सद्यः + क्री, साद्यस्को नाम सद्यः सोमक्रयविशिष्टः सोमयागविशेषः एकाहसाध्यः। क्रीधातोरधिकरणे डप्रत्ययः। ततः स्वार्थेण्प्रत्ययः।
'सद्यो दीक्षयन्ति' 'सद्यः सोमं क्रीणन्ति' इत्यादि श्रुत्युक्त प्रकारेण सर्वमङ्गजातं यत्र सद्य एवानुष्ठीयते स एक दिनानुष्ठेयो यागविशेषः साद्यस्कशब्दवाच्यः।

२.

| पशवः | अनुष्ठानदिनानि |
|---|---|
| ( १ ) अग्नीषोमीयः | ( १ ) औपवसथ्यम् अहः |
| ( २ ) सवनीयः | ( २ ) सौत्यदिनम् या सुत्याकालः |
| ( ३ ) आनुबन्ध्यः | ( ३ ) अवभृथदिनम् |

अपने स्थान का अतिक्रमण हो ा है। इसी तरह अनुबन्ध्य देश में अग्नीषोमीय का स्थानातिक्रमण देखा जा सकता है। इस तरह सवनीय देश में सब अनुष्ठानों के निश्चित होने पर सर्वप्रथम सवनीय पशु का ही अनुष्ठान करना चाहिए। क्योंकि आश्विन ग्रहण के अनन्तर ही सवनीय देश प्राप्त होता है। प्रकृतियाग में 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति'[1] (अर्थात अश्विनग्रहग्रहण करके त्रिगुणित रस्सी से यूप को लपेट करके अग्निदेवताजन्य सवनीय पशु का उपाकरण करे) इस वाक्य से आश्विनग्रह ग्रहण के पश्चात् सवनीय पशु का ही अनुष्ठान होता है अतः साद्यस्क संज्ञक याग में आश्विनग्रहण के अनन्तर सवनीय ही उपस्थित होता है। इसीलिए स्थानक्रम से सवनीय पशु का सर्वप्रथम अनुष्ठान करना उचित है अवशिष्ट दोनों पशुओं का बाद में।

## अर्थालोकलोचन

'पाठक्रम' के प्रतिपादन के अनन्तर क्रम प्राप्त 'स्थानक्रम' का निरूपण इस अनुभाग में किया गया है। स्थान का लक्षण संक्षेपतः 'स्थानं नाम उपस्थितिः' करके विशदार्थ प्रकट करने के लिए ग्रन्थकार ने लिखा है :

**'यस्य हि देशे यो अनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवति।'[2]**

स्थान का सामान्य स्वरूप इस प्रकार समझा जा सकता है। एक स्थान पर यदि कई अनुष्ठेय कर्मों का साहित्य हो जाय तो यह शंका होना स्वाभाविक है कि इन सबमें प्रथमतया अनुष्ठेय कौन है? इसका समाधान यह किया गया है कि जिसके देश में जिसका अनुष्ठान किया जाता है उसके अव्यवहित पूर्व में विद्यमान क्रिया के अनुष्ठान होने पर वही प्रथमतया उपस्थित होता है अतः उसका सबसे प्रथम अनुष्ठान करना समीचीन है। इस निर्णायक तथ्य को याज्ञिक दृष्टान्त द्वारा सरलतया समझा जा सकता है।

ज्योतिष्टोम नामक प्रकृति याग में अग्नीषोमीय, सवनीय एवं आनुबन्ध्य संज्ञक पशुओं का क्रमशः 'औपवस्थ्य', 'सुत्याकाल' एवं 'अवभृथ' संज्ञक दिनों में आलभन का विधान किया गया है।

साद्यस्क नामक सोमयागविशेष को ज्योतिष्टोम की विकृति माना गया है, क्योंकि इसमें देवता का नाम एवं सभी अङ्गों का विधान नहीं मिलता।[3] अतः ज्योतिष्टोम के

---

१. शत० ब्रा० ४।२।४।१२, आप० श्रौ० १२।१८।१२

२. इसकी विवृत्ति निम्न प्रकार की जा सकती है—

"यस्य हि नाम यस्य सवनीयस्य हि देशे यः नाम अग्नीषोमीय-सवनीय आनुबन्ध्यात्मकः पदार्थः अनुष्ठीयते तत्पूर्वतने नाम सवनीयपूर्वतने पदार्थे आश्विन-ग्रहग्रहणरूपे कृते स एव सवनीय एव प्रथममुपस्थितो भवति।'

३. अव्यक्तत्वात्—'अव्यक्तत्वात् स्वार्थचोदितदेवताराहित्यादित्यर्थः' 'का अव्य-

अनुरूप ही यहाँ अनुष्ठान होता है। परन्तु 'साद्यस्क' का अपना वैशिष्ट्य यह है कि उपरिलिखित तीनों पशुओं के आलभन का विधान एक ही दिन में किया गया है जो कि **'सह पशून् आलभते'** इस विधिवाक्य से विहित है। यहाँ शंका यह है कि ( १ ) 'आलभन' का दिन कौन सा होगा ? एवं ( २ ) तीन पशुओं में से सर्वप्रथम किस संज्ञक पशु का आलभन होगा ? इन शंकाओं का उत्तर ही स्थानक्रम से मिलता है। इनमें से प्रथम शंका का समाधान दो तर्कों के आश्रय से हुआ है—( १ ) प्रधान-प्रत्यासत्ति एवं ( २ ) स्थानातिक्रमसाम्य। 'प्रधान प्रत्यासत्ति' का तात्पर्य है मुख्य क्रिया से समीपता। आशय यह है कि—साद्यस्क सोमयाग की प्रधान क्रिया द्वितीय दिन में अनुष्ठेय 'सोमसवन' है। प्रकृतियाग ज्योतिष्टोम में 'सवन' का काल यही है। अतः 'सुत्याकाल' के दिन ही तीनों पशुओं का आलभन 'प्रधानप्रत्यासत्ति' को चरितार्थ करेगा।

सवनीय दिन ही पशुआलभनविधान में दूसरा तर्क 'स्थानातिक्रम्य' है। 'स्थानातिक्रम्य' का बोधगम्य अर्थ है—'स्थानों के उल्लङ्घन या अतिक्रमण की समानता'। ज्योतिष्टोम में पशुओं के आलभन में निम्न क्रम है—

| पशवः | दिनानि |
|---|---|
| ( १ ) अग्नीषोमीयः | ( १ ) औपवस्थ्यम् |
| ( २ ) सवनीयः | ( २ ) सुत्याकालः |
| ( ३ ) आनुबन्ध्यः | ( ३ ) अवभृथः |

परन्तु साद्यस्क सोमयाग के सुत्याकाल या सवनीय देश में तीनों पशुओं का आलभन हो, तो अग्नीषोमीय, एवं आनुबन्ध्य स्व-स्व स्थानों का परित्याग करके 'सवनीय देश' को प्राप्त करते हैं इस तरह केवल एक-एक स्थानातिक्रमण हुआ। परन्तु अग्नीषोमीय देश में अनुष्ठान करने पर सवनीय पशु का एक स्थानातिक्रमण एवं आनुबन्ध्य के दो स्थानातिक्रमण होंगे। इसी प्रकार यदि आनुबन्ध्य देश में अनुष्ठान का निश्चय हो तो अग्नीषोमीय पशु द्वारा दो स्थानातिक्रमण होगा और सवनीय पशु द्वारा एक। अतः अन्तिम दो विकल्पों में स्थानातिक्रमण की विषमता होने के कारण सवनीय देश में अनुष्ठान करना न्यायसङ्गत है।

इस प्रसङ्ग में दूसरी शङ्का यह है कि तीनों पशुओं में से किसका सबसे पहले आलभन होगा। इस शङ्का का सामन्यतः समाधान यह किया जा सकता है कि प्रकृति याग ज्योतिष्टोम में जिस क्रम को ,स्वीकार किया गया, वही क्रम यहाँ भी मानना चाहिये। परन्तु 'स्थानक्रम प्रमाण' से ऐसा मानना उचित नहीं है। भाव यह है कि—

प्रकृतियाग ज्योतिष्टोम में आश्विनग्रहण के अनन्तर सवनीय पशु का अनुष्ठान विहित है ( द्रष्टव्य—'आश्विनग्रहणानन्तरं हि सवनीयदेशः' ) अतः विकृति याग में भी आश्विन-

---

क्तता ? द्रव्यदेवतस्य अभावः। द्रव्यदेवतेन हि यागः अभिव्यज्यते।' शाबर भाष्य। यत्र तद्धितचतुर्थीमन्त्रवर्णेर्यागार्थतयैव देवता विनियुक्ता तद्व्यक्तम्। इतरत्तु अव्यक्तम्—शास्त्रदीपिका।

ग्रहण के बाद सवनीय की उपस्थिति ही प्राप्त है। ग्रन्थकार ने इस उपस्थिति को ही स्थान प्रमाण' कहकर 'स्थानं नाम उपस्थितिः' रूप में उसका लक्षण किया है। अतः सवनीय पशु के अनन्तर क्रमशः अग्नीषोमीय एवं आनुबन्ध्य पशु का अनुष्ठान दिया जाता है।[1]

## मुख्यक्रमलक्षणम्

प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः। येन हि क्रमेण प्रधानानि क्रियन्ते, तेनैव क्रमेण तेषामङ्गान्यनुष्ठीयन्ते चेत् तदा सर्वेषामङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति। व्युत्क्रमेणानुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषांचिदत्यन्तं व्यवधानं स्यात्, तच्चायुक्तम्, प्रयोगविध्यवगतसाहित्यबाधापत्तेः। अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः। अत एव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः, आग्नेयैन्द्रयागयोः पौर्वापर्यात्। एवं च द्वयोरभिघारणयोः स्वस्वप्रधानेन तुल्यमेकान्तरितं व्यवधानम्, व्युत्क्रमेणाघारे त्वाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम्, ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरितं व्यवधानं तच्चायुक्तमित्युक्तमेव।

### अर्थालोकः

क्रमप्राप्तं मुख्यक्रमं लक्षयति—**प्रधानेति**। प्रधानानां क्रमः प्रधानक्रमः तेन। यं क्रममवलम्ब्य प्रधानान्यनुष्ठीयन्ते तं क्रममवलम्ब्य तदङ्गानामपि क्रमो यत्र भवति तत्र मुख्यक्रम इत्यर्थः। तदिदमुपपादयति—**येनेति**। एवमनुष्ठाने प्रयोजनमाह—**तुल्यमिति**। समानमित्यर्थः। तत्तदङ्गानां स्वस्वप्रधानेन सह समानव्यवधानं सिध्यतीत्यर्थः। अन्यथा बाधकं दर्शयति—**व्युत्क्रमेणेति**। प्रथमप्रधानस्याङ्गानां पश्चात् द्वितीयप्रधानस्याङ्गानाञ्च प्रथममनुष्ठाने क्रियमाण इत्यर्थः। तदेवमनुष्ठानं न युक्तमित्याह—**तच्चेति**। व्युत्क्रमेणानुष्ठानमित्यर्थः। अयुक्तत्वे हेतुं दर्शयति—**प्रयोगेति**। प्रयोगोऽनुष्ठानम् तस्य विधिः प्रयोगविधिः—अङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरित्यर्थः। तेनावगतं यत्साहित्यं पौर्वापर्यरूपं तस्य बाधापत्तेरित्यर्थः। प्रयोगविधिर्यद्यपि प्रधानानामङ्गानाञ्च युगपदनुष्ठेयत्वरूपं साहित्यमवबोधयति, तथापि तदशक्यानुष्ठानमिति अविलम्बापरपर्यायसाहित्ये तस्य तात्पर्यमङ्गीकर्तव्यम्, बहूनां पदार्थानामेककालावच्छेदेनानुष्ठानस्य दुष्करत्वात्। यथा प्रयोग-

---

१. 'तयोरपि [ अग्नीषोमीयानुबन्ध्ययोरपि ] मध्ये कस्य प्रथममनुष्ठानमिति चिन्तायां तत्र प्रकृतिदृष्टक्रमस्य परित्यागे प्रमाणाभावेन प्रथमतोऽग्नीषोमीयस्य अनन्तरमानुबन्ध्यस्य इत्येव क्रमो बोद्धव्यः।'—सारविवेचिनी०

विधेरेतादृशसाहित्यविधाने तात्पर्यम् तथा असम्बन्धिपदार्थान्तराव्यवधानेऽपि तात्पर्यमेष्टव्यम् । यत्रैकमेव प्रधानं तत्रेदमव्यवधानसम्पादनं सुशकम् । यत्र च नानाप्रधानानि तत्रेदमव्यवधानसम्पादनमशक्यम्, तथापि येन नाव्यवधानन्यायेन यावद्भिः पदार्थैर्व्यवधानमवश्यं सोढव्यं तावतो व्यवधानस्याभ्यनुज्ञानं प्रयोगविधिस्स्वीकरोति । तत्र व्युत्क्रमेणानुष्ठानावसरेऽधिकव्यवधानापत्त्या तादृशसाहित्यबाधापत्तिरिति भावः । उपसंहरति—**अत** इति । अत्रोदाहरति **प्रयाजेति** । दर्शपूर्णमासयोः पञ्चप्रयाजहोमानन्तरं जुह्वां किञ्चिदाज्यमवशेष्य तेन वेद्यामासादितानां हविषामभिधारणं विहितम्—'प्रयाजशेषेण हवींष्यभिघारयति'इति । अभिघारणं नाम हविष्षु घृतस्य क्षारणम् । तत्र दर्शे त्रयः प्रधानयागाः—आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पय इति । त्रयाणां हविषाम्मध्ये कस्य हविषः प्रथममभिघारणम् , कस्य चानन्तरमिति जिज्ञासा जायते । एवं सत्यां जिज्ञासायां मुख्यक्रमस्तत्र नियामकः । मुख्यानां क्रम इव क्रमो मुख्यक्रमः । मुख्यानि प्रधानानि आग्नेयैन्द्रहवींषि । तेषां क्रमस्तु प्रथममाग्नेयः तदनन्तरमैन्द्रदधिपयोयागः । तदङ्गस्य प्रयाजशेषाभिघारणस्यापि स एव क्रम इत्याह—**आदाविति । पौर्वापर्यात्** क्रमादित्यर्थः । एवं क्रियमाणेऽसम्बन्धिपदार्थाव्यवधानरूपं साहित्यं सिध्यतीत्याह—स्वस्वेति । **तुल्यं** समानम् । **एकान्तरितं** एकेन व्यवहितम् । आग्नेयहविरभिघारणम् ऐन्द्रहविरभिघारणम् तत आग्नेययागः अनन्तरम् ऐन्द्रयाग इति स्थितौ आग्नेयहविरभिघारणाग्नेययागयोर्मध्ये ऐन्द्रहविरभिघारणेनैकेन व्यवधानम्, ऐन्द्रहविरभिघारणैन्द्रयागयोर्मध्ये आग्नेययागेनैकेन व्यवधानमिति तुल्यमेकान्तरितं व्यवधानं सिध्यतीत्यर्थः । **व्युत्क्रमेणाघारे** प्रथममैन्द्रहविरभिघारणम् अनन्तरञ्चाग्नेयहविरभिघारणमिति क्रियमाण इत्यर्थः । एकत्र व्यवधानाभावः, अपरत्र च द्व्यवधानमित्याह—अत्यन्तमिति । एतादृशं वैषम्यमयुक्तमित्याह—**तच्चेति** ।

**अनुवाद**—प्रधान द्वारा निर्णीत क्रमानुसार अङ्गों के अनुष्ठान का जो क्रम है उसको 'मुख्य क्रम'[1] कहा जाता है । जिस क्रम से प्रधान के अनुष्ठान किये जाते हैं उसी क्रम से उनके अङ्गों का भी अनुष्ठान करने से ही सभी अङ्गों का अपने-अपने प्रधानों से 'तुल्य

---

१. **मुख्यक्रमः**—मुख्यानां क्रम इव क्रमः मुख्यक्रमः । सारविवेचिनीः,

मुख्यक्रम को मध्यम पद लोपी समास मानने पर विग्रह का रूप यह होगा—

'मुख्यनिर्णीतः क्रमः, मुख्यैः कर्मभिः निर्णीतः क्रमः, मुख्यानां कर्मणां क्रमेण निर्णीतः क्रमः' इत्यर्थ ।

व्यवधान'[1] होता है। (किन्तु) विपरीत क्रम से अनुष्ठान करने पर किसी अङ्ग का अपने प्रधान के साथ सामीप्य (=अत्यन्त अव्यवधान) हो जायगा और किसी अङ्ग का अपने प्रधान के साथ अत्यन्त व्यवधान ( =दूर ) हो जायगा, यह ठीक नहीं है, क्योंकि प्रयोग विधि द्वारा बोधित सहभाव या तुल्य व्यवधान में बाधा होती है। अतः अङ्गों के क्रम में प्रधान का क्रम कारण हैं।

अत एव प्रयाजानुष्ठान से अवशिष्ट आज्य ( = घृत ) द्वारा प्रथमतः 'आग्नेय हवि' का अभिघारण (घृत से अभिषेक) होता है तदनन्तर 'ऐन्द्रदधि' का अभिघारण होता है क्योंकि आग्नेय याग एवं ऐन्द्र याग में पौर्वापर्य (अर्थात् आग्नेय याग प्रथमतः निर्दिष्ट, तदनन्तर ऐन्द्रयाग) है। इस प्रकार दोनों अभिघारणों का अपने अपने प्रधान से एकान्तरित (मध्य में एक) व्यवधान होता है। विपरीतक्रम से अनुष्ठान करने पर आग्नेयहविष अभिघारण एवं आग्नेय याग में कोई व्यवधान नहीं होता (=अतिसामीप्य) और ऐन्द्रदध्यभिघारण और ऐन्द्रयाग में दो के अन्तर से व्यवधान आता है। इस प्रकार का व्यवधान होना असमीचीन है यह पहले कहा गया है।

## अर्थालोकलोचन

मुख्यक्रम के स्वरूप पर विचार करते हुए ग्रन्थकार ने सर्वप्रथम उसका लक्षण किया है—'प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः'। भाव यह है कि जिस क्रम का अवलम्बन करके प्रधानों का अनुष्ठान होता है उसी क्रम का अवलम्बन उनके अङ्गों के लिए भी होता है इस प्रकार क्रमानुसार अनुष्ठान में प्रधान एवं अङ्गों में तुल्य व्यवधान रहता है। 'तुल्य व्यवधान' से प्रयोजन विशेष की सिद्धि होती है। 'प्रयोगविधि' के निरूपणप्रसङ्ग में यह बताया जा चुका है कि यह विधि अनुष्ठान को शीघ्रता से सम्पन्न कराने का बोध कराती है। यह बात तभी सम्भव हैं जब प्रधान एवं उनके अङ्गों का अनुष्ठान साथ-साथ हो अर्थात् उनमें अनुष्ठान साहित्य हो। अनुष्ठान प्रक्रिया में यह भी ध्यान रखना पड़ता है कि दोनों के अनुष्ठान काल में अधिक अन्तर न हो। यद्यपि कई प्रधान कर्मों का अनुष्ठान यदि उनके अङ्गों सहित करना पड़ता है तब यह नितान्त असम्भव है कि सबका अनुष्ठान एक साथ अर्थात् एककालावच्छेदेन है। अतः कुछ व्यवधान होना स्वाभाविक है। परन्तु आवश्यक यह है कि प्रत्येक प्रधान एवं उसके अङ्ग के अनुष्ठान के व्यवधान का काल समान हो। यह तभी सम्भव हो सकता है जब अङ्गों के अनुष्ठान का क्रम प्रधान के अनुष्ठान क्रम से हो। यदि इस प्रक्रिया का परिपालन नहीं किया जाता, तब कुछ प्रधान एवं उनके अङ्गों में अत्यन्त निकटता (अत्यन्तमव्यवधानम्) एवं कुछ में अत्यन्त दूरी (अत्यन्त व्यवधान) अपरिहार्य होगी और इस प्रकार सहानुष्ठान (साहित्य) की प्रक्रिया में बाधा होगी। अतः मुख्यक्रम से अङ्गक्रम का निर्णय किया जाता है। इस निर्णीत सिद्धान्त को दृष्टान्त से इस प्रकार समझा जा सकता है।

---

१. समानमित्यर्थः। तत्तदङ्गानां स्वस्वप्रधानेन सह समानव्यवधानं सिध्यतीत्यर्थः। (अर्थालोकः)

दर्शपूर्णमास प्रकरण में 'आग्नेय याग' एवं 'ऐन्द्र याग' संज्ञक दो प्रधान कर्म विहित हैं। आग्नेय याग का हविष् पुरोडाश ( द्रष्टव्य—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति, ऐन्द्र दधि--तैत्तिरीयसंहिता २. ५. ३ ) एवं ऐन्द्र याग का दधि विहित है। आग्नेय एवं ऐन्द्र यागों के क्रम का निर्णय क्रमशः उनकी याज्या एवं पुरोनुवाक्या द्वारा हुआ है। इनका अनुष्ठान प्रयाज होम के अनन्तर किया जाता है। 'प्रयाजशेषेण हवींषि अभिघारयति' वाक्य द्वारा प्रयाजानुष्ठान से अवशिष्ट घृत का हविष् का अभिघारण निर्दिष्ट है। दर्शयाग में (( १ ) आग्नेय पुरोडाश ( २ ) ऐन्द्र दधि तथा ( ३ ) ऐन्द्र पयस् )— पुरोडाश, दधि एवं पयस् ये तीन द्रव्य हैं। शङ्का यह है कि तीनों द्रव्यों पर अभिघारण का क्रम क्या है ? समाधान हेतु मुख्यक्रम का आश्रय लेना पड़ता है। इस सिद्धान्त द्वारा आग्नेय याग के हवि पुरोडाश का अभिघारण पहले होगा, तदनन्तर ऐन्द्रयाग के हवि दधि का अभिघारण होगा। इस क्रम को मानने पर प्रधान एवं उसके अङ्ग के अनुष्ठान में तुल्यव्यवधान है। परन्तु व्युत्क्रम ( = विरुद्धः क्रमः ) स्वीकार करने पर आग्नेयहविरभिघारण एवं आग्नेय याग अत्यन्त समीप हो जाते हैं और ऐन्द्रदध्यभिघारण तथा ऐन्द्रयाग एक दूसरे दूर हो जाते हैं। दोनों परिस्थितियों को निम्न प्रकार से जाना जा सकता है।

| मुख्यक्रमानुसार अभिघारण का अनुष्ठान | | विपरीतक्रम से अभिघारण का अनुष्ठान | |
|---|---|---|---|
| ( १ ) आग्नेयहविरभिघारण | ( अङ्ग ) | ( १ ) ऐन्द्रध्यभिघारण | ( अङ्ग ) |
| ( २ ) ऐन्द्रहविरभिघारण | ( „ ) | ( २ ) आग्नेयहविरभिघारण | ( „ ) |
| ( ३ ) आग्नेययाग | (प्रधान) | ( ३ ) आग्नेययाग | (प्रधान) |
| ( ४ ) ऐन्द्रयाग | ( „ ) | ( ४ ) ऐन्द्रयाग | ( „ ) |

इससे यह स्पष्ट है कि मुख्यक्रम से अनुष्ठान करने में प्रधान एवं अङ्ग के क्रम में व्यवधान एक का ही है ( चित्र में १, एवं ३ में २ का, तथा २ एवं ४ में ३ का ) जो तुल्य व्यवधान कहा जाता है।

परन्तु विपरीत क्रम में व्यवधान वैषम्य है। ( चित्र में २, एवं ३ में अत्यन्त सामीप्य है एवं १ एवं ४ में २, तथा ३ का व्यवधान होने से अत्यन्त दूरी है ) यह व्यवस्था ठीक नहीं है। अतः अङ्गक्रियाओं के अनुष्ठान में प्रधानक्रम का ही ग्रहण किया जाता है।

## मुख्यक्रमः पाठक्रमाद्दुर्बलः

स च मुख्यक्रमः पाठक्रमाद्दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः। पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद् बलवान्। प्रवृत्तिक्रमे हि बहूनामङ्गानां प्रधानविप्रकर्षात्, मुख्यक्रमे तु सन्निकर्षात्।

## अर्थालोकः

पाठक्रमान्मुख्यक्रमस्य दौर्बल्यं प्रतिपादयति—**स** **चे**त्यादिना। दौर्बल्ये हेतुमाह—**मुख्यक्रम** इति **विलम्बितप्रतिपत्तिक** इत्यनेन सम्बध्यते। विलम्बिता प्रतिपत्तिः ज्ञानं यस्य सो विलम्बितप्रतिपत्तिको मुख्यक्रम इत्यर्थः। एवं प्रतिपत्तिकत्वे हेतुः—**प्रमाणान्तरेति**। प्रधानक्रमो याज्यापुरोनुवाक्यापाठादिरूपप्रमाणान्तरसापेक्षः तत्प्रतिपत्तिमपेक्षतेऽङ्गानां क्रम इति विलम्बेन प्रतिपत्तियोग्य इत्यर्थः। पाठक्रमे विद्यमानां स्थितिमाचष्टे—**पाठेति**। यत्र पाठक्रमात्क्रम इष्यते तत्र निरपेक्षो यस्स्वाध्यायः स्वकुलपरम्परागतशाखारूपस्तस्य पाठक्रममेव केवलमपेक्षत इत्यर्थः। **न** **तथा** न विलम्बितप्रतिपत्तिकः। तथाहि—पौर्णमास्यां त्रयः प्रधानयागाः—आग्नेयः पुरोडाशः, आज्यहविष्क उपांशुयाजः, अग्नीषोमीयः पुरोडाशश्चेति। तत्राग्नेयाग्नीषोमीययोः तत्तद्याज्यापुरोनुवाक्यापाठक्रमात् पौर्वापर्यं प्रागुक्तम्। एतयोर्मध्ये 'उपांशुयाजमन्तरा यजति' इत्यनेनोपांशुयाजो विहितः कर्तव्यतया। अनेनैव क्रमेणेमे त्रयः प्रधानयागा अनुष्ठीयन्ते। तदङ्गेषु हविर्निर्वापे विचारः। निर्वापो नाम यागोपयोगाय पर्याप्तस्य व्रीह्यादेर्द्रव्यस्य पृथक्करणम्। तत्र 'अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम्' इति प्रमाणेन आग्नेयाग्नीषोमयोर्हविर्निर्वापः प्रथमं क्रियते। उपांशुयाजहविष आज्यस्य निर्वापोऽन्ते पठितः। तत्र मुख्यक्रमानुसारेणाग्नेयहविर्निर्वापानन्तरम् अग्नीषोमीयहविर्निर्वापात् पूर्वम् उपांशुयाजाज्यनिर्वापः कर्तव्यः, उत पाठक्रमात् आग्नेयाग्नीषोमीयहविर्निर्वापादूर्ध्वं कर्तव्य इति सन्देहे मुख्यक्रमस्य प्रधानक्रमप्रतिपत्तिसापेक्षतया पाठक्रमस्य च निरपेक्षतया पाठक्रमादन्त एवोपांशुयाजाज्यनिर्वाप इति सिद्धान्तः। अत्र यद्यपि प्रथममाग्नेयहविर्निर्वापः, तत उपांशुयाजाज्यनिर्वापः, अनन्तरमग्नीषोमीयहविर्निर्वाप इति मुख्यक्रमानुसारेण निर्वापे क्रियमाणे आग्नेयोपांशुयाजाग्नीषोमीययागानां तुल्यं द्व्यन्तरितं व्यवधानं सिध्यति—

आग्नेयहविर्निर्वापः, उपांशुयाजाज्यनिर्वापः, अग्नीषोमीयहविर्निर्वापः। आग्नेययागः उपांशुयाजः अग्नीषोमीययागः। आग्नेयहविर्निर्वापाग्नेययागयोर्मध्ये उपांशुयाजाग्नीषोमीयहविर्निर्वापौ, उपांशुयाजाज्यनिर्वापोपांशुयाजयोर्मध्ये अग्नीषोमीयहविर्निर्वापाग्नेययागौ, अग्नीषोमीयहविर्निर्वापाग्नीषोमयागयोर्मध्ये आग्नेयोपांशुयाजौ इति। पाठक्रमानुसारेण तु तुल्यं व्यवधानं न सिध्यति—आग्नेयहविर्निर्वापः, अग्नीषोमीयहविर्निर्वापः, उपांशुयाजाज्यनिर्वापः। आग्नेययागः, उपांशुयाजः, अग्नीषोमीययागः।

अत्राग्नेययागोपांशुयाजयोः स्वस्वाङ्गनिर्वापेण सह द्व्यन्तरितव्यवधाने सत्यपि अग्नीषोमीयतन्निर्वापयोर्मध्ये त्र्यन्तरितं व्यवधानमस्तीति प्रयोगविध्यनुमततुल्यव्यवधानाभावः, तथापि मुख्यक्रमात्पाठक्रमस्य बलीयस्त्वे न कापि हानिः, प्राबल्यदौर्बल्यस्य निरपेक्षत्वसापेक्षत्वप्रयुक्तत्वात् ।

मुख्यक्रमस्य प्रवृत्तिक्रमाद्बलीयस्त्वमाह—**स चायमिति** । प्रवृत्तिक्रमस्य दौर्बल्ये हेतुः **प्रधानविप्रकर्षादिति ।** मुख्यक्रमस्य प्राबल्ये हेतुः—**सन्निकर्षादिति ।** तथाहि—दर्शयागे प्रथममाग्नेयानुष्ठानम्, अनन्तरं सान्नाय्यानुष्ठानमिति प्रधानयागक्रमः । प्रधानयागक्रमेण तदङ्गानामनुष्ठाने मुख्यक्रमः, किन्तु सान्नाय्ययागस्य कानिचनाङ्गानि वत्सापाकरणदोहनादीनि प्रथमदिनेऽनुष्ठेयानि भवन्ति, दध्नस्सिध्यर्थं पूर्वेद्युर्दोहनातञ्चनादेरावश्यकत्वात् । तत्र प्रवृत्तिक्रमानुसारेण परेद्युरिष्टिदिने सान्नाय्ययागीयान्येवाङ्गानि प्रथममनुष्ठेयानि अनन्तरञ्चाग्नेयाङ्गानि ।

मुख्यक्रमे—

| | |
|---|---|
| आग्नेयधर्माः | सान्नाय्यधर्माः |
| आग्नेययागः | सान्नाय्ययागः |

प्रवृत्तिक्रमे—

| | |
|---|---|
| ( १ ) सान्नाय्यधर्माः | ( २ ) आग्नेयधर्माः |
| ( ३ ) आग्नेययागः | ( ४ ) सान्नाय्ययागः |

इति स्थितिः । तत्र मुख्यक्रमे स्वीकृते एकैकस्यैकैकेन व्यवधानम् प्रवृत्तिक्रमे चावलम्ब्यमाने आग्नेययागाग्नेयधर्मयोर्मध्य एकं व्यवधानम् सान्नाय्ययागसान्नाय्यधर्मयोर्मध्ये द्व्यन्तरितं व्यवधानमिति मुख्यक्रम एव बलीयानिति ।

**अनुवाद—यह** मुख्यक्रम पाठक्रम से दुर्बल है । क्योंकि पहले प्रमाणान्तर से प्रधान क्रम का ज्ञान होता है तदनन्तर प्रधान क्रम का ज्ञान होता है अतः मुख्यक्रम विलम्ब से ज्ञात होगा । किन्तु पाठक्रम से केवल स्वाध्याय पाठक्रम की ही अपेक्षा होती है और स्वाध्याय पाठक्रम निरपेक्ष होता है अर्थात् उसे किसी की अपेक्षा नहीं होती है । अतः पाठक्रम बलवान् है ।[1]

१. **पाठक्रमप्रतिपत्तिः**
( अ ) स्वाध्यायपाठः
|
पाठक्रमः

**मुख्यक्रमप्रतिपत्तिः**
( आ ) स्वाध्यायपाठः
|
पाठक्रमः
|
प्रधानक्रमः
|
मुख्यक्रमः

परन्तु यह मुख्यक्रम, प्रवृत्ति क्रम से बलवान् होता है क्योंकि प्रवृत्ति क्रम में बहुत से अङ्ग अपने प्रधान से दूर हो जाते हैं, जब कि मुख्यक्रम में निकट।

## अर्थालोकलोचन

पाठक्रम से मुख्यक्रम की दुर्बलता का निरूपण इस परिच्छेद में किया गया है। मुख्यक्रम से तात्पर्य है—अङ्गों के अनुष्ठान का क्रम जो उनके प्रधान के क्रमों में निर्णीत है। अतः मुख्यक्रम का आधार प्रधान क्रम का ज्ञान है। प्रधानक्रम पाठक्रम पर आधृत हैं। अतः प्रधानक्रम प्रमाणान्तर की अपेक्षा करता है ऐसा कहा गया है। इस प्रकार मुख्यक्रम का ज्ञान, पाठक्रम एवं प्रधानक्रम पर निर्भर रहने के कारण, विलम्ब से होता है। परन्तु पाठक्रम अपेक्षाकृत शीघ्रता से जाना जाता है। क्योंकि यह निरपेक्ष वेद के पाठक्रम ( स्वाध्यायः = वेदः ) की ही अपेक्षा रहता है।

याज्ञिक प्रक्रिया में निर्दिष्ट दृष्टान्त द्वारा इसे अधिक स्पष्टतः समझा जा सकता है। दर्शपूर्णमास के अन्तर्गत पूर्णमास में उपांशु एवं अग्नीषोमीय संज्ञक दो याग विहित हैं। इनमें से प्रथम याग का 'आज्य' द्रव्य है, 'उत्पवन' एवं 'चतुर्गृहीतत्व' आदि आज्य के धर्म है। द्वितीय याग का 'पुरोडाश' द्रव्य है, 'पुरोडाश' के 'निर्वाप' एवं 'अवघात' आदि धर्म हैं। अब संशय यह है कि आज्य धर्मों का अनुष्ठान प्रथम होगा 'अथवा' पुरोडाश का? मुख्यक्रम प्रमाण के अनुसार आज्य धर्मों का प्रथमतया अनुष्ठान होगा, तदनन्तर पुरोडाश का; क्योंकि इनके प्रधान क्रमशः उपांशु एवं अग्नीषोमीय याग है अतः प्रधान के अनुष्ठान क्रम से अङ्गों का भी अनुष्ठान सङ्गत है परन्तु यह समाधान उचित नहीं है क्योंकि स्वाध्याय पाठक्रम में निरूपित क्रम इससे भिन्न हैं अर्थात् वेद में पुरोडाश की 'निर्वाप' एवं अवघात आदि अङ्गक्रियायें प्रथमतया पठित है तथा आज्य की 'उत्पवन एवं चतुर्गृहीतत्व' आदि क्रियाओं का पाठ बाद में है। अतः पाठक्रम की प्रबलता को स्वीकार करते हुए पुरोडाश धर्मों का अनुष्ठान पहिले एवं आज्य धर्मों का अनुष्ठान बाद में करना उपयुक्त है।[1]

स चायं मुख्यक्रमः…… संनिकर्षात्—इस अनुच्छेद में प्रकृतिक्रम से मुख्यक्रम का प्राबल्य निरूपित है। क्योंकि प्रवृत्ति क्रम के अनुसार अनुष्ठान करने पर कई अङ्ग अपने

---

१. 'दर्शपूर्णमासयोः उपांशुयाजोऽग्नीषोमीयश्च इत्येतदुभयं पौर्णमास्यामाम्नातम्। तन्त्र उपांशुयागस्य आज्यं द्रव्यम्। आज्यधर्मा उत्पवनचतुर्गृहीतत्वादयः। अग्नीषोमीयस्य पुरोडाशो द्रव्यम्। तस्या धर्मा निर्वापावघातादयः। तत्र मुख्यौ यागौ उपांशुयाजाग्नीषोमीयौ पूर्वोत्तरभाविनौ। तथा सति पूर्वन्यायेन धर्मक्रमस्य मुख्यक्रमाधीनत्वात् आज्यधर्माणाम् अनुष्ठाने प्राथम्यम् इति प्राप्ते—

ब्रूमः। औषधधर्माः निर्वापादयः पूर्वमाम्नाताः। पश्चादाज्यधर्माः तत्र मुख्यक्रमप्रयुक्तमाज्यधर्माणां प्राथम्यं बाधित्वा पाठक्रमानुसारेण औषधधर्मा एव प्रथममनुष्ठेयाः। पाठक्रमो हि वैदिकैः शब्दैः सहसा प्रतीयते। मुख्यक्रमानुसारी तु क्रम उपपत्त्या कल्पनीयः। तस्मात् अग्नीषोमीयपुरोडाशार्थेभ्यः औषधधर्मेभ्यः ऊर्ध्वमाज्यधर्मा अनुष्ठेयाः।

अपने प्रधान से व्यवहित हो जायेंगे परन्तु मुख्य क्रमानुसार प्रधान के सन्निहित रहेंगे। प्रवृत्तिक्रम के स्वरूप पर विशद विचार आगे किया जायेगा। सम्प्रति दर्शपूर्णमास याग से उदाहरण द्वारा इस प्राबल्य एवं दौर्बल्य भाव को समझा जा सकता है।

दर्शपूर्णमास प्रकरण के दर्श याग के अन्तर्गत आग्नेय एवं उपांशु संज्ञक यागों का विधान है उपांशुयाग को सान्नाय याग भी संज्ञा है[1] क्योंकि इसमें दूध एवं दधि की प्रयोग किया जाता है। आग्नेय याग के अवदान अभिधारण एवं हविरासादन आदि धर्म है एवं शाखाहरण, वत्सापकरण एवं दोहन के साथ-साथ अवदान आभिधारण, एवं हविरासादन सांन्नायके धर्म माने गये हैं अतः सान्नाध्य धर्म के वस्तुतः दो भाग हो गये—

( १ ) शाखाहरण, वत्सापकरण एवं दोहन।

( २ ) अवदान, अभिघारण एवं हविरासादन। इन दोनों में से शाखाहरण, वत्सापकरण एवं दोहनादि कृष्णचतुर्दशी के दिन इसलिये समाप्य है क्योंकि जब तक शाखाहरण करके ( पलाश से ) बछड़े को गाय से अलग ( वत्सापकरण ) नहीं किया जायगा तब दोहन करके दर्श याग के लिये 'दधि' नहीं तैयार हो सकेगा। अवदान अभिघारण एवं हविरासादन का अनुष्ठान 'दर्श' के दिन होता है प्रवृत्तिक्रम के अनुसार प्रधान के सभी अङ्गों का अनुष्ठान एक साथ हो जाना चाहिए। इस तरह 'सान्नाय याग' के धर्मों का अनुष्ठान साथ साथ हो जाने पर क्रम का स्वरूप निम्न प्रकार होगा—

सर्व प्रथम—सान्नायधर्म, द्वितीय—आग्नेयधर्म, तृतीय—आग्नेययाग, चतुर्थ—सांन्नाययाग परन्तु इस क्रम में यह स्पष्ट है कि मुख्य सान्नाययाग अङ्गभूत धर्म उससे अत्यन्त व्यवहित है।[2]

परन्तु मुख्य क्रम को प्रमाण मानने पर स्थिति भिन्न होगी। सांन्नाययाग के धर्मों के अनुष्ठान के अनन्तर ( अनुष्ठान हेतु पहले स्पष्ट किया गया है ) मुख्य क्रम प्रमाण के आधार पर अङ्गों का अनुष्ठान प्रधान के अनुष्ठान क्रमानुसार होगा।

प्रधान आग्नेय एवं सांन्नाय यागों का क्रम पूर्वनिर्णीत है अतः क्रम निम्न प्रकार होगा—

( १ ) शाखाहरणादि तीन सांन्नाय धर्म ( २ ) आग्नेय धर्म ( ३ ) सांन्नाय याग के अवशिष्ट अवदानादि तीन धर्म, ( ४ ) आग्नेय याग, ( ५ ) सांन्नाय याग।

अतः स्पष्ट है कि पूर्व निर्दिष्ट क्रम से इस क्रम में प्रधान एवं तदङ्गों में 'तुल्य व्यवधान' है।[3] [ द्रष्टव्य—अर्थालोक टीका में प्रदत्त चित्र ]—

---

१. "यस्मात् पशवः समनयंस्तस्मात् सान्नाय्यस्य गोरसस्य 'सम्यगानयनेन सम्पन्नम्' इति व्युत्पत्त्या सानाय्यनाम भवति॥"

२. 'बहूनामङ्गानां सान्नाय्यधर्माणामित्यर्थः प्रधानविप्रकर्षात्। प्रधानात् सान्नाययागात् विप्रकर्षात् विशेषेण दूरस्थितत्वात्॥'

३. 'तुल्य व्यवधान' का तात्पर्य इससे पूर्व बताया जा चुका है।

| प्रवृत्तिक्रम | मुख्यक्रम |
|---|---|
| ( १ ) समस्त सान्नाय्य धर्म। | ( १ ) शाखाहरणादि तीन सान्नाय्य धर्म। |
| ( २ ) आग्नेय धर्म। | ( २ ) आग्नेय धर्म। |
| ( ३ ) आग्नेय याग। | ( ३ ) सान्नाय्य के अवशिष्ट अवदानादि धर्म। |
| ( ४ ) सान्नाय याग। | ( ४ ) आग्नेय याग। |
| | ( ५ ) सान्नाय याग। |

## प्रवृत्तिक्रमलक्षणम्

सहप्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानामावृत्यानुष्ठाने कर्तव्ये हि द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः। यथा प्राजापत्यपश्वङ्गेषु। प्राजापत्या हि 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वाक्येन तृतीयानिर्देशात्सेतिकर्तव्यताका एककालत्वेन विहिताः, अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपाद्यम्। तच्च प्राजापत्यपशूनां संप्रतिपन्नदेवताकत्वेन युगपदनुष्ठानादुपपद्यते। तदङ्गानां चोपाकरणादीनां न हि युगपदनुष्ठानं शक्यम्। अतस्तेषां साहित्यमव्यवहितानुष्ठानात्संपाद्यम्।

तच्चैकस्योपाकरणं विधायापरस्योपाकरणं विधेयम्। एवं नियोजनादिकमपि। तथा च प्राजापत्येषु कस्माच्चित्पशोरारभ्य एकं सर्वत्रानुष्ठाय द्वितीयादिपदार्थस्तेनैव क्रमेणानुष्ठेयः स प्रवृत्तिक्रमः। सोऽयं श्रुत्यादिभ्यो दुर्बलः। तदेवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः।

## अर्थालोकः

प्रवृत्तिक्रमं निरूपयति—**सहेति**। **प्रयुज्यमानेषु** अनुष्ठीयमानेषु, **सन्निपातिनां** सन्निपत्योपकारकाणामङ्गानामित्यर्थः। यागीयद्रव्यदेवताद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकमिति लक्षणं प्रागभिहितम्। **आवृत्येति**। प्रतिप्रधानमङ्गानामावृत्त्येत्यर्थः। **द्वितीयेति**। प्रथममङ्गं येन क्रमेणानुष्ठितं तेनैव क्रमेण द्वितीयतृतीयाद्यङ्गान्यनुष्ठेयानीत्यर्थः। उदाहरणम्—**प्राजापत्येति**। वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति वाक्यविहितप्रजापतिदेवताका ये पशवः पशुयागाः तेषामङ्गेषु—उपाकरणनियोजनादिष्वित्यर्थः। तदिदमुपपादयति—**प्राजापत्या** इति। **तृतीयानिर्देशादिति**। 'प्रजापत्यैः' इति तृतीयानिर्देशः। यत्र हि तृतीयानिर्देशः तत्र प्रकृत्यर्थस्य करणत्वमवगम्यते। तच्च करणत्वं फलजनकत्वरूपम्। फलजनकत्वञ्च प्रधानमात्रस्य न सम्भवती-

त्यङ्गसहितस्यैव प्रधानस्य तद्वक्तव्यम् । अत एव भावनाकरणत्वं साङ्गस्यैव प्रधानस्य न तु प्रधानमात्रस्य । अनया रीत्या प्राजापत्यानां पशूनामेककालानुष्ठेयत्वरूपं साहित्यं तत्तदङ्गसहितानां सम्पादनीयमित्याह—**सेतिकर्तव्यताका इति । तच्चेति** । साहित्यञ्चेत्यर्थः । **सम्प्रतिपन्नदेवताकत्वेन** एकदेवताकत्वेनेत्यर्थः । नानाद्रव्याणां यत्रैकैव देवता तत्र सम्प्रतिपन्नदेवताकं कर्मेति व्यवहारः । एकदेवताकत्वेन पशूनामेकस्मिन् कालेऽनुष्ठानेन साहित्यं सुसम्पादम्, किन्तु तदङ्गानि कथमनुष्ठेयानीत्यत आह—**तदङ्गानामिति ।** तदुपपादयति—**न हीति** । अनेकेषु पशुषु एककालावच्छेदेन उपाकरणं न खलु कर्तुं शक्यत इत्यर्थः । नन्वङ्गानां तर्हि कथं साहित्यमित्यत आह—**तेषां साहित्यमिति । अव्यवधानेन** असम्बन्धिपदार्थाव्यवधानेनेत्यर्थः । **तच्चैकस्येति** । सप्तदश पशवः । एकैकस्मिन् पशावनुष्ठेयान्यङ्गानि–उपाकरणं नियोजनम् अञ्जनं पर्यग्निकरणं संज्ञपनमित्यादीनि नाना । तत्रैकस्मिन् पशौ सर्वाण्यङ्गानि कृत्वा द्वितीयादिषु पशुषु तेषामनुष्ठानमित्येकः प्रकारः । अपरस्तु—एकस्मिन् पशौ प्रथममङ्गमुपाकरणं कृत्वा तदेव द्वितीयादिषु पशुषु सप्तदशपर्यन्तेष्वनुष्ठायानन्तरं द्वितीयं तृतीयञ्चेत्यङ्गमनुष्ठेयमिति । तत्र प्रथमः प्रकारो काण्डानुसमय इति द्वितीयश्च पदार्थानुसमय इति चाख्यायते । तत्र कः प्रकार एष्टव्य इत्यत्राह—**उपाकरणं विधायेत्यादिना** । प्रथममङ्गं कस्मादारब्धव्यमित्यत्राह–**कस्माच्चिदिति** । तत्रानियम इति भावः । **द्वितीयादिपदार्थः** नियोजनादिः । एवञ्च प्रथमपदार्थानुष्ठितक्रममादाय द्वियादिपदार्थानामनुष्ठानं प्रवृत्तिक्रम इति सिद्धम् । छात्रैरत्र पट्टिका द्रष्टव्या—

**पशवः—**

१ २ ३ ४ ५ ६ ७ ८ ९ १० १० ११ १२ १३ १४ १५ १६ १७.

**अङ्गानि**—१ उपाकरणम् २ नियोजनम ३ अञ्जनम् ४ पर्यग्निकरणम् ५ संज्ञपनमित्यादीनि ।

तत्राष्टमात्पशोरारभ्य यद्युपाकरणं प्रारभ्यते तर्हि नियोजनं द्वितीयमङ्गं तस्मादेवारभ्यानुष्ठेयम् । तथा सत्यष्टमपशूपाकरणस्य स्वनियोजनेन सह षोडशक्षणानां व्यवधानम् । एवं तत्तत्पशूपाकरणस्य स्वस्वनियोजनैस्सह तुल्यं व्यवधानं सिध्यति । यदि नियोजनमष्टमपशावकृत्वा प्रथमपशौ क्रियेत तर्हि तदुपाकरणेन सह तन्नियोजनस्य विषमं व्यवधानं सिध्येत् । तदिदं प्रयोगविधिर्न सहेत । एवं षड्विधक्रमयुक्तं प्रयोगविधिमुपसंहरति—**तदेवमिति ।**

**अनुवाद**—( अंगों के ) साथ-साथ अनुष्ठित किये जाने वाले प्रधानों में यदि 'सन्नि-पत्योपकारक अङ्गों ( संनिपातिनामङ्गानाम् ) का आवृत्ति से अनुष्ठान करना हो तो द्वितीयादि पदार्थों का प्रथमानुष्ठित पदार्थ क्रम से जो क्रम स्वीकृत होता है उसे 'प्रवृत्ति क्रम' कहते हैं। यथा—'प्राजापत्य' नामक पशुयागों की अङ्गभूतक्रियाओं के ( क्रम का निश्चय प्रवृत्तिक्रम से होता है )। यथा—'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति ( वैश्वदेवी क्रिया का अनुष्ठान करने के अनन्तर प्राजापत्य पशुओं की क्रियाओं का अनुष्ठान करे ) इस वाक्य में 'प्राजापत्यैः'[1] इस तृतीया श्रुति से 'इतिकर्त्तव्यता' के साथ-साथ एक काल में अङ्ग एवं प्राजापत्य पशुओं का अनुष्ठान करना चाहिए, यह विहित है। अतः प्राजापत्य यागों का एवं उनके अङ्गों उदाहरण-नियोजनादि का अनुष्ठान साथ-साथ होना चाहिए [ साहित्यं संपाद्यम् ]। यह तभी सम्भव है जब समान देवता वाली पशुक्रियाओं का अनुष्ठान एक साथ हो [ युगपदनुष्ठान ]। प्राजापत्य पशुयाग की उपाकरण नियोजनादि क्रियाओं का एक साथ अनुष्ठान असम्भव है अतः साहित्य का सम्पादन [ सहानुष्ठान ] अव्यवहित रूप से एक के पश्चात् दूसरी अङ्ग क्रिया के अनुष्ठान द्वारा करना चाहिए। अर्थात् एक पशु का उपाकरण करके दूसरे पशु का अविलम्ब उपाकरण करने से बिना किसी व्यवधान के साथ-साथ अनुष्ठान हो सकता है। इसी प्रकार एक पशु का यूपबन्धन ( = नियोजन ) करके दूसरे का नियोजन करना चाहिए। ( अतः पद्धति यह है कि ) किसी पशु में प्रथम क्रिया के अनुष्ठान को आरम्भ करके अन्य सभी पशुओं में उसी प्रकार क्रम से क्रिया का अनुष्ठान करे, इसी को **'प्रवृत्तिक्रम'** कहते हैं। यह प्रवृत्तिक्रम श्रुत्यादि प्रमाणों से दुर्बल होता है।

## अर्थालोकलोचन

प्रवृत्तिक्रम का निरूपण करने में ग्रन्थकार प्रवृत्त हुआ है। याज्ञिकी प्रक्रिया में कभी-कभी एक कई प्रधान कार्यों का अनुष्ठान एक साथ करना पड़ता है। इन प्रधान कर्मों के साथ अनुष्ठेय अङ्ग भी विविध होते हैं जिन्हें भी साथ २ ही करना पड़ता है। परन्तु व्यवहारतः यह सम्भव नहीं है। ऐसी परिस्थिति में 'प्रवृत्तिक्रम' से यह निर्णय प्राप्त होता है कि अङ्गों का अनुष्ठान किस क्रम में किया जाय। पूर्व निरूपित 'तुल्यव्यवधान' सिद्धान्त की इस प्रसंग में भी उपादेयता असन्दिग्ध है। इस प्रसङ्ग में मेरे परमगुरु के निम्न वाक्य ध्यातव्य है—

**'यत्र बहूनां प्रधानानामेककालकर्त्तव्यता प्राप्ता, तत्र तदङ्गानामपि संनिपत्योपकारकाणां युगपदनुष्ठानं प्राप्तम्। तच्च अशक्यम् इति एकैकस्मिन् प्रधाने अङ्गावृत्त्यामवश्यं भाविन्यां तत्र यत्प्रधानमारभ्य येन क्रमेण प्राथमिकाङ्गानुष्ठानं कृतं तेनैव क्रमेण तदेव प्रधानमारभ्य द्वितीयाङ्गानुष्ठानमिति यः क्रमः स प्रवृत्तिक्रमः' ( सारविवेचिनी )**

स्पष्ट है कि 'प्रवृत्तिक्रम' पद में प्रवृत्ति शब्द इस बात का द्योतक है कि प्रथम अङ्ग को अनुष्ठान हेतु चुनने के लिये हम स्वतन्त्र हैं परन्तु तत्पश्चात् दूसरे अङ्गों का

१. प्रजापतिः देवता यस्य सः प्राजापत्यः, स एव पशुयागः।

उसी क्रम में अनुष्ठान करना होगा। इस निर्णीत मन्तव्य को दृष्टान्त द्वारा भिन्न प्रकार से समझा जा सकता है—

'वाजपेय याग' में **'सप्तदश प्राजापत्यान् पशून् आलभेत'** यह वाक्य उपलब्ध होता है इसके अनुसार प्रजापति देवता वाले १७ पशुओं का आलंभन होता है। यह मुख्य याग 'प्राजापत्य' है इसमें उपाकरण, नियोजनादि पशुधर्म 'सन्निपत्योपकारक' अङ्ग है। नियमतः इन दोनों का अनुष्ठान साथ होना चाहिए। यह बात **'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति'** इस विधायक वाक्य से मिलती है। समस्या यह है जितने भी पशु धर्म है उनका अनुष्ठान एक काल में हो नहीं सकता क्योंकि पशुओं की संख्या एवं अनुष्ठेय क्रियाएँ अधिक है। अतः प्रवृत्तिक्रम का आश्रय लेकर इस समस्या का समाधान किया जा सकता है अर्थात् एक पशु का उपाकरण करके दूसरे पशु का उपाकरण करने से अव्यवधानेन साहित्य हो सकता है। इसी प्रकार एक पशु का नियोजन करके दूसरे का नियोजन करना चाहिये। इस तरह एक पशु से आरम्भ कर सभी पशुओं (१७) में क्रमशः उपाकरण कर उसी क्रम से नियोजनादि करना चाहिए। इसी क्रम को प्रवृत्तिक्रम कहते हैं। यह प्रवृत्तिक्रम श्रुत्यादि क्रम से निर्बल होता है।

## अधिकारविधिलक्षणम्

कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकामः' इत्यादिरूपः। स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' इत्यादिनाऽग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवं 'अहरहः सन्ध्यामुपासीत' इत्यादिना शुचिविहितकालजीविनः संध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते।

तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः। अधिकारश्च स एव यद् विधिवाक्येषु पुरुषविशेषणत्वेन श्रूयते। यथा काम्ये कर्मणि फलकामना, नैमित्तिके कर्मणि निमित्तनिश्चयः, नित्ये संध्योपासनादौ शुचिविहितकालजीवित्वम्। अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य विदधतापि न स्वाराज्यमात्रकामस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किंतु राज्ञः सतः स्वाराज्यकामस्यैव, राजत्वस्याप्यधिकारिविशेषणत्वेन श्रवणात्।

किञ्चित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम्। यथाध्ययनविधिसिद्धा विद्या। क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेनाध्ययनविधि-

सिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता। अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः। एवं सामर्थ्यमपि 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः।

## अधिकारविधिः

प्रयोगविधिनिरूपणानन्तरं प्राप्तमधिकारविधिं लक्षयति—**कर्मेति**। कर्मणा दर्शपूर्णमासादिना जन्यमुत्पद्यमानं यत्फलं स्वर्गादि तत्स्वाम्यं बोधयति यः सोऽधिकारविधिरित्यर्थः। अधिकारः फलम् तत्सम्बन्धविधायको विधिरधिकारविधिरिति भावः। फलस्वाम्यमत्र कीदृशमभिप्रेतमित्यत्राह—**कर्मजन्येति**। भोक्तृत्वञ्च यागानुष्ठातुर्यजमानस्य। लक्ष्ये लक्षणसमन्वयं दर्शयति—**स्वर्गमुद्दिश्येति**। यद्यपि स्वर्गं कामयते यः सः स्वर्गकाम इति व्युत्पत्त्या स्वर्गकामशब्दः पुरुषमेवाभिधत्ते, न स्वर्गम् नापि स्वर्गस्योद्देश्यताम्, तथापि पुरुषस्य प्रयोजनमनुद्दिश्य प्रवृत्त्यनुदयात् विधिबलेन प्रवृत्तेः सामान्यपुरुषार्थभाव्यकत्वमवश्यमभ्युपगन्तव्यमिति तद्विशेषाकांक्षायां स्वर्गकामपदेन फलविशेषापेक्षिणः पुरुषस्य शेषित्वबोधनात् विशेष्यस्य कर्तुराख्यातादेव प्राप्तत्वात् विशेषणभूतस्वर्गादिमात्रपरं स्वर्गकामपदम्। अर्थात् स्वर्गकामपदस्य स्वर्गे लक्षणामङ्गीकृत्यैवमभिहितम्। तथा च 'यजेत स्वर्गकामः' इत्यत्र स्वर्गं भावयेत् इति बोधे जाते भावार्थाधिकरणन्यायेन धात्वर्थस्य यागस्य करणत्वेनान्वयः—यागेन स्वर्गं भावयेदिति सम्पद्यते। ननु यत्र फलश्रवणं तत्र पुरुषस्याधिकारस्सिध्यति। यत्र च तादृशं फलं न श्रूयते नापि कल्पयितुं शक्यते यथा नित्येषु नैमित्तिकेषु च कर्मसु तत्र पुंसः कथमधिकार इत्यत आह—**यस्येति**। आहितः आधानसंस्कारेण संस्कृतोऽग्निर्येन स आहिताग्निः। तस्याग्निः यदि स्वगृहान् दहेत् तर्हि सः अष्टाकपालद्रव्यकम् क्षामवद्गुणकाग्निदेवताकं यागं कुर्यादित्यर्थः। गृहदाहं निमित्तीकृत्य प्रवृत्तेयमिष्टिः। अत्र फलश्रवणाभावेऽपि पुरुषप्रवृत्तिसिद्धये किञ्चिदवश्यं फलं कल्पनीयमेव। किं फलं कल्प्यताम्? 'धर्मेण पापमपनुदति' इति वाक्यशेषात् पापक्षय एव कल्प्यते। ननु निमित्तमेकमुद्देश्यम् अपरञ्च पापक्षयरूपमित्युद्देश्यानेकत्वे वाक्यभेदस्स्यादिति चेन्न; उद्देश्यद्वयेन सह विधेयसम्बन्ध एव वाक्यभेदात्। अत्र च कर्मणः फलेन सम्बन्धः, तत्कर्तव्यतायाश्च निमित्तेन सम्बन्ध इति न वाक्यभेदः। निमित्तन्तु कर्म कारयति, विधेयं कर्म च फलं साधयतीति भावः। नैमित्तिककर्मणि निमित्तवतः फलस्वाम्यं प्रतिपाद्य नित्ये कर्मणि तत्प्रतिपादयति—**एवमिति**। **शुचीति**। शुचिर्भूत्वा विहितकाल-

मवलम्ब्य यो जीवति सः शुचिविहितकालजीवी तस्येत्यर्थः। इदमत्र तात्पर्यम्—'अहरहस्सन्ध्यामुपासीत' इत्यत्राहरहश्शब्दोऽहोरात्रवाची। न हि कश्चिदहोरात्रं सन्ध्यामाचरन् स्थातुमर्हति, जीवनधारणानुपपत्तेः। अतः अह्नि प्रातस्सायमिति संकोचः कर्तव्यः—प्रातस्सायं कालावच्छिन्नेऽह्नीति। प्रातःकालावच्छिन्नेऽह्नि सायंकालावच्छिन्नेऽह्नि च सन्ध्यामाचरेदिति। तत्र तस्य शौचमप्यावश्यकम्। एवञ्च शौचविशिष्टस्सन् विहितं कालं प्रतीक्ष्य जीवति यः तादृशस्य फलस्वाम्यं विधिर्बोधयतीति।

नन्वधिकारविधिः कर्मजन्यफलभोक्तृत्वमात्रं प्रतिपादयतीत्यनुपपन्नम्, राजसूययागजन्यफलभोक्तृत्वं ब्राह्मणवैश्ययोरपि स्यात्। एवं बृहस्पतिसवजन्यफलभोक्तृत्वं राजन्यवैश्ययोरपि स्यात् इत्यत आह—**तच्चेति। अत एव** पुरुषविशेषणत्वेन श्रुतस्याधिकारिविशेषणत्वादेव। राजसूये स्वाराज्यकाममात्रस्य न कर्मजन्यफलभोक्तृत्वम्, किन्तु राज्ञस्सतः। राजा च क्षत्रियः। क्षत्रियस्य सतः स्वाराज्यकामस्य राजसूयेऽधिकार इत्यर्थः। तदाह—**राजत्वस्यापीति।** तेन ब्राह्मणवैश्ययोर्व्यावृत्तिरिति भावः। नन्वेवं चतुर्थवर्णस्याप्यधिकारस्स्यात् स्वर्गादिफलकामनायास्तस्यापि सम्भवादित्यत आह—**किञ्चिदिति।** स्वर्गकामः राजेत्यादिवत्पुरुषविशेषत्वेनाश्रुतमप्यधिकारिविशेषणमित्यर्थः। **विद्यापदेन** निष्कृष्टवेदवाक्यार्थज्ञानं विवक्षितम्। तच्चार्थज्ञानमध्ययनविधिसिद्धमावश्यकमित्याह—**अध्ययनेति। क्रतुविधीनामिति।** आधानानन्तरमनुष्ठानाय प्रवृत्तानां 'दर्शपूर्णमासाभ्यां यजेत' 'ज्योतिष्टोमेन यजेत' इत्यादिविधीनामित्यर्थः। ऋतुविधयो हि तत्तत्फलप्राप्तये पुरुषं क्रतुषु प्रवर्तयन्तः स्वविषयानुष्ठानाय तद्विषयकं ज्ञानमपेक्षमाणा अध्ययनविधिमाश्रयन्ते। अध्ययनविधिश्चार्थज्ञानायाध्ययनं विदधानः, अधीतविद्याया उपयोगाय क्रतुविधीनपेक्षत इत्युभयोस्सम्बन्धे सति अध्ययनविधिसिद्धार्थज्ञानवान् दर्शपूर्णमासादिकमाचरेदित्यर्थः पर्यवस्यतीति भावः। उत्तरक्रतुविधिभिर्विहितानि कर्माणि सर्वाण्यग्निसाध्यानि भवन्ति। तत्र तेषामग्न्यपेक्षायामाह—**आधानेति।** एवञ्चोत्तरक्रतुविधीनामग्निमद्विद्यावद्विषयकत्वं सिध्यति। एतेन चतुर्थवर्णस्याधिकारः प्रत्युक्तो भवति, तस्याध्ययनविधिसिद्धविद्याया आधानविधिसिद्धाग्नेश्चाभावात्। अध्ययनञ्च 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिविधिविहितोपनयनसंस्कारसंस्कृतं प्रत्येव प्रवर्तते। एवम् 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधिसिद्धाधानसंस्कारसिद्धाग्निमन्तं प्रत्येवोत्तरक्रतुविधयः प्रवर्तन्ते। तथा च चतुर्थवर्णस्योपनयनाभावेनाध्ययनविधिसिद्धविद्याभावः

एवमाधानविधिसिद्धाग्नीनाञ्चाभाव इति क्रतुषु नाधिकारः। तृतीयं विशेषणं दर्शयति—**एवमिति**। सामर्थ्यमप्यधिकारिविशेषणमित्यनुषङ्गः। अत्र वृद्ध-संमतिमाह—**आख्यातानामिति**। शक्तिः सामर्थ्यम्। विद्याया अग्नेश्च सत्वेऽपि सामर्थ्यं यदि न स्यात्तर्हि तं प्रति विधयो न प्रवर्तन्ते। प्रथमोपक्रान्तं विधि-निरूपणमुपसंहरति—**तदेवमिति**।

**अनुवाद**—यागादि कर्मजन्य स्वर्गादि फल के स्वामित्व अर्थात् अधिकारी बोधक विधि को 'अधिकारविधि' कहते हैं। कर्मजन्य फलभोग ( भोक्तृत्व ) को ही कर्मजन्यफलस्वामित्व कहते हैं। यह अधिकारविधि 'यजेत स्वर्गकामः' आदि वाक्य रूप होती है। यह विधि स्वर्ग को उद्देश्य करके याग का विधान करती हुई स्वर्गकाम पुरुष को यागजन्य स्वर्ग रूप फल का अधिकारी बनाती है। 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्' ( अर्थात् जिस आहिताग्नि ( = अग्न्याधान करनेवाला ) का घर अग्नि से जल जाय वह खिन्नता ( = क्षाम ) गुणविशिष्ट अग्नि को अष्टाकपाल पुरोडाश से निर्वपन करे। इस विधि से यह बोध होता है इस प्रकार पुरोडाश निर्वाप करने से, अग्न्याधान कर चुके हुये व्यक्ति को तथा जिसका घर जल गया हो ऐसे व्यक्ति को पापक्षय रूपी फल मिल जाता है। इसी प्रकार 'अहरहः सन्ध्यामुपासीत' ( अर्थात् प्रतिदिन सन्ध्योपासना करे ) यह विधि पवित्रता पूर्वक जीवन व्यतीत करने वाले व्यक्ति को सन्ध्योपासनजन्यप्रत्यवायपरिहाररूप ( कर्त्तव्याननुष्ठान रूप दोष का नाश ) फल का अधिकारी बोधित करती है।

जो पुरुष अधिकार विशिष्ट है वही फल का स्वामी अर्थात् अधिकारी हो सकता है। जो विधि वाक्यों में कर्त्ता व्यक्ति के विशेषण रूप में जाना जाय अर्थात् सुना जाय उसी को अधिकार कहते हैं। जैसे—काम्यकर्म में स्वर्गादिरूप फ़ल की कामना, नैमित्तिक कर्म में अग्निदाहादि रूप निमित्त निश्चय एवं नित्य सन्ध्योपासनादि कर्म में पवित्रता-पूर्वक जीवन यापन करना ( —ये सब कर्त्ता व्यक्ति के विशेषरूप में प्रयुक्त है )। अतएव 'राजा राजसूयेन स्वाराज्यकामो यजेत' ( स्वराज्य चाहने वाला राजा राजसूय याग करे ) यह विधिवाक्य स्वाराज्य को उद्देश्य करके याग का विधान करता हुआ भी केवल स्वाराज्यकामी व्यक्ति को राजसूय याग के फल का अधिकारी नहीं प्रतिपादित करता अपितु राजा होते हुये स्वाराज्यकामी पुरुष को ही तज्जन्य फल का अधिकारी मानता है क्योंकि 'राजत्व' ( क्षत्रियत्वविशिष्ट पुरुष ) अधिकारी पुरुष के विशेषण रूप में सुना गया है। कहीं-कहीं पर विधिवाक्य में पुरुष के विशेषण रूप से सुने गये न रहने पर भी, वह अधिकारी का विशेषण होता है। जैसे 'स्वाध्यायोऽध्येतव्यः' इस अध्ययनविधि से विद्या का विधि में श्रवण न रहने पर भी विद्या अधिकारी का विशेषण होती है। क्योंकि याज्ञिक विधियों में अर्थज्ञान की अपेक्षा होती है अतः अध्ययन द्वारा अर्थज्ञानवान् को ही उद्देश्य करके क्रतु विधियों की प्रवृत्ति होती है। इसी तरह अग्निसाध्य कर्म में स्थापन से ( अग्न्याधान से ) प्राप्त अग्नि वाले पुरुष का ही अधिकार है। इस प्रकार अग्निसाध्यकर्मों में अग्नि की अपेक्षा रहने से अग्निसाध्यविधि

की प्रवृत्ति आधान सिद्ध अग्निवालों के लिये होगी। इसी प्रकार भिन्न-भिन्न क्रियाओं के अनुष्ठान का सामर्थ्य भी 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' (अर्थात् आख्यात जब अर्थ का बोध कराते हैं तब पुरुषगत सामर्थ्य भी अर्थबोध में सहायक होते हैं) इस न्याय से भिन्न-भिन्न काल में अनुष्ठेय कर्म के लिये पुरुष का विशेषण स्वीकार किया जाना चाहिए। इस प्रकार विधि का निरूपण समाप्त हुआ।

## अर्थालोकलोचन

प्रयोगविधि के निरूपण के अनन्तर क्रम प्राप्त अधिकार विधि का स्वरूप 'कर्मजन्य फलस्वाम्यबोधको विधिः अधिकारविधिः' इत्यादि वाक्यों द्वारा प्रतिपादित किया जा रहा है। अनुष्ठेय कर्मों के क्रमादि की निरूपण विवेचना के बाद यह स्वाभाविकी जिज्ञासा होती हैं इन कर्मों के अनुष्ठान का अधिकारी कौन है? इसका समाधान महर्षि जैमिनि ने मीमांसादर्शन के षष्ठाध्याय में अधिकारविधि की आलोचना करके दिया है। कुछ विचारकों ने प्रयोगविधि निरूपण के पूर्व ही अधिकारविधि सम्बन्धी चर्चा की है। यह संगत नहीं है। क्योंकि क्रमविशिष्ट अनुष्ठेय पदार्थ के ज्ञान के अनन्तर ही अधिकारी की जिज्ञासा होती है। अतएव न्यायरत्नमाला में कहा है :—

**निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम्।**
**यस्यां निरूपितायां तु तदधीनाऽधिकारधीः॥ इति।**

अतः अधिकारविधि द्वारा विशेषतया 'अधिकार' का बोध होता है। यहाँ अधिकार से तात्पर्य 'फल' का है अतः फलसम्बन्धी विधि ही अधिकार विधि होती है फल का भोक्ता यजमान अर्थात् याग अनुष्ठान कर्त्ता ही होता है। प्रत्येक याग के अनुष्ठान की क्षमता सब में नहीं होती है। अनुष्ठान में प्रवृत्ति सामर्थ्य से उत्पन्न होती है। अतः शास्त्रकारों ने यह स्पष्टतः निरूपित किया है कि याग विशेष का अनुष्ठान उपयुक्त विशेषणों से युक्त पुरुष ही कर सकता है यागजन्य फल का भोक्ता अधिकारी ही हो सकता है। 'यजेत स्वर्गकामः' इस विधिवाक्य से 'यागेन स्वर्गं भावयेत्' यह बोध होता है। यहाँ स्वर्ग रूपी फल के श्रवणमात्र से पुरुष का अधिकार सिद्ध होता है। परन्तु जहाँ 'फल' का श्रवण नहीं है, तथा फल की कल्पना भी नहीं की जा सकती ऐसे नित्य, नैमित्तिक कर्मों में पुरुष का अधिकार कैसे होगा? इस शङ्का का समाधान "यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते..........प्रतिपाद्यते' इत्यादि वाक्य से किया है। भाव यह है कि—इस विधि-वाक्य द्वारा निर्वाप का अधिकार उस आहिताग्नि (व्यक्ति) को है जिसका गृह अग्नि ने जला दिया हो। यहाँ 'गृहदाह' निमित्तकारण है एवं 'आहिताग्नित्व' अधिकारी का विशेषण है। गृहदाह वस्तुतः पाप का सूचक है जो पुरोडाश निर्वाप (याग) द्वारा नष्ट हो जाता है अतः यजनकर्त्ता **'निर्वापजन्यपापक्षयरूप फल'** का अधिकारी हो जाता है। **'अहरहः सन्ध्यामुपासीत'** नित्यकर्म में अधिकार विधिका उदाहरण है। सन्ध्योपा-सनादि नित्य कर्मों के अननुष्ठान से प्रत्यवाय होता है परन्तु शास्त्र विहित कर्मों का अनुष्ठान करते हुये शुचिता पूर्ण जीवन व्यतीत करने वाला व्यक्ति अनुष्ठान का फल अवश्य पाता है अतः नित्य नैमित्तिक कर्मों में फलश्रवण नहीं है यह शङ्का निर्मूल है।

ग्रन्थकार ने कहा है कि जो व्यक्ति अधिकार विशिष्ट होता है वही कर्मानुष्ठानजन्य फल का भोक्ता होता है। अधिकारी पुरुष के विशेषण को ही अधिकार कहते हैं। **'यजेत स्वर्गकामः'** में स्वर्ग रूपी फल की कामना करने वाला पुरुष ही अधिकारी है। और स्वर्गकामना अधिकार है। कर्मानुष्ठानजन्य जितने भी विशेषताओं की अपेक्षा होती है यजनकर्त्ता पुरुष में उन सबका होना आवश्यक है। अतएव **'राजा राजसूयेन स्वाराज्यकामो यजेत'** इस वाक्य में विशेषण रूप से दो पद 'राजा'[1] एवं 'स्वाराज्यकामः' प्रयुक्त है। राजसूययाग करने का अधिकारी वही हो सकता है जो स्वाराज्यकामी होने के साथ साथ क्षत्रियत्व गुण सम्पन्न भी हो। अतः राजसूय याग में ब्राह्मण एवं क्षत्रिय का अधिकार नहीं है।

अब तक हमने 'काम्य, नैमित्तिक एवं नित्य कर्मों के अनुष्ठान की योग्यता रूप में क्रमशः 'फल कामना, निमित्त-निश्चय एवं शुचिविहितकालजीवित्व' के सम्बन्ध से विचार प्रस्तुत किया। इन का निर्देश क्रमशः यजेत स्वर्गकामः, यस्या.........दहेत् एवं 'अहरह.........'इत्यादि वाक्यों में किया गया है कि इन वाक्यों में अनुष्ठान की योग्यता साक्षात् श्रुत हैं। परन्तु कुछ ऐसे भी वाक्य हैं जिनमें यह 'अश्रुत' रहती है अर्थात् स्पष्ट निर्देश नहीं रहता। जैसे क्रतुविधायक विधियों में 'स्वाध्यायोऽध्येतव्यः' इस अध्ययनविधि द्वारा विहित विद्या को अधिकारी पुरुष का विशेषण माना जाता है यद्यपि यह 'श्रुत' नहीं है। क्रतु का अधिकार उसी को है जिसने अर्थज्ञानपूर्वक वेदाध्ययन किया हो। अतः क्रतुविधियों की प्रवृति भी स्वभावतः ऐसे पुरुष के प्रति होती है जिसने विधिवत् वेदाध्ययन किया हो। वेदाध्ययन के पूर्व त्रैवर्णिकों के उपनयन का विधान 'अष्टवर्ष ब्राह्मणमुपनयीत। एकादशवर्ष राजन्यम्। द्वादशवर्ष वैश्यम्।' तथा 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यम् शरदि वैश्यम्' आदि वाक्यों से किया गया है। अतः सम्प्रदाय की मान्यतानुसार उपनयन, एवं वेदाध्ययन एवं यज्ञ का अधिकार केवल त्रैवर्णिकों अर्थात् ब्राह्मण, क्षत्रिय एवं वैश्यों को है। ( द्रष्टव्य—अर्थालोक )

इस प्रसङ्ग में यह भी स्पष्टतया कहा गया है कि अग्न्याधान से जिसने अग्नि का लाभ किया है वह व्यक्ति ही अग्निसाध्य कर्म में अधिकारी हो सकता है अन्य व्यक्ति नहीं। अत एव ग्रन्थकार ने कहा है—'एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमात्ता'। निष्कर्ष यह है कि अग्निसाध्य कर्मों की प्रवृत्ति ऐसे व्यक्ति के प्रति होगी जो शास्त्रोक्त विधि से आहिताग्नि बना हो।

उपरिलिखित विशेषणों के अतिरिक्त यज्ञ कर्म का अनुष्ठान करने के सामर्थ्य को भी विशेषण माना जाता है। जिस व्यक्ति में इन्द्रियादि अपाटव होगा वह यज्ञ का अधिकारी

---

१. ( क ) 'अत्र राजपदं क्षत्रियमात्रवाचकम्। एवञ्च नेतरयोरत्र प्राप्तिः।'

—सारविवेचिनी, पृ० १०३.

( ख ) 'अत्र हि राजशब्देन क्षत्रिय एवोच्यते न तु राजसम्बन्धमात्रेण तदन्योऽपि तेन क्षत्रियस्यैव राजसूयेऽधिकारो न तु तदन्यस्य ब्राह्मणा देरित्यन्यत्र विस्तर इति भावः।' —कौमुदी, पृ० १४३.

नहीं हो सकता। क्योंकि 'चक्षुषा काणः' आज्यावेक्षण में अशक्त होगा 'कर्णेन बधिरः' होता के आदेश को सुन न सकेगा। 'पादेन खञ्जः' अभिक्रमण नहीं कर पायेगा। इस तरह अन्य प्रकार के इन्द्रिय वैकल्य प्रतिबन्धक होंगे। अतः शारीरिक क्षमता हीन को भी यज्ञ का अधिकार नहीं है।

यह सिद्धान्त 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'[1] इस न्याय पर आधारित है जिसमें समर्थ अधिकारी को उद्देश्य करके विधि की प्रवृत्ति मानी गई है।

## मंत्रविचारः

प्रयोगसमवेतार्थस्मारका मन्त्राः। तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थम्, संभवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्यत्वात्। न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानं व्यर्थमिति वाच्यम्। मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात्।

## अर्थालोकः

विधिभागस्य साङ्गोपाङ्गस्य प्रयोजनवदर्थविधायकत्वेन प्रयोजनवत्त्वमुपपाद्य विधिमन्त्रनामधेयनिषेधार्थवादात्मना विभक्ते वेदे द्वितीयस्य मन्त्रभागस्य प्रयोजनवदर्थवत्त्वं निरूपयितुमुपक्रमते—**प्रयोगेति**। प्रयोगोऽनुष्ठानम् तत्र समवेतास्सम्बद्धा अर्था द्रव्यदेवतादयः तेषां ये स्मारकास्ते मन्त्रा इत्यर्थः। प्रयोगसमवेतार्थस्मारकत्वं मन्त्राणां लक्षणं सम्पन्नम्। कर्मणामनुष्ठानं स्मरणपूर्वकमेव विहितम्, तत्र स्मारकापेक्षायां स्मृतिजनकत्वेन मन्त्राणामेवोपयोगस्समुचित इति भावः। यथा विधीनां विधायकतयार्थवत्त्वं तथा मन्त्राणां स्मारकतयार्थवत्त्वमित्याह—**तादृशार्थेति**। कर्मसमवेतार्थेत्यर्थः। ननु क्वचिन्मन्त्रेषु प्रयोगसमवेतार्थस्मारकत्वे सत्यपि बहुषु मन्त्रेषु तदसमवेतार्थाभिधायित्वमप्यस्ति। यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यत्र कर्मसमवेताग्निदेवताप्रकाशकत्वे विद्यमानेऽपि सवित्रश्विपूष्णां

---

1. 'The general meaning of the maxim is that when verbs (Ākhyātam) lay down certain things, it is presumed that they are laid down for those who are able to perform them. Thus, this ability (Śakti) to perform the things enjoined is the helpmate (Sahakarṇī) of verbs in all injunctions. Consequently, ability is regarded as an unmentioned qualification of the performer in the case of all rites.'—Gajendragadkar A. B.—Artha Samgraha English Notes page 209.

कर्मासमवेतानां प्रकाशकत्वमपि वर्तते। तत्प्रकाशनञ्च व्यर्थम्। अतश्चैतेषां प्रकाशनमदृष्टार्थमेवेति स्वीकर्तव्यम्। एक एव मन्त्रोऽदृष्टार्थाय प्रयुज्यते दृष्टार्थायापि इति वैरूप्यं न समुचितम्। अतस्सर्वेषामेव मन्त्राणामदृष्टार्थत्वमेव कुतो न स्वीक्रियत इत्यत्राह—**न त्विति। तदुच्चारणं** मन्त्रोच्चारणम्। असम्भवे हेतुः—**दृष्टेति**। दृष्टफलकत्वे सम्भवतीति शेषः। ननु कर्मसमवेताग्निविषये देवतास्मारकत्वरूपं दृष्टं फलमस्तु, किन्तु मन्त्रगतसवित्रश्विपूषदेवतानां कर्मासमवेतत्वात्कथं तद्विषये मन्त्रस्य दृष्टफलकत्वमिति चेन्न; तासां देवतानां प्रकृतकर्मसम्बन्धाभावेऽपि कर्मान्तरेषु सम्बन्धस्य सत्त्वात् तदादाय प्रकृते—अहमध्वर्युरग्नये जुष्टं निर्वपामि न केवलं मद्धस्ताभ्यां बाहुभ्याञ्च, किन्तु अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति स्वबाह्वोर्हस्तयोश्च तत्तद्देवतासम्बन्धित्वस्य बोधनात् तदंशेऽपि दृष्टार्थत्वं वक्तुं शक्यत्वात्। येषाञ्च सर्वथार्थाभिधायकत्वं नास्ति 'हुँ फट्' इत्यादीनां तेषामदृष्टार्थत्वं कतिपयानां भवतु, न सर्वेषाम्। ननु द्वादशे चतुर्थस्य प्रथमाधिकरणे जपस्तुत्याशीरभिधानमन्त्राणामदृष्टार्थत्वं व्यवस्थापितमिति चेन्न; एतेष्वपि मन्त्रेष्वर्थप्रकाशनस्य दृष्टार्थत्वात्। प्रकाशनं परमदृष्टार्थमित्यन्यदेतत्। ननु मन्त्राणां यद्यर्थस्मरणमेव प्रयोजनम् तर्हि तत्प्रकारान्तरेण ध्यानेन पुरोहितवचनेन वा सम्पाद्यताम् किं मन्त्रोच्चारणेनेत्याशङ्क्याह—**न चेति। नियमेति**। नियमविध्याश्रयणे नियमादृष्टं कल्पनीयमेव तथापि मन्त्रोच्चारणस्यार्थप्रकाशनार्थत्वं नापैतीति भावः।

**अनुवाद**—अनुष्ठान ( प्रयोग ) से सम्बद्ध ( समवेत ) द्रव्य देवतादि ( अर्थ ) का जो स्मरण कराते हैं उन्हें मन्त्र कहते हैं। प्रयोग समवेत अर्थ का स्मरण कराना ही मन्त्र का प्रयोजन है। परन्तु उनके उच्चारण का अदृष्ट प्रयोजन नहीं हैं क्योंकि दृष्ट फल की सम्भावना के विद्यमान रहने पर अदृष्ट फल की कल्पना अनुचित है। अर्थस्मरणरूप दृष्ट फल प्रकारान्तर [ अर्थात् ब्राह्मण वाक्यों ) से भी प्राप्त है अतः मन्त्रोच्चारण व्यर्थ है—इस प्रकार की शङ्का नहीं करनी चाहिए। 'मन्त्रों से ही अर्थ का स्मरण करे' इस नियमविधि का आश्रय लेने से मन्त्रोच्चारण व्यर्थ नहीं होगा।

## अर्थालोकलोचन

साङ्गोपङ्ग विधि भाग की प्रयोजनीयता विधायक रूप में प्रतिपादित करके 'विधिमन्त्रनामधेयनिषेधार्थवाद'' रूप में पञ्चधा विभक्त वेद के द्वितीय भाग मन्त्र की मीमांसा करने में ग्रन्थकार प्रवृत्त हुआ है। मन्त्र का लक्षण है—**'प्रयोगसमवेतार्थस्मारकाः मन्त्राः'** तत्तत् कर्मानुष्ठान काल में अनुष्ठेय क्रिया एवं तदङ्गभूत द्रव्य देवतादि का प्रकाशन मन्त्रद्वारा ही होता है अतः मन्त्र का प्रयोजन स्वतः सिद्ध है। **'स्मृत्वा कर्माणि कुर्वीत'** इस विधायक वाक्य द्वारा भिन्न-भिन्न कर्मों के अनुष्ठानकाल में 'स्मरण' विहित है। यह स्मरण यद्यपि उपायान्तर से भी हो सकता है तथापि उपायान्तर के अवलम्बन से

तत्तत् प्रकरणों में पठित मन्त्र व्यर्थ हो जायेंगे अतः 'मन्त्रैरेव स्मृत्वा कर्माणि कुर्यादिति [ मन्त्रों से ही स्मरण करके कर्म करना चाहिए ] यह नियमविधि द्वारा स्वीकार किया जाता है। इस प्रकार विधि का प्रयोजन जिस तरह विधायकत्व में है उस तरह मन्त्र का प्रयोजन 'स्मारकत्व' में है।

यहाँ शङ्का यह होती है—यद्यपि मन्त्र मुख्यतः प्रयोगस्मारकत्व प्रयोजन की सिद्धि करते हैं तथापि कहीं-कहीं 'प्रयोग समवेतत्व' नहीं मिलता। यथा—**'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि'** इस मन्त्र में 'कर्म समवेत' अग्नि देवता की प्रकाशकता रहते हुए भी 'सविता' एवं 'पूषन्' के लिये प्रयोगसमवेत नहीं है जब कि 'प्रकाशकत्व' इनमें भी है। अतः इनका प्रयोजन अदृष्टार्थक ही मानना चाहिए क्योंकि मन्त्र के एकांश से दृष्ट प्रयोजन और तद्भिन्नांश से अदृष्ट प्रयोजन की सिद्धि हो, यह विरूपता ठीक नहीं है। अतः सभी मन्त्रों को अदृष्टार्थक ही मानना चाहिए। परन्तु यह पक्ष ठीक नहीं है क्योंकि दृष्टफल के साक्षात् उपलब्ध होने पर अदृष्टफल की कल्पना उचित नहीं है। यहाँ मन्त्रोच्चारण का दृष्टफल 'स्मरणात्मक' रूप है। अतः पुण्योत्पत्तिरूप अदृष्टफल मानना तर्कसंगत नहीं है। [ द्रष्टव्य—अर्थालोक टीका ]

पूर्वपक्ष द्वारा यह संशय किया जा सकता है कि यदि मन्त्र का प्रयोजन 'प्रयोग स्मारकत्व' ही है तो यह स्मरणरूप व्यापार अन्य प्रकार से भी अर्थात् ब्राह्मणवाक्यों द्वारा भी किया जा सकता है। मन्त्र को अदृष्टार्थक ही रहने दिया जाय। परन्तु यह कथन भी युक्तिसंगत नहीं है क्योंकि 'मन्त्रैरेव स्मर्त्तव्यम्' ( मन्त्रेणैवानुस्मरणीयम् ) इस नियमविधि द्वारा मन्त्रों से ही प्रयोग स्मरण उचित है। [द्रष्टव्य—जैमिनिसूत्र १।२।३१-५३ मन्त्रालिङ्गाधिकरण पर शाबरभाष्य ]

## नियमविधिविचारः

नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः। यथाहुः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ इति।

अस्यार्थः—प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः, यथा 'यजेत स्वर्गकामः' इत्यादिः। स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात्।

पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः। यथा 'व्रीहीनवहन्ति' इत्यादिः। कथमस्य पक्षेऽप्राप्तप्रापकत्वमिति चेत्, इत्थम्-अनेन ह्यवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यतेऽन्वयव्यतिरेकसिद्धत्वात्, किन्तु नियमः। स चाप्राप्तांशपूरणम्। वैतुष्यस्य नानोपायसाध्यत्वाद् यदा अवघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते, तदावघातस्याप्राप्त-

त्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्तावघातस्य विधानमिति यावत्।

## अर्थालोकः

ननु को नाम नियमविधिः? विधिभागनिरूपणावसरे न नियमविधेरुल्लेखः कृत इति चेन्न; तत्र प्रसङ्गाभावात्। सम्प्रति प्रसङ्ग आपतित इति प्रथमं नियमविधिं लक्षयति—**नानेति**। नानासाधनानि यस्यास्सा तादृशी या साध्यक्रिया सा नानासाधनसाधनक्रिया तस्याम् एकस्य साधनस्य प्राप्तदशायां यदप्राप्तं साधनान्तरं तस्य प्रापको विधिरित्यर्थः। द्वयोर्बहूनां वा साधनानामेकस्मिन् कार्ये विकल्पेन प्राप्तौ तत्रैकस्य साधनस्य प्राप्तिदशायां यस्य साधनान्तरस्याप्राप्तिस्तत्पूरको विधिर्नियमविधिरिति भावः। अत्र विधित्रयनिरूपणाय प्रवृत्तं वार्तिकं प्रमाणयति—**विधिरिति**। प्रथमः पादोऽपूर्वविधेः, द्वितीयश्च नियमविधेः, उत्तरार्द्धश्च परिसंख्याविधेः परिचायकाः। तत्र प्रथमपादार्थं विवृणोति—**प्रमाणेति**। एतद्विध्यप्रवृत्तिदशायामिति पूरणीयम्। प्रमाणान्तरेणात्यन्तमप्राप्तमर्थं यः प्रापयति सोऽप्राप्तप्रापकत्वादपूर्वविधिरित्यर्थः। उदाहरणे घटयति—**स्वर्गार्थकेति**। स्वर्ग एवार्थः प्रयोजनं यस्य सः स्वर्गार्थको यागः तस्य। एतद्वाक्याप्रवृत्तिदशायां स्वर्गफलजनकत्वं यागस्य प्रमाणान्तरेण न विदितम्, अनेनैव तद्विधानात्समन्वय इत्यर्थः। द्वितीयपादविवरणम्—पक्ष इति। पाक्षिकाप्राप्तप्रापकत्वं नियमविधित्वमित्यर्थः। अप्राप्तिपक्षं नियमयतीति नियमविधिरिति भावः। अत्रोदाहरति—**व्रीहीनिति**। अप्राप्तिप्रापकत्वमुपपादयति—**इत्थमित्यादिना**। **अनेन** व्रीहीनवहन्तीति विधिना। अवहननस्य तुषनिष्कासनार्थत्वं लोकत एव गम्यमित्याह—**अन्वयेति**। साधनान्तराभावसहकृतावघातसत्वे वैतुष्यसत्त्वम्, तादृशावघाताभावे वैतुष्याभाव इत्यर्थः। नियमशरीरमाह—**अप्राप्तेति**। तुषविमोकाय यदा नखविदलनं साधनं परिगृह्णाति तदावहननस्य या अप्राप्तिः तत्प्राप्तिसम्पादनमयं विधिः करोतीत्यर्थः। एतेनापूर्वविधितो नियमविधेर्भेदोऽभिहितः। अपूर्वविधौ सर्वथाप्राप्तप्रापकत्वं विधेः, नियमविधौ तु पाक्षिकाप्राप्तांशपूरकत्वमिति द्वयोर्भेद इति भावः। तदिदं विशदयति–वैतुष्यस्येत्यादिना। उपपादितमर्थमुपसंहरति—अतश्चेति।

**अनुवाद**—( जहां पर ) नाना साधनों से क्रिया की सिद्धि सम्भव हो उनमें एक साधन के प्राप्त रहने पर अप्राप्त दूसरे साधनों की प्राप्ति करानेवाली ( प्रापक ) विधि को नियमविधि कहते हैं। जैसा कि तन्त्रवार्त्तिककार कुमारिल भट्ट ने कहा है—'अत्यन्त

अप्राप्त पदार्थ का विधान करनेवाली विधि को **'अपूर्वविधि'**, पदार्थ की पाक्षिक अप्राप्ति होने पर उसका विधान करनेवाले वाक्य को **'नियमविधि'** तथा जहां दोनों पदार्थों की एक ही काल में प्राप्ति हो, वहां दोनों में से एक पदार्थ की निवृत्ति करानेवाली विधि को **'परिसंख्या विधि'** कहते हैं। यथा 'यजेत स्वर्गकामः' इस वाक्य में प्रमाणान्तर से स्वर्ग प्राप्ति हेतु अप्राप्तयाग का विधान किया गया है अतः यह 'अपूर्वविधि' है।

पक्ष में अप्राप्त पदार्थ को प्राप्ति का विधान करनेवाली विधि को 'नियमविधि' कहते हैं। जैसे 'व्रीहीनवहन्ति' इस विधिवाक्य से तुषविमोक हेतु अवघात का विधान नहीं है क्योंकि यह 'अन्वय व्यतिरेक' से सिद्ध है अर्थात् व्रीहि का अवघातादि किये जाने पर तुषविमोक होगा अन्यथा नहीं होगा। किन्तु नियमविधि होने से अवघात द्वारा ही होगा। किन्तु नियमविधि होने से अवघात द्वारा ही तुषविमोक करना चाहिए ( यह अभिप्रेतार्थ है )। यह विधान अप्राप्तांश का पूरक है क्योंकि अवघात एवं नख-विदलनादि कई प्रकार से वैतुष्य हो सकता है। उनमें जब अवघात का परित्याग करके नखविदलन से ही तुष विमोक किया जाने लगता है तब अवघात 'अप्राप्त' हो जाता है ( अतः इस परिस्थिति में ) नियम विधि अप्राप्त अवघात का विधान करके अप्राप्त अंश की पूर्त्ति करती है। अर्थात् नियमविधि से पक्ष में अप्राप्त अवघात का विधान होता है।

## अर्थालोकलोचन

विधिभाग के निरूपणावसर पर प्रसङ्ग के अभाव में नियमविधि का उल्लेख नहीं दिया गया है। सम्प्रति प्रसङ्ग प्राप्त होने पर 'नियमविधि' का प्रकरण प्रारम्भ किया जा रहा है। लौगाक्षिभास्कर ने विषयावबोध की दृष्टि से कुमारिलभट्ट कृत तन्त्रवार्त्तिक ( १।२।१४ ) से एक कारिका उद्धृत की है जिसमें अपूर्वविधि, नियमविधि एवं परिसंख्या-विधि का लक्षण उल्लिखित है। 'प्रमाणान्तर' से अत्यन्त अप्राप्त अर्थ को जो प्राप्त करा देती है उसे अपूर्वविधि कहते हैं। इसी को भट्ट पाद ने 'अत्यन्तमप्राप्ते विधिः' कहा है एवं अर्थसंग्रहकार ने विशदार्थ करके **'प्रमाणान्तरेण अप्राप्तस्य प्रापको विधिः'** लिखा है। जैसे 'यजेत स्वर्गकामः' इत्यादि वाक्यों में अत्यन्तमप्राप्त याग का विधान स्वर्गप्राप्ति हेतु किया गया है। 'अप्राप्त' से 'अज्ञात' एवं 'प्रापक' से 'ज्ञापक' अर्थ ग्रहण करना चाहिए।

उद्धृत कारिका में 'नियमः पाक्षिके सति' अंश 'नियमविधि' के लक्षण एवं स्वरूप पर विचार करता है। इसकी व्याख्या लौगाक्षि भास्कर ने 'पक्षे अप्राप्तस्य प्रापको विधिः नियमविधिः' की है।[1] 'नियमस्य पक्षे अप्राप्तप्रापकत्वम्' को 'व्रीहीनवहन्ति" द्वारा

१. 'पक्षे अप्राप्तस्य कदाचित् प्राप्तस्य कदाचिदप्राप्तस्य इत्यर्थः। वितुषीभावरूपं प्रयोजनं हि अवहननेन नखविदलनेन अश्मकुट्टादिना वा इत्यनेकैरूपायैः साधयितुं शक्यते। तत्र नखविदलनादिभिः वितुषीभावं यदा संपादयितुमारभते, तदा अवहननस्य प्राप्त्यभावात् अस्ति तस्य कादाचित्की प्राप्तिः। तस्यां च दशायां या अप्राप्तिः तदंशेऽपि, अवघातप्रापको यो विधिः स नियमविधिरित्यर्थः'—सार-विवेचिनी—

समझा जा सकता है। व्रीहि से तुषविमोक, नखविदलन अश्मकुट्टन एवं अवहनन से किया जा सकता है। अतः तुषविमोक रूपी साध्य क्रिया के कई साधन उपलब्ध हैं। अब यदि नख विदलन या अश्मकुट्टन द्वारा तुषविमोक किया जाने लगे तो 'अवहनन' अप्राप्त हो जाता है। इस प्रकार 'व्रीहीनवहन्ति' यह नियमविधि अप्राप्त साधन अवघात का विधान करती है।

मूलग्रन्थ में 'अनेन ह्यवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यतेऽन्वयव्यतिरेकसिद्धत्वात्, किन्तु नियमः' द्वारा अपूर्वविधि एवं नियमविधि का भेद प्रतिपादित किया गया है।[1]

## परिसंख्याविधिलक्षणम्

उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा—'पञ्च पञ्चनखा भक्ष्याः' इति। इदं हि वाक्यं न पञ्चनखभक्षण-परम्, तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्, पञ्चनखापञ्चनख-भक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात्। अत इदमपञ्चनखभक्षण-निवृत्तिपरमिति भवति परिसंख्याविधिः।

### अर्थालोकः

उत्तरार्धं व्याख्याति—**उभयोश्चेति**। **युगपत्** एककालावच्छेदेन। नियम-विधौ द्वयोस्साधनयोर्नखविदलनावहननयोरेककालावच्छेदेन वितुषीभावकार्ये न प्राप्तिः, अत्र तु युगपत्प्राप्तिरौत्सर्गिकी न नियता। तेन 'नानृतं वदेत्' इत्यादौ सत्यानृतयोरेकस्मिन् वदनव्यापारे युगपत्प्राप्त्यभावेऽपि न विरोधः। एवञ्चै-

---

१. "The distinction between विधि and नियम may thus be stated : Both विधि and नियम enjoin things, which are अप्राप्त. But while विधि enjoins a matter, which is अत्यन्तमप्राप्त or प्रमाणान्तरेण अप्राप्त ( not known from any other source ), नियम lays down a matter which is only पक्षे अप्राप्त ( not established in the alternative ). Secondly, विधि represents an injunction, pure and simple, of a matter not known from anyother source, नियम on the other hand asks us to perform a thing, already known from an other source, in some special manner. Thirdly विधि performs a single function viz. enjoining a thing unknown before; but नियम performs two really, because it restricts us to one of the many alternatives and excludes the others.
—Gajendragadkar A. B.—The Arthasamgraha. See. 50, pages 218.

कस्मिन् कार्ये द्वयोस्साधनयोर्युगपत्प्राप्तौ इतरव्यावृत्तिपरत्वं परिसंख्याविधेः कार्यमिति सिद्धम्। एतेन नियमपरिसंख्याविध्योर्भेदोऽपि स्फुटः—नियमविधौ नियमो विधेयः, स च नियमोऽप्राप्तांशपूरणात्मा, अप्राप्तांशपूरणं फलम्, इतरव्यावृत्तिस्तु न विधेया, तस्या विप्रकृष्टत्वात्। परिसंख्यायां तु साधनद्वयस्य नित्यप्राप्तत्वेन नियमस्य फलत्वायोगात् इतरनिवृत्तिरेव विधेया, सैव फलमिति भेदस्सिध्यति। उदाहरति—**पञ्चेति**। नखपञ्चकविशिष्टाः पञ्चैवेत्यर्थः। ते च शशकः शल्यकी गोधा खड्गी कूर्मः इति, वाल्मीकिरामायणगतमिदं पद्यम्—

'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।
शशकः शल्यकी गोधा खड्गी कूर्मोऽथ पञ्चमः'। इति

अपूर्वविधित्वमस्य निवारयति—**इदं हीति**। भक्षणं हि रागतः प्राप्तम्। रागतः पूर्वं यदि शास्त्रप्रवृत्तिरङ्गीक्रियेत तर्हि पूर्वप्रवृत्तेः फलं कल्पनीयं स्यात्, तच्च गुरुभूतम् इति भावः। अस्य नियमविधित्वं निराकरोति—**नापीति**। तत्र हेतुः—**युगपत्प्रवृत्तेरिति**। अस्यैव विवरणम्—पक्षेऽप्राप्त्यभावादिति। पक्षेऽप्राप्तस्यैव पूरणं नियमविधेः कार्यम्, अत्र च नाप्राप्तिः, युगपत् पञ्चातिरिक्तपञ्चनखानां परिगणितपञ्चनखानाञ्च प्राप्तेस्सत्वादित्यर्थः। फलितमाह—**अत** इति।

**अनुवाद**—एक समय में ( युगपत् ) दो को ( उभयोः ) की प्राप्ति रहने पर दूसरे के निवृत्तिपरक ( इतरव्यावृत्तिपरः ) विधि वाक्य को 'परिसंख्या[1] विधि' कहते हैं। यथा 'पञ्च पञ्च नखाः भक्ष्याः' ( अर्थात् पाँच पञ्चनखवाले जीवों का भक्षण करें )। यह वाक्य पञ्चनख भक्षण का विधान नहीं करता, क्योंकि पञ्चनख भक्षण में स्वभावतः राग से ही प्राप्त है। एवं ( यह वाक्य ) नियमपरक ( नियमविधि ) भी नहीं है क्योंकि एक ही समय में पञ्च पञ्चनखों का भक्षण एवं उनसे भिन्न पञ्चनखों का भक्षण स्वभावतः प्राप्त होने से पक्ष में अप्राप्त नहीं है। अतएव 'पञ्च पञ्चनखाः भक्ष्याः' यह वाक्य 'पञ्च पञ्चनख से भिन्न' जीवों के भक्षण का निषेधक है अतः परिसंख्या कहा गया है।

## अर्थालोकलोचन

कुमारिल भट्ट ने परिसंख्या का लक्षण करते हुए कहा है—"तत्र चान्यत्र च प्राप्तौ परिसंख्या" यहां दो बार 'चकार प्रयोग से युगपत्काल की प्रतीति होती है। प्रकृत उदाहरण में 'पञ्चपञ्चनखभक्षण' अत्यन्तमप्राप्त या प्रमाणान्तरेण अप्राप्त नहीं है अतः अपूर्व-

---

१. **परिसंख्या**—परिशब्दोऽत्र वर्जनार्थः। 'परेर्वर्जने' ( ८. २. ५. ) इति पाणिनिस्मृतेः। संख्या बुद्धिः। परिसंख्यावर्जनबुद्धिः। परिसंख्याजनकः विधिः परिसंख्या विधिः।

विधि नहीं है। इसी तरह 'पञ्चपञ्चनख भक्षण' एवं 'अपञ्चपञ्च नखभक्षण' युगपत्प्राप्त होने से नियमविधि के अन्तर्गत नहीं आते हैं क्योंकि नियमविधि में विधेय को 'पक्ष में अप्राप्त' होना चाहिए। अतएव मीमांसा परिभाषाकार ने **'द्वयोः समुच्चित्य प्राप्तौ इतरनिवृत्तिफलको विधिः परिसंख्याविधिः'** कहा है। मिताक्षराकार ने अपना अभिप्राय व्यक्त करते हुये लिखा है—'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र हि यदृच्छया शशादिषु शल्यक्यादिषु च भक्षणं प्राप्तं पुनः शशादिषु श्रूयमाणं शल्यक्यादिभ्यो निवर्तते इति।

## परिसंख्याया भेदद्वयम्

सा च द्विविधा श्रौती लाक्षणिकी चेति। तत्र 'अत्र हि एव आवपन्ति' इति श्रौती परिसंख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्च पञ्चनखा भक्ष्याः' इति तु लाक्षणिकी, इतरनिवृत्तिवाचकपदाभावात्। अत एवैषा त्रिदोषग्रस्ता।

## अर्थालोकः

परिसंख्यां विभजते—**सा चेति**। **श्रौती** यत्र निवृत्तिवाचकशब्दः नञ् एवकारो वा तत्र श्रौती परिसंख्येत्यर्थः। **लाक्षणिकीति**। यत्र निवृत्तिबोधकशब्दो न श्रूयते निवृत्तिश्च लक्षणया तत्र लाक्षणिकीत्यर्थः। श्रौत्या उदाहरणम्—**अत्रेति**। अत्र ह्येवावयन्ति इत्यपपाठः। 'त्रीणि हवै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति समग्रस्सन्दर्भः। यज्ञस्योदरस्थानीयानि गायत्रीबृहत्यनुष्टुप्छन्दांसि, अत्र ह्येवावपन्ति, **अत्र** पूर्वोक्तच्छन्दस्स्वेवावपन्ति प्रक्षेपं कुर्वन्तीत्यर्थः। अत्रेदं विषयविवेचनम्—सर्वसोमयागानां प्रकृतिभूतो ज्योतिष्टोमः। तस्मिन् सन्ति सवनभेदेन द्वादश स्तोत्राणि। प्रातस्सवने—बहिष्पवमानमेकम् चत्वार्याज्यस्तोत्राणि, माध्यन्दिनसवने—माध्यन्दिनपवमानमेकम् चत्वारि पृष्ठस्तोत्राणि, सायं सवने—आर्भवपवमानमेकम् यज्ञायज्ञीयमेकमित्याहृत्य द्वादश स्तोत्राणि। स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्। अर्थात् सामगानेन सह मन्त्रद्वारा देवतागुणकीर्तनम्। द्वादशस्तोत्रेषु संख्या विहिताः—त्रिवृत् ( नव ) पञ्चदशः, सप्तदशः एकविंशश्चेति। इमाः संख्याः स्तोमशब्देनोच्यन्ते। स्तोत्रगता संख्या स्तोमः। स्तोत्रसाधनाय तिस्र ऋचः प्रायो भवन्ति, तासां प्रकारविशेषेणावृत्तिः क्रियते, यया तस्यास्तस्यास्संख्यायास्सम्पत्तिर्भवति। त्रिवृत्संख्या बहिष्पवमानस्तोत्रे, पञ्चदशसंख्या आज्यस्तोत्रेषु, सप्तदश पृष्ठस्तोत्रेषु एकविंशो यज्ञायज्ञीयस्तोत्रे इति स्थूलशो विभागः। सर्वत्र साम्नां विधानमस्ति। 'एकं साम तृचे क्रियते स्तोत्रियम्' इत्यनुसारेणैकैकस्य साम्नः तृचं गानं कर्तव्यं भवति। तत्र तत्तत्संख्यासम्पादन-

मत्यावश्यकम्। प्रकृतावियं स्थितिः। विकृतिषु क्वचिद्विवृद्धस्तोमकानि स्तोत्राणि विहितानि—'त्रिणवेनौजस्कामं याजयेत्' इत्यादिभिः। प्रकृतितो ये स्तोमा अतिदिष्टास्तदपेक्षयात्र संख्याधिक्यमस्ति। अधिकसंख्यासम्पत्यर्थं स्थानान्तरात्सामानि समानीय संख्यासम्पादनं कर्तव्यम्। तत्र समानीतानां साम्नां पवमानस्तोत्रेषु तदितरस्तोत्रेषु च समुच्चयेनावापः प्राप्तः। तत्रेदमुच्यते—'अत्र ह्येवावपन्ति' इति। इदंशब्दात् त्रल्। इदंशब्दश्च पूर्वपरामर्शी। पूर्वञ्च गायत्री बृहत्यनुष्टुप् छन्दांसि कीर्तितानि। तत्र छन्दश्शब्दः छन्दोवाचकः, छन्दस्सम्बन्धिस्तोत्रवाचको वा। युगपत्सर्वस्तोत्रेषु प्राप्तस्य सामावापस्यानेन परिसंख्या क्रियते—एतत्त्रितयातिरिक्तेषु पवमानस्तोत्रसम्बन्धिषु छन्दस्सु, पवमानातिरिक्तस्तोत्रेषु वा न सामावापः कार्यः। एवञ्च 'अत्र ह्येवावपन्ति' इति वाक्यं विवृद्धस्तोमकेषु पवमानातिरिक्तस्तोत्रेषु सामावापपरिसंख्यापकमिति। अत्रैवकारेण श्रुत्यैवान्यनिवृत्तेरभिधानादियं श्रौतीत्याह—**एवकारणेति**। अत्रेदं बोध्यम्—'अत्र ह्येवावपत्ति' इत्यत्र यद्यपि पवमानपदं नास्ति, तथापि 'अत्र' पदेन परामृष्टानि छन्दांसि पवमानस्तोत्रेष्वेव सन्ति। अतस्तद्व्यतिरिक्तविषयिण्येवेयं परिसंख्येति निश्चेतव्यं भवति। तत्रापि प्रातस्सवनीयबहिष्पवमानस्तोत्रेऽयं सामावापो न सम्भवति, तत्र सामैकत्वस्य प्रत्यक्षतो विहितत्वात्। परिशेषात् माध्यन्दिनपवमानार्भवपवमानविषय एवेति। **पञ्चेति**। इतरनिवृत्तिबोधकपदाभावेऽपि लक्षणयेतरनिवृत्तिरिति लाक्षणिकी परिसंख्येत्यर्थः। **अत एव** लाक्षणिकत्वादेव **त्रिदोषग्रस्ता** त्रिभिर्दोषैर्ग्रस्ता।

**अनुवाद**—परिसंख्या के दो भेद हैं—श्रौती एवं लाक्षणिकी। श्रौती परिसंख्या का उदाहरण है **'अत्र हि एव आवपन्ति'** इति ( अर्थात् यहीं पर आवाप = साम प्रक्षेपण करते हैं ) यह 'एव' शब्द से पवमान ( स्तोत्र विशेष का नाम ) से अतिरिक्त स्तोत्रों की निवृत्ति समझी जाती है।

लाक्षणिकी परिसंख्या का दृष्टान्त 'पञ्च पञ्च नखा भक्ष्याः' है क्योंकि यहाँ इतरनिवृत्तिवाचक पद के अभाव में ( अर्थात् 'एव' की तरह निवृत्ति सूचक पद नहीं है ) लक्षणा द्वारा उसकी कल्पना करनी पड़ती है, अतएव यह ( लाक्षणिकी परिसंख्या ) तीन दोष युक्त है।

## अर्थालोकलोचन

मूलग्रन्थ में 'अत्र ह्येवावपन्ति'[1] श्रौती परिसंख्यारूप में उदाहृत है। यहाँ 'आवयन्ति'

---

१. **'आवपन्ति'**—आवापः = प्रक्षेपः, समुच्चयः, कुछ नूतन शब्दों का जोड़ना। उद्वापः = उद्धारः, निवृत्तिः-पूर्व विद्यमान शब्दों को हटाना। 'आवाप, एवं उद्वाप' इन दोनों शब्दों का प्रयोग "त्रीणि ह वै यज्ञस्य उदराणि यद्गायत्री बृहती

पद से अभिप्राय है सामशब्दों का योग। याज्ञिकी प्रक्रिया के अनुसार सामों का 'आवाप' एवं 'उद्वाप' केवल पवमान के ही गायत्री, बृहती एवं अनुष्टुप् मात्र तीन छन्दों में व्यवहृत है। अतः वाक्य का परिसंख्याबोधित अर्थ निम्न होगा—

**"( गायत्रीबृहत्यनुष्टुप्' ) एतत्त्रयातिरिक्तेषु पवमानस्तोत्रसम्बन्धिषु छन्दस्सु पवमानातिरिक्तेषु स्तोत्रेषु वा न समावापः कार्यः )"**। निष्कर्ष यह है कि पवमान के उक्त तीन छन्दों के अलावा किसी अन्य जगह पर 'आवाप' निर्दिष्ट नहीं है। ( द्रष्टव्य—अर्थालोकः )[६]

## परिसंख्याया दोषत्रयम्

दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। तदुक्तम्—

'श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा॥' इति।

श्रुतस्य पञ्चपञ्चनखभक्षणस्य हानात्, अश्रुताया अपञ्चपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चापञ्चपञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्। प्राप्तबाधस्त्वर्थनिष्ठ इति दिक्।

## अर्थालोकः

दोषत्रयं दर्शयति—**श्रुतहानि**रित्यादिना। अत्र प्रमाणम्—**श्रुतेति**। **श्रुतस्थे**त्यादिना दोषत्रयं विवृणोति। **प्राप्तस्येति**। रागत इति शेषः। श्रुतहान्यश्रुतकल्पनयोश्शब्दनिष्ठत्वम् तृतीयस्य चार्थनिष्ठत्वमाह—**अस्मिंश्चे**त्यादिना। दोषत्रयमध्य इत्यर्थः।

**अनुवाद**—लाक्षणिकी परिसंख्या के तीन दोष है—( १ ) श्रुतहानि, ( २ ) अश्रुतकल्पना एवं ( ३ ) प्राप्तबाध। अत एव कहा गया है—'परिसंख्या श्रुत अर्थ के छोड़ने, अश्रुत अर्थ की कल्पना करने एवं रागतः प्राप्त बाधा से, तीन प्रकार के दोषवाली हो जाती है।' [ उक्त तीनों दोषों का दृष्टान्त क्रमशः समन्वय इस प्रकार है ]—

'पञ्चपञ्चनखा भक्ष्याः' इस वाक्य में श्रुत पञ्चपञ्चनख भक्षण निर्देश को छोड़ना पड़ता है, ( श्रुतार्थपरित्याग )। एवं अश्रुत शशकादि पञ्च भिन्न पञ्चनख भक्षण की निवृत्ति रूपी कल्पना करनी होती है, ( अश्रुतार्थप्रकल्पनम् ) और स्वभावतः प्राप्त पञ्चातिरिक्त पञ्चनख भक्षण का निषेध किया गया है अतः 'प्राप्तबाध' भी होता है, (प्राप्तबाध)। इन तीन दोषों में प्रथम दो शब्दनिष्ठ है एवं 'प्राप्तबाध' अर्थनिष्ठ है ऐसा समझना चाहिये।

---

अनुष्टुप्। अत्र हि एव **आवपन्ति**, अत एव **उद्वपन्ति**" इस मन्त्र में मिलता है **( द्रष्टव्य—अर्थालोक टीका )**

१. द्रष्टव्य—जैमिनीन्यायमालाविस्तर १०।४, २१-२२

## अर्थालोकलोचन

परिसंख्या के द्वितीय प्रभेद लाक्षणिकी के तीन दोषों की गणना—श्रुतहानि, अश्रुत कल्पना एवं प्राप्तबाध रूप में की गई है। इन तीनों का स्वरूप 'पञ्चपञ्चनखाभक्ष्याः' इस एक दृष्टान्त से ही स्पष्ट हो जाता है। **प्रथमतः** इस वाक्य में 'पञ्चपञ्चनखभक्षण' का विधान प्रतीत होता है परन्तु इसका स्वीकृत अर्थ 'पञ्चातिरिक्तपञ्चनखभक्षण निवृत्ति' रूप है अतः 'श्रुत' अर्थ का यहाँ परित्याग किया गया है। **द्वितीयतः** पञ्चातिरिक्तपञ्चनखभक्षण-निवृत्तिपरक' कोई भी पद इस वाक्य में नहीं है तथापि तादृश अर्थ की कल्पना करनी पड़ती है अतः 'अश्रुतार्थप्रकल्पनम्' नामक दोष भी आ गया है। **तृतीयतः** 'पञ्चपञ्चनखा भक्ष्याः' इस परिसंख्यापरक दृष्टान्त में पञ्चपञ्चनख भक्षण एवं तदितर भक्षण दोनों ही रागतः प्राप्त होने पर एक की निवृत्ति ( पञ्चातिरिक्तपञ्चनख की ) कर दी जाती है। अतः प्राप्त बाध दोष भी आ जाता है।

इन तीनों दोषों में श्रुतहानि एवं अश्रुत कल्पना को शब्दनिष्ठ कहा जाता है क्योंकि इनमें शब्द अपने अभिधेयार्थ का परित्याग कर देता है। प्राप्त बाध का सम्बन्ध शब्द से न होकर 'अर्थ' से है ( अर्थः अपञ्चपञ्चनखभक्षणरूपः ) अतः इस दोष को अर्थनिष्ठ कहा गया है।

## मन्त्रविशेषाणामुच्चारणस्यादृष्टार्थकत्वम्

येषां तु प्रयोगसमवेतार्थस्मारकत्वं न संभवति तदुच्चारणस्या-नन्यगत्या अदृष्टार्थकत्वं कल्प्यत इति नानर्थक्यमिति।

## अर्थालोकः

मन्त्रनिरूपणप्रसङ्गादागतं विधित्रयनिरूपणं परिसमाप्य प्रकृतमन्त्रविचार-मुपसंहर्तुमाह—**येषान्त्विति**। मन्त्राणामिति शेषः। हुं फट् आदीनामित्यर्थः। तेषामुच्चारणमात्रेणादृष्टार्थत्वमाह—**तदुच्चारणस्येति**। अन्या गतिर्न भवतीत्य-नन्यगतिः तया **अनन्यगत्या**। एवं क्वचिदगतिकस्थले मन्त्राणामदृष्टार्थत्व-स्वीकारेऽपि यत्र गतिरस्ति तत्र न युक्तमदृष्टार्थत्वमिति भावः। उपसंहरति-**नानर्थक्यमिति**। स्वाध्यायाध्ययनविधिपरिगृहीतत्वेन मात्रयाप्यानर्थक्यं नोचितमित्यर्थः।

**अनुवाद**—जो मन्त्र अनुष्ठान में प्रयुक्त होने वाले पदार्थों के स्मारक नहीं हो सकते उन मन्त्रों का उच्चारण दूसरा उपाय न रहने से ( अनन्यगत्या ) अदृष्टार्थ ही मानना चाहिए। अतः मन्त्रोच्चारण व्यर्थ नहीं होता है।

## अर्थालोकलोचन

प्रसङ्गतः प्राप्त अपूर्व विधि, नियमविधि एवं परिसंख्याविधि का निरूपण करके ग्रन्थकार उपसंहार करने की दृष्टि से 'मन्त्रमीमांसा' प्रकरण की चर्चा में प्रवृत्त हो रहा

है। इससे पूर्व यह कहा गया है कि मन्त्र का प्रयोजन अनुष्ठान के प्रयोगों का स्मरण कराना है। परन्तु कुछ मन्त्र ऐसे हैं जिनमें यह सामर्थ्य नहीं होता, यथा 'कवचाय हुम्, 'नेत्रत्रयाय वौषट्' 'अस्त्राय फट्' आदि। अतः क्या इन मन्त्रों को अनर्थक मान लिया जाय? मीमांसक की दृष्टि से इन्हें अनर्थक नहीं माना जाता क्योंकि इनसे 'अदृष्टार्थ' प्रयोजन सिद्ध होता है। भाव यह है कि 'स्वाध्यायोऽध्येतव्य' इस विधिवाक्य से समस्त वेद का ग्रहण हो जाता है सिद्धान्ततः वेद का कोई भी अंश निष्प्रयोजन या तत्त्वार्थशून्य नहीं होता है। अतः इन मन्त्रों के उच्चारण से यद्यपि 'प्रयोग समवेत स्मारकत्व' रूपी बात सिद्ध नहीं होती तथापि इनमें 'अदृष्टार्थकता' विद्यमान है।

## नामधेयप्रकरणम्

### नामधेयप्रामाण्यम्

नामधेयानां च विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। तथाहि— 'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भिच्छब्दो यागनामधेयम्, तेन च विधेयार्थपरिच्छेदः क्रियते। तथा हि-अनेन वाक्येनाप्राप्तत्वात् फलोद्देश्येन यागो विधीयते। यागसामान्यस्याविधेयत्वात् यागविशेष एव विधीयते। तत्र 'कोऽसौ यागविशेषः' इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते। 'उद्भिदा यागेन पशुं भावयेत्' इत्यत्र सामानाधिकरण्येन नामधेयान्वयात्।

### अर्थालोकः

विधीनां प्रयोजनवदर्थविधानेनार्थवत्वं मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकत्वेनार्थवत्वं निरूप्य सम्प्रति क्रमप्राप्तं नामधेयानामर्थवत्वं प्रतिपादयति—**नामधेयानाञ्चेति**। ननु विधीनां धर्मे स्वतः प्रामाण्यम् तेन तेषामर्थवत्वप्रतिपादनमुचितम्, एवं मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन प्रामाण्यादर्थवत्वप्रतिपादनमुचितम्, किन्तु नामधेयानां न तथा धर्मे प्रामाण्यमिति कथं तेषामर्थवत्वप्रतिपादनप्रयास इत्यत आह—**विधेयेति**। विधेयो यो धात्वर्थो यागादिः क्रियारूपः तत्परिच्छेदकतयान्येभ्यो व्यवच्छेदकतयेत्यर्थः। विधिविषयीभूतधात्वर्थनिष्ठवैजात्यबोधकतयेति यावत्। उदाहरति—**उद्भिदेति**। परिच्छेदकत्वमुपपादयति—**अनेनेति**। अप्राप्तप्रापकत्वस्थले याग एव विधेय इत्याह—**याग** इति। विधेयत्वमप्रवृत्तप्रवृत्तिविषयत्वम्। यागसामान्ये विधीयमाने तस्य तादृशविषयता दुर्लभा। यावद्विशेषो नावगम्यते तावत्पुरुषस्य प्रवृत्तिर्नोदियात्। अतः प्रवर्तकत्वं विधेः स्वविषयीभूतधात्वर्थगतविशेषरूपेण साधनीयम्। अन्यथा विधेः प्रवर्तकत्वमेव भज्येतेत्याह—**यागसामान्यस्येति**।

यागगतविशेषावगमः कस्मादित्यत आह—**उद्भिच्छब्दादिति।** **उद्भिद्रूपः** उद्भिदिति रूपं नाम यस्य स इति विग्रहः। उद्भिन्नामको याग इत्यर्थः। उद्भिदिति नाम यागश्च नामी। नाम्नो नामिनश्चैकार्थनिष्ठत्वात्सिद्धं वाक्यार्थं दर्शयति—**उद्भिदा यागेनेति।** **सामानाधिकरण्येन** उद्भिद्धात्वर्थयोरेकार्थ-वाचित्वेन सामानाधिकरण्यं तेन चोद्भित्पदस्य नामधेयत्वमिति भावः। ननु सामानाधिकरण्यस्थले नीलो घट इत्यादौ द्वयोरपि पदयोर्भिन्नप्रवृत्तिनिमित्तकत्वं दृश्यते। तेन भिन्नप्रवृत्तिनिमित्तयोरेव सामानाधिकरण्यमुचितम्। प्रकृते चोद्भि-च्छब्दवाच्यस्यार्थान्तरस्याभावेन कथं सामानाधिकरण्यसम्भव इति चेन्न; अत्र च सामानाधिकरण्यं न नीलो घट इव, किन्तु 'सा वैश्वदेव्यामिक्षा' इत्यत्रामिक्षा-शब्दवत्सामानाधिकरण्यस्याभिप्रेतत्वात्। वैश्वदेवीशब्दस्तद्धितान्तः, तद्धितश्च 'सास्य देवता' इति सर्वनामार्थे विहितः। सर्वनाम्नस्तु बुद्धिस्थत्वावच्छिन्नपदार्थे शक्तिः। बुद्धिस्थत्वावछिन्नपदार्थः विशेषपरो भवति। स च विशेष आमिक्षापदेन समर्प्यते। अतश्च सामान्यविशेषरूपयोरर्थयोर्न विशेष्यविशेषणभावोऽत्राभिप्रेतः, किन्तु शब्दयोरेव वैश्वदेव्यामिक्षारूपयोः। एवमुद्भिद्यागपदयोस्सामानाधिकरण्यम् इति न कोऽपि दोष इति ज्ञेयम्। अतश्च नाम्नां विधेयार्थपरिच्छेदकतयार्थवत्व-मिति सिद्धम्।

**अनुवाद**—'नामधेय' विजातीय की निवृत्ति पूर्वक विधेयार्थ का निश्चय करता हुआ सार्थक होता है। यथा—'उद्भिदा यजेत पशुकामः' इस दृष्टान्त में उद्भिद शब्द याग का वाचक (= नामधेय) है। इस प्रकार, इसके द्वारा पशुरूप फल को उद्देश्य करके, किसी अन्य वाक्य द्वारा अप्राप्त, याग का विधान होता है। यहाँ याग सामान्य का विधान न होने से याग विशेष (उद्भिद नामक) का ही विधान किया गया है। 'यह याग विशेष कौन है? इस तरह की आकांक्षा (अपेक्षा) होने पर 'उद्भिद' शब्द से उद्भिद् रूप याग विशेष का ज्ञान होता है। 'उद्भिदा यागेन पशुं भावयेत्' इस प्रकार वाक्य बोध होने पर उद्भिद एवं याग का समानाधिकरण्य (= अभेदान्वय) होता है अतः उद्भिद् याग का नाम है।

## अर्थालोकलोचन

इससे पूर्व विधिनिरूपण एवं मन्त्र मीमांसा की जा चुकी है। सम्प्रति क्रमप्राप्त नामधेय के प्रयोजन पर विचार किया जा रहा है। नामधेय वस्तुतः विधि, मंत्र, निषेध एवं अर्थवाद से स्वरूपतः भिन्न है। विध्यादि में वेद वाक्य को लेकर जहाँ चर्चा उपलब्ध होती है, नामधेय में कतिपय नामों से जुड़े हुए विशेष भागों की आलोचना दृष्टिगोचर होती है। समग्र नामधेय प्रकरण का सार भूत तत्त्व 'उद्भिदा यजेत पशुकामः', 'चित्रया यजेत पशुकामः, 'अग्निहोत्रं जुहोति' एवं 'श्येनेनाभिचरन् यजेत' इन चार वाक्यों में निहित है। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इस जैमिनि सूत्रानुसार समस्त

वेदवाक्यों की प्रयोजनीयता याग में निहित है। अतः उद्भिद् एवं चित्रा आदि व्यक्ति-वाचक संज्ञाओं की प्रयोजन व विचार करने पर यही प्रतीत होता है कि ये नाम यज्ञ विशेष में प्रयुक्त होने वाली क्रिया से उसके सजातीय एवं विजातीय पदार्थों का पार्थक्य अवगत कराते हैं इसी को 'विधेयार्थ परिच्छेद' पद से निर्दिष्ट किया है। यथा उद्भिदा यजेत पशुकामः में पशुरूपफल के उद्देश्य से याग का विधान किया गया है। इस याग का ज्ञान किसी अन्य वाक्य से नहीं हो सकता। अतः यह याग वस्तुतः अप्राप्त है और इस वाक्य द्वारा विहित किया जा रहा है। यदि इस वाक्य से उद्भिद शब्द हटाकर केवल 'यजेत पशुकामः' रहने दे तो 'यागेन पशुं भावयेत्' यह वाक्यार्थ होगा परन्तु इससे यागसामान्य का विधान हो रहा है जो कि वस्तुतः 'अविधेय' है क्योंकि याग विशेष का नाम अभिहित किये बिना अनुष्ठान सम्भव नहीं है 'उद्भिदा' पद द्वारा इसी आकांक्षा की पूर्ति होती है। अतः 'उद्भिद' याग का नामधेय हुआ और यागविशेष का निर्देशक होने से विधेयार्थ परिच्छेद भी हुआ। यहाँ यह भी ध्यातव्य है कि 'उद्भिदा यागेन पशुं भावयेत्' इस वाक्य में उद्भिद एवं याग का सामानाधिकरण्य[1] भी है क्योंकि दोनों पदों के वचन, विभक्ति एवं लिङ्ग समान है।[2]

## नामधेयत्वे निमित्तचतुष्टयम्

नामधेयत्वं च निमित्तचतुष्टयात्। मत्वर्थलक्षणाभयाद्वाक्यभेद-भयात्तत्प्रख्यशास्त्रात्तद्व्यपदेशाच्चेति।

## मत्वर्थलक्षणाभयान्नामधेयत्वम्

तत्र 'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। न तावदनेन वाक्येन फलं प्रति यागविधानम्, तं प्रति च गुणविधानं युज्यते, वाक्यभेदापत्तेः। उद्भिच्छब्दस्य गुण-समर्पकत्वे च यागस्याप्यप्राप्तत्वात् गुणविशिष्टकर्मविधानं वाच्यम् 'उद्भिद्वता यागेन पशुं भावयेत् इति। विशिष्टविधौ च मत्वर्थलक्षणे-त्युक्तमेव।

## अर्थालोकः

एवमर्थवत्त्वे नामधेयानां सिद्धे नामधेयत्वापादकं हेतुं प्रतिपादयति—**नामधेयत्वञ्चेति**। निमित्तचतुष्टयं परिगणयति—**मत्वर्थेति**। प्रथमनिमित्तस्यो-

---

१. **सामानाधिकरण्यम्**—समानमधिकरणं येषां तेषां भावः।
'पदयोरेकार्थाभिधायित्वं समानविभक्तिकत्वं वा सामानाधिकरण्यम्।
यथा 'नीलो घटः' इत्यादौ नीलपदघटपदयोः सामानाधिकरण्यम्।
—वैयाकरणभूषणसारदर्पणः।

२. द्रष्टव्य—अर्थालोकटीका।

दाहरणम्—**उद्भिदेति** । अत्र यौगिका एव शब्दा उदाहरणम् । यद्युद्भिच्छब्दस्य नामसमर्पकत्वं न स्यात्तर्हि विधिवाक्ये मत्वर्थलक्षणा दोषस्स्यात् तद्भयान्नामत्वमङ्गीक्रियत इति भावः । तदिदमुपपादयति—**तथाहीत्यादिना** । **अनेन वाक्येन** 'उद्भिदा यजेत' इति वाक्येन **फलं प्रति** पशुरूपफलं प्रति **न यागविधानम्** उद्भिच्छब्दस्यानर्थक्यापत्तेः । अत उद्भिच्छब्दस्य गुणसमर्पकत्वमङ्गीकृत्य **तं प्रति** यागं प्रति, **गुणविधानं** गुणस्य उत् ऊर्ध्वं भिद्यतेऽनेनेति व्युत्पत्त्या लब्धस्य खनित्रादेर्विधानं वक्तव्यम् । तत्र दोषं दर्शयति—**वाक्यभेदापत्तेः**— उद्भिदा गुणेन यागं भावयेत् यागेन च फलं भावयेदिति । वाक्यभेददोषान्मुक्तये केवलयागमुद्दिश्योद्भिद्गुणो विधेयः, तदा फलपदमनर्थकं स्यात् । फलपदस्य कथञ्चिदनुवादकत्वं यदि साध्यते तर्हि दोषमाह—**अप्राप्तत्वादिति** । 'यत्र कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधीयते' इति प्राग् गुणविधिलक्षणमभिहितम्, यथा 'दध्ना जुहोति' इति । दधिवद् उद्भिद्गुणविधानाय यागस्य प्राप्तिर्वक्तव्या । प्रापकश्चान्यच्छास्त्रं न विद्यत इति यागस्याप्राप्तत्वाद् गुणविधानं न सङ्गच्छत इत्यर्थः । अतो वाक्यभेदोद्भित्फलपदयोरानर्थक्यपरिजिहीर्षया विशिष्टविधानं बलात्स्वीकर्तव्यमित्याह—**गुणविशिष्टेति** । विशिष्टविधाने वाक्यार्थं दर्शयति—**उद्भिद्वतेति** । एवं विशिष्टविधौ दोषमाह—**मत्वर्थलक्षणेति** । **उक्तमेव** 'सोमेन यजेत' इति वाक्यचर्चावसर इत्यर्थः । अतश्च 'उद्भिदा यजेत पशुकामः' इत्यत्र फलोद्देशेन यागविधानं न सम्भवति, उद्भित्पदानर्थक्यात्, यागोद्देशेन गुणविधानं न सम्भवति, फलपदानर्थक्यात्, कथमपि फलपदस्यानुवादकत्वमङ्गीकृत्य गुणविधाने यागस्याप्राप्तत्वान्न तत्सम्भवति, फलं प्रति यागः यागं प्रति च गुण इत्येवं विधाने वाक्यभेदादमी पक्षा अनुपपन्ना इति विशिष्टविधानमङ्गीकार्यम्, तत्र च मत्वर्थलक्षणेत्युद्भित्पदं नामधेयमिति सिद्धम् ।

**अनुवाद**—'नामधेयत्व' ( याग का नाम ) ४ कारणों से होता है—( १ ) मत्वर्थलक्षणा[1] के भय से ( २ ) वाक्यभेद[2] के भय से ( ३ ) तत्प्रख्यशास्त्र[3] से एवं

---

१. **मत्वर्थलक्षणा**—मतोः अर्थः यस्याः, ईदृशी च असौ लक्षणा च ।
'उद्भिदा यजेत पशुकामः' 'उद्भिद्वता यागेन पशुं भवयेत्' ।

२. वाक्यस्य भेद आवृत्तिः, वाक्यभेदः ।
'चित्रया यजेत पशुकामः'—
(१) 'यागेन पशुं भावयेत्'
(२) चित्रया दध्यादिचित्ररूपेण गुणेन यागं भावयेत् ।

३. **तत्प्रख्यशास्त्र**—तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रम् ।

( ४ ) तद्व्यपदेश[1] से। यहाँ 'उद्भिदा यजेत पशुकामः' में मत्वर्थलक्षणा के भय से 'उद्भिद' याग का नाम है क्योंकि 'उद्भिदा यजेत' इस वाक्य से 'पशुरूप' फल को उद्देश्य करके याग का विधान एवं याग को उद्देश्य करके खनित्ररूपी गुण का विधान नहीं किया जा सकता क्योंकि ऐसा स्वीकृत करने पर 'वाक्यभेद' होगा। और उद्भिद् शब्द का खनित्र-रूप गुण अर्थ करने पर ( जिस याग में वह गुण होगा ) वह याग भी प्रमाणान्तर से प्राप्त न होने पर उसी वाक्य से याग का विधान करके उद्भिद् ( = खनित्र ) रूप गुण विशिष्ट याग का विधान करना होगा ( = गुणविशिष्टकर्मविधि )। अतः 'अद्भिद्वता यागेन पशुं भावयेत्' यह अर्थबोध होने पर मत्वर्थलक्षणा स्वीकार करनी पड़ेगी। इसलिये 'उद्भिद्' शब्द को याग का नामधेय माना गया है।

## अर्थालोकलोचन

यहाँ आशय यह है—'उद्भिदा यजेत पशुकामः' इस विधिवाक्य में पशुरूप फल को उद्देश्य करके याग का विधान किया गया है। ( फलं प्रति यागविधानम् = पशुरूप फलोद्देशेन यागस्य विधानम् ) और उस याग को उद्देश्य करके खनित्र ( = उद्भिद् ) रूपी गुण का विधान है ( तं च प्रति गुणविधानम् = तं च यागम्प्रति गुणस्य उद्भिद्-रूपस्य खनित्रस्येत्यर्थः विधानम् ) इस प्रकार एक ही "उद्भिदा यजेत पशुकामः" दो वाक्यों का—(१) 'उद्भिदा = खनित्रेण यागं भावयेत्' (२) 'यागेन पशुं भावयेत्' का बोधक होता है अतः इस प्रकार की व्याख्या मानने पर वाक्यभेद रूप दोष अपरिहार्य होगा। इस दोष से मुक्त होने के लिये 'सोमेन यजेत' की तरह प्रकृत वाक्य को भी विशिष्ट विधि का उदाहरण मान लेना चाहिए। तब उद्भिदा यजेत पशुकामः वाक्य से 'गुण विशिष्ट कर्म का विधान' ( = गुणेन उद्भिदा खनित्रेणेत्यर्थः विशिष्टं यत् कर्म यागरूपं तस्य विधानम् ) होगा और वाक्य का बोध मत्वर्थलक्षणा का आश्रय करके 'पशुकामः उद्भिद्वता यागेन पशुं भावयेत्' इस प्रकार होगा। परन्तु मत्वर्थलक्षणा भी 'पददोष' में परिगणित है। अन्ततः सिद्धान्ती 'मत्वर्थलक्षणा के भय से 'उद्भिद् को यागनामधेय मानकर 'उद्भिन्नामकेन यागेन पशुं भावयेत्' यह अर्थ निश्चित करता है। यहाँ याग एवं उद्भिद में सामानाधिकरण्य भी हैं।[2]

---

१. तद्व्यपदेशं च'—जै० सू० १.४.५. 'एतेन श्येनादिना प्रसिद्धेन यस्य व्य-देश तच्च कर्मनामधेयम्। उपमानं वि शब्दो भिन्नार्थकः। अपदेशः निर्देशः कथन-मिति यावत्। तस्मात् श्येनादः प्रस्तुतकर्मणो व्यपदेशात् भिन्नत्वेन कथनम्।

२. 'सामानाधिकरण्यस्य निर्णायकत्वात्। 'उद्भिद्नामकेन यागेन फलं कुर्यात्' इत्युक्ते सामानाधिकरण्यं लभ्यते। गुणत्वे तु खनित्रेण साध्येन यो यागः, तेन—इत्येवं वैयधिकरण्यं स्यात्। यदि 'खनित्रवता यागेन' इति सामानाधिकरण्यं योज्येत, तदा मत्वर्थलक्षणा प्रसज्येत। तस्माद् उद्भिदादिपदं नामधेयम्।

जै० सू० १-४-२, जैमिनीन्यायमाला भी ( पृ० ४१–४२ ) द्रष्टव्य है।

### वाक्यभेदभयान्नामधेयत्वम्

'चित्रया यजेत पशुकामः' इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात्। तथा हि—न तावदत्र गुणविशिष्टयागविधानं सम्भवति। 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यनेन गुणस्य विहितत्वात् तद्विशिष्टयागविध्यनुपपत्तेः। यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः। तस्माच्चित्राशब्दः कर्मनामधेयम्। तथा च 'चित्रायागेन पशुं भावयेत्' इति सामानाधिकरण्येनान्वयान्न वाक्यभेदः। प्रकृतेष्टेरनेकद्रव्यवत्त्वेन चित्राशब्दवाच्यत्वोपपत्तिः।

### अर्थालोकः

नामधेयत्वे द्वितीयं निमित्तमुदाहरति—**चित्रयेति**। अत्र रूढा एव शब्दा उदाहरणम्। नानाद्रव्यकत्वाच्चित्रासंज्ञकयेष्टया पशून् भावयेदिति वाक्यस्यार्थः। ननु वाक्यभेदभयात् किमिति चित्रापदं नामधेयमित्युच्यते। चित्राशब्दस्तु लोके गुणविशेषे रूढः, तादृशगुणविशिष्टं कर्म विधीयताम्। यदि चात्र मत्वर्थलक्षणाभीतिस्तर्हि यस्मिन् कर्मणि द्रव्यमपि प्राप्तं तत्र तदनुवादेन चित्रत्वरूपो गुणो विधीयताम्, प्राप्तोद्देशेन गुणमात्रविधाने वाक्यभेदोऽपि न भवतीति शङ्कामनूद्य निराकर्तुमारभते—**न तावदिति**। **गुणविशिष्टेति**। चित्रत्वस्त्रीत्वावच्छिन्नद्रव्यविशिष्टयागविधानमित्यर्थः। न चोद्भिन्न्यायेन मत्वर्थलक्षणापत्तिः, तन्न्यायस्य यौगिकशब्दविषयत्वात्। विशिष्टविधानाभावे हेतुमाह—**दधीति**। **मधु** माक्षिकम्। **धानाः** भ्रष्टा यावास्तण्डुला वा। **तत्संसृष्टं** पूर्वोक्तसप्तद्रव्यसंसृष्टम्। **प्राजापत्यम्** प्रजापतिदेवताकम्। दध्यादिसप्तद्रव्यविशिष्टप्रजापतिदेवताकयागेनेष्टं भावयेदिति वाक्यार्थः। नन्वत्र यजतिपदश्रवणाभावात् कथं तद्द्रव्यविशिष्टयागबोध इति चेच्छृणु, 'प्राजापत्यम्' इति तद्धितेन द्रव्यदेवतासम्बन्धस्य प्रतीयमानत्वात् द्रव्यदेवतासम्बन्धस्यैव च यागरूपत्वात् पूर्वोक्तसप्तद्रव्यविशिष्टयागबोध इति। अस्तु दध्यादिवाक्यस्य गुणविशिष्टयागविधायकत्वम् प्रकृतचित्रावाक्यस्य विशिष्टकर्मविधायकत्वे को दोष इत्यत आह—**गुणस्येति**। प्रकृतदध्यादिवाक्यविहितस्य फलसंबन्धबोधनाय प्रवृत्तमिदमधिकारवाक्यम्। तत्र गुणस्य प्राप्तत्वात् पुनरनेन विशिष्टविधानं कस्मै प्रयोजनाय स्यादिति भावः। विशिष्टकर्मान्तरविधाने नानादृष्टकल्पनाप्रसङ्गः, प्रकृतदध्यादिवाक्यविहितकर्मणो विश्वजिन्न्यायेन फलकल्पनाप्रसक्तिश्च स्यात्। तदिदमाह—**विशिष्टयागेति**। ननु मास्तु विशिष्ट-

विधानम्। प्राप्तस्यापि कर्मणः पुनर्गुणविशिष्टत्वेन फलोद्देशेन विधानमस्त्विव-त्यत आह—**यागस्येति। वाक्यभेद इति।** ननु 'राजा राजसूयेन स्वाराज्य-कामो यजेत' इत्यत्रानुमत्यादिवाक्यविहितकर्मण एव राजकर्तृकत्वेन फलो-द्देशेन विधानमङ्गीकृतम् तद्वत् दध्यादिवाक्येन प्राप्तस्यापि कर्मण चित्रत्वगुण-विशिष्टतया फलोद्देशेन विधानमस्तु कुतो वाक्यभेदः। यद्यत्र वाक्यभेदस्तर्हि राजसूयवाक्ये का गतिः? तत्र या गतिः सैवात्रापीष्यताम् इति चेन्न; वैषम्यात्। राजसूयवाक्ये राजा प्रयोगान्वयी, राज्ञः प्रयोगान्वयिगुणत्वात्। तत्रोत्पन्नस्यापि कर्मणः पुनः प्रयोगविधिरङ्गीकृतः। चित्रत्वस्य तु न प्रयोगा-न्वयित्वम्। अतोऽत्र तद्विशिष्टप्रयोगविधिर्न सम्भवतीत्युभयभिधाने वाक्यभेदो दुष्परिहर इति भावः। उपसंहरति—**तस्मादिति।** चित्रति नाम्नस्सङ्गतिं प्रदर्शयति—**प्रकृतेष्टेरिति।** नानाद्रव्यकत्वाच्चित्रेति नामोपपत्तिरित्यर्थः।

**अनुवाद**—'चित्रया यजेत पशुकामः'[1] में 'वाक्यभेद' के भय से चित्रा शब्द याग का 'नामधेय' है। परन्तु यहाँ 'चित्रा' शब्द को गुणवाची मानकर 'चित्रवर्ण रूप' गुण विशिष्ट याग का विधान नहीं होता है क्योंकि 'दधि मधुपयो……'[2] आदि वाक्य से गुण का पहले से विधान है अतः गुण विशिष्ट याग की नहीं हो सकती है। यदि याग में पशु-रूप फल[3] के सम्बन्ध का एवं चित्रवर्णरूप गुण[4] के सम्बन्ध का विधान करने पर वाक्य-भेद[5] हो जायगा। अतएव चित्रा शब्द याग विशेष का नाम है। तब 'चित्रा याग से पशु की भावना करें यहाँ 'चित्रा' एवं 'याग' का समानाधिरण्य से अन्वय होगा अतः वाक्य भेद (दोष) नहीं है। चित्रायाग दध्यादि अनेक द्रव्यों से होता है। अतः 'चित्रा' शब्द का अर्थ (वाच्य) भी सिद्ध हो जाता है।

## अर्थालोकलोचन

'मत्वर्थलक्षणा' को पद दोष माना गया है अतः उससे निवृत्ति हेतु 'उद्भिदा……' को नामधेय मानना पड़ता। इस प्रसङ्ग की चर्चा अव्यवहित पूर्व में हुई हैं। वाक्यभेद-

---

१. 'पशुरूप फल की प्राप्ति करने के इच्छुक व्यक्ति को 'चित्रा' याग का अनुष्ठान करना चाहिए'।

२. 'दधि मधु' इत्यादि का अर्थ है कि दधि, मधु, दुग्ध, घृत, धान, जल और चावल इन द्रव्यों से युक्त प्रजापति देवताक याग होता है। अतः दध्यादि गुण का विधान इस वाक्य से प्राप्त है।

३. 'यागस्य फल सम्बन्धे'।

४. '(यागस्य) गुणसम्बन्धे विधीयमाने।

५. (क) 'यागेन पशुं भावयेत' (अत्र यागस्य फलसम्बन्धो विहितः)
(ख) 'दध्यादिचित्ररूपेण (चित्रया) गुणेन यागं भावयेत' (अत्र गुणसम्बन्धो यागस्य विहितः)

जन्य दोष के परिहार के लिये 'चित्रया यजेत पशुकामः' को भी नामधेय मानने का विवेचन प्रस्तुत सन्दर्भ में उपन्यस्त किया गया है

पूर्वपक्षी का कथन है कि 'सोमेन यजेत' 'उद्भिदा यजेत पशुकामः' 'चित्रया यजेत पशुकामः' सामान्यतः एक जैसे हैं। 'सोमेन यजेत' इस वाक्य में 'मत्वर्थलक्षणा' का आश्रयण 'वाक्य दोष' से बचने के लिये, इससे पूर्व विवेचित किया है। इसे गुणविशिष्ट विधि मानकर 'सोमवता यागेनेष्टं भावयेत्' इस प्रकार का अर्थ मीमांसक सम्मत है यह भी निरूपित हुआ है। अतः वाक्य भेदजन्यदोष के परिहार हेतु 'चित्रया यजेत पशुकामः' में चित्रापद को नामधेय न मानकर 'गुण विशिष्ट कर्म विधि' ही मानना ठीक होगा।

सिद्धान्ती इस समाधान से सहमत नहीं है। क्योंकि उसके मत में यहाँ गुणविशिष्ट विधि नहीं हो सकती। **( न तावदत्र गुणविशिष्टयागविधानं सम्भवति )**। गुणविशिष्ट विधि होने के लिए यह आवश्यक है कि याग एवं द्रव्य दोनों ही 'अप्राप्त' हों।[1] परन्तु 'चित्रया यजेत पशुकामः' वाक्य में 'चित्र वर्ण रूप गुण विशिष्ट' याग का विधान इस लिये सम्भव नहीं है क्योंकि 'दधि मधु पयो·······प्राजापत्यम्' इत्यादि विधान से गुण एवं प्रजापति देवता विहित है[2] अतः गुणविशिष्ट याग का विधान यहाँ नहीं है।

यदि यह माना जाय कि 'चित्रया यजेत पशुकामः' से 'याग' एवं 'गुण' दोनों का विधान है तो वाक्यभेद होगा।[3] क्योंकि दो विधायक वाक्य होंगे-'यागेन पशुं भावयेत्' तथा 'चित्रया दध्यादि चित्ररूपेण गुणेन यागं भावयेत्'। अतः 'चित्रा' पद याग का 'नाम' ही मानना ठीक है। इससे 'चित्रा' एवं याग में सामानाधिकरण्य भी बना रहेगा।

'प्रकृतेष्टे——वाच्यत्वोपपत्तिः' वाक्य द्वारा ग्रन्थकार ने 'चित्रा' शब्द के वाच्यार्थ पर विचार किया है। 'चित्रा' का तात्पर्य 'अनेक द्रव्यों' से है। इस याग में 'दध्यादि' अनेक द्रव्यों का विधान है अतः यह याग 'अन्वर्थनामा' है।

## तत्पख्यशास्त्रान्नामधेयत्वम्

'अग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्। तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वात्, अग्निहोत्रशब्दः कर्मनामधेयमिति यावत्।

नन्वयं गुणविधिरेव कुतो नेति चेत् न ; यदि 'अग्नौ होत्रमस्मिन्' इति सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निरूपो गुणो विधेयस्तदा 'यदाहवनीये जुहोति' इत्यनेनैवाग्नेः प्राप्तत्वात्तद्विधानानर्थक्यम्।

---

१. 'यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते। यथा **'सोमेन यजेत'** इत्यत्र सोमयागयोरप्राप्तत्वात् **सोमविशिष्टयागविधानम्।'**

२. '·········गुणस्य विहत्तत्वात्तद्विशिष्टयागविध्यनुपपत्तेः।'

३. 'यागस्य फलसम्बन्धे गुणसम्बन्धे च विधाने ( = फलं प्रति यागविधानं तं प्रति च गुणविधानम् ), वाक्यभेदः।'

'अग्नये होत्रमस्मिन्' इति चतुर्थीसमासमाश्रित्य अग्निदेवतारूप-गुणोऽनेन विधीयत इति चेत्—न; तद्देवतायाः शास्त्रान्तरेण प्राप्तत्वात्।

## अर्थालोकः

तत्प्रख्यं तृतीयं निमित्तमुदाहरति—**अग्निहोत्रमिति**। **तस्य गुणस्य** पूर्वपक्षे यो गुणो विधित्सितस्तस्येत्यर्थः। गुणस्य शास्त्रान्तरेण प्राप्तौ सत्यां पुनरनेन तस्य विधानमसङ्गतम् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्। अतः कर्मनामधेयमिति भावः। पूर्वपक्षिणा को गुणोऽत्र विधित्सितः, किं वा तस्य प्रापकं शास्त्रमन्यत्? इति विषयशोधनाय शङ्कते—**नन्विति**। अग्निहोत्रपदस्य गुणसमर्पकत्वमङ्गीकुर्वता पूर्वपक्षिणा किं सप्तमीसमासोऽङ्गीक्रियते—अग्नौ होत्रमस्मिन्निति, उत चतुर्थीसमासोऽङ्गीक्रियते—अग्नये होत्रमस्मिन्निति? तत्राद्यं निराकरोति—**यद्यग्नावित्यादिना**। **होमाधारत्वेन** देवतोद्देश्यकद्रव्यप्रक्षेपोऽत्र होमपदार्थः, तदाधारत्वेनेत्यर्थः। अधिकरणरूपोऽग्निरिति यावत्। तदस्य प्रापकं शास्त्रं निर्दिशति—**यदाहवनीय** इति। इदं हि वाक्यं होमत्वावच्छिन्नोद्देशेनाहवनीयाख्यमग्निमधिकरणत्वेन विदधाति। अनेन विधित्सितगुणस्य प्राप्तत्वादग्निहोत्रपदेन तद्विधानमनर्थकमित्याह—**तद्विधानेति**। द्वितीयं पक्षं निराकरोति—**अग्नय** इति। अत्र विधेयं गुणमाह—**अग्निदेवतेति**।

**अनुवाद**—'तत्प्रख्यशास्त्र' द्वारा 'अग्निहोत्रं जुहोति' वाक्य में अग्निहोत्र शब्द कर्म विशेष का नाम है। क्योंकि उस गुण का (=तस्य गुणस्य) प्राप्ति कराने वाला शास्त्र (= प्रख्यापकस्य = प्रापकस्य शास्त्रस्य) विद्यमान कर्म है अतः 'अग्निहोत्र' शब्द याग का नाम होता है।

(शङ्का यह है कि)—'अग्निहोत्रं....' को गुणविधि (गुण का विधायक) क्यों न स्वीकार किया जाय? (समाधान यह है कि) यदि अग्निहोत्र शब्द में ('अग्नौ होत्रं अस्मिन्' इस विग्रह को मानकर) सप्तमी तत्पुरुष समास मानकर होम का आधार अग्नि रूप गुण का विधान माना जाय तो 'यदाहवनीये जुहोति' से 'अग्नि' में प्राप्त होनेवाला सप्तम्यन्त ('अग्नौ') पद निरर्थक हो जायगा।[1] 'अग्नये होत्रमस्मिन्' इस तरह चतुर्थी समास स्वीकार कर अग्निरूप देवता का भी विधान नहीं किया जा सकता क्योंकि अग्निरूव देवता की प्राप्ति दूसरे वाक्य से विहित है (अतः अग्निहोत्र नामधेय है)।

## अर्थालोकलोचन

'तत्प्रख्यशास्त्र' नामधेय मानने में तीसरा हेतु है। 'अग्निहोत्रं जुहोति' इस वाक्य को दृष्टान्त मानकर 'तत्प्रख्य शास्त्र' का स्वरूप समझाया गया है। लौगाक्षि भास्कर ने

---

१. **तद्विधानानर्थक्यम्** = तस्य अग्नेः अग्निरूपगुणस्य वा विधानस्य आनर्थक्यम् विफलता।

'तत्प्रख्यशास्त्र' का तात्पर्यार्थ समझाते हुये लिखा है—'तस्य गुणस्य प्रख्यापकस्य = प्रापकस्य शास्त्रस्य विद्यमानत्वात्'। इस कथन का अभिप्राय यह है कि यदि गुण का विधान किसी अन्य शास्त्रीय वाक्य से किया गया हो तो, उस स्थिति में जिस विधि वाक्य पर विचार किया जा रहा हो उसमें गुणबोधक शब्द को कर्म का 'नामधेय' मान लिया जाना मीमांसासिद्धान्त 'तत्प्रख्यशास्त्र' से संगत है।

'अग्निहोत्रं जुहोति' में पूर्वपक्ष की दृष्टि से 'अग्निहोत्रम्' का अर्थ 'अग्निरूप' है। जिसका आधार इस पद की दो प्रकार से विग्रह की सम्भावना है। विग्रह का रूप यह है—

(१) 'अग्नौ होत्रम् अस्मिन्'—होमाधार रूप में अग्नि को गुण मानना।

(२) 'अग्नये होत्रम्'—देवतारूप में अग्नि को गुण मानना।

परन्तु सिद्धान्ती उपरि लिखित समाधान से इसलिये सहमत नहीं है क्योंकि 'अग्नि' का होमाधाररूप में विधान 'यदाहवनीये जुहोति' से तथा देवतारूप में विधान 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इस वाक्य से पूर्वतः प्राप्त है। विहित का विधान भी शास्त्रसम्मत नही है। अतः 'अग्निहोत्र' नामधेय है।

## अग्निदेवताप्रापकशास्त्रान्तरविचारः

किं तच्छास्त्रान्तरमिति चेत्। 'यदग्नये च प्रजापतये च सायं जुहोति' इति केचित्। अपरे तु 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रवर्ण एवाग्निरूपदेवताप्रापकः।

नन्वग्नेर्मान्त्रिवर्णिकत्वे प्रजापतिदेवतया बाधः स्यात्, मन्त्रवर्णस्य चतुर्थीतो दुर्बलत्वात्। यथाहुः—

'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परम्॥'

इति चेत्—न; 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यत्र न केवलं प्रजापतिविधानम्, किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः। एवं च न बाधः, केवलप्रजापतिविधानाभावात्। न चात्र समुच्चितोभयविधानमेव कथं नेति वाच्यम्, समुच्चितोभयविधानापेक्षयान्यतः प्राप्तमग्निमनूद्य तत्समूच्चितप्रजापतिमात्रविधाने लाघवात्।

एवं प्रयाजेषु समिदादिदेवतानां 'समिधः समिधो अग्न आज्यस्य व्यन्तु' इत्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात्, 'समिधो यजति' इत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयम्।

## अर्थालोकः

किमत्र शास्त्रान्तरं येन देवतायाः प्राप्तिरुच्यत इति पृच्छति—**किं तदिति**। उत्तरमाह—**यदग्नय** इति। **केचित्** सोमेश्वरभट्टप्रभृतयः। नन्वस्य वाक्यस्याग्निप्रापकत्वं न सङ्गच्छते, 'अग्नये' इतिवत् 'प्रजापतये' इति प्रजापतेरपि निर्देशात्। भवतु किं ततः? प्रजापतेरपि विधाने वाक्यभेदापत्तेः। दोषदुष्टस्य वाक्यस्य कथं तत्प्रख्यत्वमिति चेद्—ब्रूमः, परस्परनिरपेक्षविधाने सत्यं वाक्यभेदस्स्यात्, अत्र तु सापेक्षयोरेव द्वयोर्विधानम्। कथं परस्पर-सापेक्षत्वम्? चशब्दश्रवणात्। चशब्दस्य निपातत्वात् सुबन्तार्थस्य निपातार्था-न्वयव्युत्पत्तेः न सापेक्षानेकविधानं दोषायेति।

मतान्तरेण देवताप्राप्तिं निरूपयति—**अपरे** इति। पार्थसारथिप्रभृतय इत्यर्थः। अग्निप्रापकशास्त्रं मन्त्रवर्णरूपमित्याह—**मन्त्रवर्ण** इति। यद्यपि मन्त्र-वर्णस्य देवताबोधकत्वं न क्वचिदुपदिष्टम्, तथापि सिद्धेन मन्त्रवर्णकल्प्येन वा विनियोगविधिना मन्त्राणां प्रधानाङ्गत्वे ज्ञाते तदन्यथानुपपत्त्या तत्प्रतिपाद्य-स्याग्न्यादेर्देवतात्वं कल्प्यत इति ज्ञेयम्। ननु 'यदग्नये चे'ति वाक्येन प्राप्त-प्रजापतिदेवतया मान्त्रवर्णिकाग्नेर्बाधः कथं न भवेत् इति शङ्कते—**नन्विति**। तत्र हेतुः—**दुर्बलत्वादिति**। प्रजापतेः चतुर्थ्या देवतात्वम्, अग्नेश्च मन्त्रवर्णेन देवतात्वं कल्प्यमिति प्रबलदुर्बलभावः। अत्र वार्तिकसम्मतिमाह—**यथाहुरिति**। अतोऽग्नेर्बाधितत्वात्कथं मन्त्रवर्णस्य तत्प्रख्यत्वमिति शङ्का। उत्तरमाह—**नेति**। 'यदग्नये चे'ति वाक्ये 'अग्नये' इति पदं मन्त्रवर्णप्राप्ताग्नेर-नुवादकम्। अनूदिताग्निना सह प्रजापतेर्विधानात् न बाध इत्याह—**केवलेति**। यद्यपि चतुर्थीमन्त्रवर्णयोः प्रबलदुर्बलभावो वर्तते, मन्त्रवर्णापेक्षया चतुर्थी प्रबला तथापि नाग्नेः प्रजापतिना बाधः। विधीयमानस्तु प्रजापतिः मन्त्रवर्णतः प्राप्तमग्निं 'अग्नये' इति पदेनानूद्य तत्समुच्चितस्य प्रजापतेर्होमोद्देशेन विधान-मित्यर्थः। **प्रजापतिविधानेति**। प्रजापतिमात्रविधानाभावादित्यर्थः। ननु आग्निसमुच्चितप्रजापतेर्विधाने प्रकृतहोमेऽग्नेरपि देवतात्वं नापैति। अग्नि-रप्यत्र देवतेति स्वीकर्तव्यम्। तत्र प्रमाणान्तरप्राप्तमग्निमनूद्य तत्समुच्चित-प्रजापतेर्विधानापेक्षयानेनैव वाक्येन समुच्चितयोरग्निप्रजापत्योरेव विधानं स्वीक्रियताम्, किमनुवादकक्लेशाश्रयणेनेत्याशङ्क्य परिहरति—**न चेति**। समुच्चितोभयविधानपक्षे प्रजापतिविशेषणतयाग्नेरपि विधाने वाक्यभेदस्स्यादिति मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेर्विधानेऽन्यांशे विधेर्व्यापाराभावा-ल्लाघवमित्याह—**लाघवादिति**। एवं विधाने नाग्नेः प्रजापतिना बाध इति

भावः । तत्प्रख्यन्यायमन्यत्राप्यतिदिशति—**एवं प्रयाजेष्विति** । तत्रापि समिदादि-पदैर्विधित्सितानां समिदादिदेवतानां प्रापकं मन्त्रवर्णं प्रदर्शयति—**समिध** इति । अतः 'समिधो यजति' 'तनूनपातं यजति' इत्यादिवाक्येषु समिदादिपदानि कर्म-नामधेयानि तत्प्रख्यशास्त्रादिति निगमयति—**कर्मनामधेयमिति** ।

**अनुवाद**—प्रश्न यह है कि अग्नि देवता का प्रापक शास्त्र कौन सा है ? कुछ विचारकों का मत है कि 'यदग्नये च प्रजापतये च सायं जुहोति' यह अग्नि देवता का प्रापक शास्त्रान्तर है । दूसरे लोगों का मत है कि 'अग्निर्ज्योतिरग्निः स्वाहा' यह मन्त्र वर्ण ( मन्त्राक्षर ) ही अग्नि देवता का प्रापक शास्त्र हैं ।[1]

( इस प्रसङ्ग में यह शङ्का हो सकती है ) कि यदि मन्त्राक्षरों से ( = मन्त्रवर्ण ) अग्नि की प्राप्ति होगी तो उसका प्रजापति देवता ( = अर्थात् चतुर्थी विभक्ति से प्रयुक्त देवता ) से बाध होगा । क्योंकि मन्त्रवर्ण चतुर्थी से दुर्बल हैं । जैसा कि कुमारिल भट्ट ने कहा है—

देवता का विधान तद्धित, चतुर्थी और मन्त्रवर्ण से होता है और उनमें उत्तरोत्तर पूर्व-पूर्व से दुर्बल है' । परन्तु यह ठीक नहीं है । क्योंकि 'यदग्नये च प्रजापतये च सायं जुहोति' यहाँ केवल 'प्रजापति' का ही विधान नहीं है अपितु मन्त्रवर्ण ( अग्निर्ज्योतिरग्निः स्वाहा ) से प्राप्त अग्नि का अनुवाद करके उस अग्नि सहित ( अग्निसमुच्चित ) प्रजापति का विधान है अतः मन्त्रवर्ण के अभाव में केवल प्रजापति अर्थात् 'यदग्नये…' आदि से विधान सम्भव नहीं है । अतः प्रजापति से मन्त्रवर्ण बाधित नहीं है । यहाँ यह भी कथन समीचीन नहीं है कि 'यदग्नये…' से 'अग्नि' एवं 'प्रजापति' दोनों का ही विधान मान लेना चाहिए क्योंकि दोनों के समुच्चित विधान की अपेक्षा दूसरे वाक्य से प्राप्त अग्नि का अनुवाद करके अग्नि सहित प्रजापति के विधान में लाघव है ।

इसी प्रकार प्रयाजों में गुणरूप समिदादि देवताओं की प्राप्ति 'समिधः समिधो…' आदि मन्त्रवर्णों से होती है । इसलिये 'समिधो यजति' आदि वाक्यों में 'समिद्' आदि **'तत्प्रख्यशास्त्र'** से कर्मनामधेय माने जाते हैं ।

## अर्थालोकलोचन

'अग्निहोत्रं जुहोति' इस वाक्य की चर्चा के प्रसङ्ग में यह निर्णय किया गया है 'अग्निहोत्र' नामधेय हैं क्योंकि इसे 'होम का आधार' या 'देवता रूप में अग्निरूप गुण' का बोधक नहीं माना जा सकता । इस मान्यता की पुष्टि में पिछले सन्दर्भ में पर्याप्त

---

१. 'अग्निहोत्रशब्दस्य कर्मनामधेयत्वं द्वयोरपि ( न्यायसुधाकाराणां मतं 'केचित्' पदेन, पार्थसारथिमिश्राणां मतं 'अपरे' पदेनानूदितिमिह इति ज्ञेयम् ) संमतमेव । विशेषस्त्वग्नेर्देवतात्वप्रापकान्यशास्त्र विषय एव । अग्नये च प्रजापतये च सायं जुहोतीति विधायकब्राह्मणवाक्यादग्नेर्देवतात्वावगतिरिति **न्यायसुधाकाराणां**-मतम् । अग्निर्ज्योतिरिति मन्त्रलिङ्गादेवाग्नेर्देवतात्वप्राप्तिर्यदग्नये च प्रजापतये चेति तु केवलं प्रजापतेरेव देवतात्वविधायकमिति **पार्थसारथिमिश्राणां** मतम् ।

प्रकाश डाला गया है और यह निर्णीत किया गया है कि देवतारूप अग्नि का प्रापक शास्त्रान्तर उपलब्ध है। अतः उस 'शास्त्रान्तर' के वास्तविक स्वरूप के सम्बन्ध में जिज्ञासा होना स्वाभाविक है। इस सम्बन्ध में विद्वानों में मतैक्य नहीं है। प्रसङ्गक्रम से लौगाक्षिभास्कर ने न्यायसुधाकार भट्टसोमेश्वर एवं शास्त्रदीपिकाकार पार्थसारथिमिश्र का मत 'केचित्' एवं 'अपरे' पद संकेत द्वारा उद्धृत किया है। इन दोनों के मत का परिशीलन करना आवश्यक है। प्रथम मतानुसार अग्निदेवता का प्रापक वाक्य **'यदग्नये च प्रजापतये च सायं जुहोति'** है एवं दूसरे पक्ष का **'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा'** माना जाता है। 'अग्निर्ज्योति......' को मन्त्रवर्ण एवं 'यदग्नये च जुहोति......' में 'प्रजापतये' के कारण चतुर्थ्यन्त पद माना गया है। कुमारिलभट्ट ने—

**'तद्धितेन[1] चतुर्थ्यां वा मन्त्रवर्णेन वा पुनः।**
**देवताया विधिस्तत्र दुर्बलं तु परं परमिति॥[2]**

इस कारिका द्वारा यह उपपादित किया है। मन्त्रवर्ण से प्राप्त देवता चतुर्थी से प्राप्त देवता द्वारा बाधित हो जाता है। चतुर्थी विभक्ति से तद्धित प्रबल इसलिये होता है क्योंकि तद्धितान्त में देवता का विधान साक्षात् किया जाता है, चतुर्थ्यन्त में देवता का परम्परा से। परन्तु यह समाधान सिद्धान्ती के द्वारा अनुमोदित नहीं होता है क्योंकि 'यदग्नये प्रजापतये......जुहोति' से केवल प्रजापति का ही विधान मानना ठीक नहीं है अपितु मन्त्रवर्ण से प्राप्त अग्नि का भी अनुवाद मानना चाहिए। आशय यह है कि प्रथमतः 'अग्निर्ज्योति...' इत्यादि मन्त्रवर्ण से अग्नि देवता का विधान होकर तदनन्तर अग्निदेवतायुक्त 'प्रजापति' का विधान 'यदग्नये च प्रजापतये' आदि वाक्य द्वारा सम्पन्न होता है केवल 'यदग्नये च प्रजापतये' द्वारा अग्नि एवं प्रजापति दोनों देवताओं का विधान मानना समुचित नहीं है। क्योंकि इससे एक ही वाक्य द्वारा दो के कार्य का निर्वाह आ जाने पर 'गौरव' होगा तथा 'अग्निर्ज्योति......' इत्यादि मन्त्रवर्ण भी निष्प्रयोजन हो जायगा जो कि शास्त्रसम्मत इसलिये नहीं है क्योंकि कोई भी मन्त्र निरर्थक नहीं है। अतः लाघव की दृष्टि से अग्नि का अनुवाद करके अग्निदेवता युक्त प्रजापति का विधान समुचित है।

---

१. **द्रष्टव्य**—'सा अस्य देवता' ४-२-२४ (इन्द्रो देवता अस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्। **त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च'**। ऐन्द्रो मन्त्रः—सिद्धान्तकौमुदी।

२. इस कारिका का तन्त्रवार्त्तिक (२-२-२३) में उपलब्ध पाठ अधोलिखित है।

'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते।
देवतासंगतिस्तत्र दुर्बलं च परं परम्॥'

अर्थात् देवता का विधान तद्धितान्त, चतुर्थ्यन्त पद एवं मन्त्रवर्ण द्वारा होती है। इसमें उत्तरोत्तर पूर्व-पूर्व से दुर्बल होते हैं।

—कुमारिलभट्ट, तन्त्रवार्तिक २. २. २३

हम पहले देख चुके हैं कि प्रयाजादि यागों का विधान 'प्रयाजाः कर्त्तव्याः' इस वाक्य द्वारा हुआ है और ये 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' रूप में आम्नात है। संशय यह है कि इन वाक्यों में समिधः तनूनपातादि पदों से याग के देवताओं का निर्देश है अथवा ये स्वयं याग विशेष के नाम है। इस संशय का समाधान यह है कि इन यागों के देवतादि का निर्देश 'समिधः समिधोऽग्न आज्यस्य व्यन्तु' इत्यादि मन्त्रवर्ण से पूर्वतः ही प्राप्त है अतः इसको कर्मनामधेय ही मानना चाहिए।[1]

## तद्व्यपदेशेन कर्मनामधेयत्वम्

श्येनेनाभिचरन्यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्। तेन व्यदेशादुपमानात्तदन्यथानुपपत्तेरिति यावत्। तथा हि यद्विधेयं तस्य स्तुतिर्भवति। यद्यत्र श्येनो विधेयः स्यात्, तदार्थवादैस्तस्यैव स्तुतिः कार्या। अत्र 'यथा वै श्येनो निपत्यादत्त' इत्यनेनार्थवादेन श्येनः स्तोतुं न शक्यः, श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात्।

### अर्थालोकः

चतुर्थं नामधेये निमित्तं निरूपयन् तदुदाहरति—**श्येनेनेति**। अभिपूर्वकस्य चरधातोः वैरिमरणानुकूलव्यापारोऽर्थः। तदुत्तरं श्रूयमाणस्य 'लक्षणहेत्वोः क्रियायाः' इति विहितस्य शतृप्रत्ययस्य हेत्वर्थत्वम्। तथा च श्येनसंज्ञकेन यागेन अभिचाररूपं फलं भावयेदिति वाक्यार्थस्सम्पद्यते। निमित्तं निर्दिशति कर्मनामत्वे—**तद्व्यपदेशादिति**। निमित्तं निर्वक्ति—**तेनेति**। विधिविषयिभूतेन गुणेन सहेत्यर्थः। **व्यपदेशात्**—विभिन्नार्थकतया कथनादित्यर्थः। विभिन्नार्थकतया कथनमुपमानस्थल एव भवतीति फलितार्थमाह—**उपमानादिति**। **तदन्यथानुपपत्त्या** उपमानत्वेन कथनानुपपत्त्या। अर्थवादे विधित्सितगुणेन श्येनेन पक्षिणा सह यागस्योपमानोपमेयभावेन कथनानुपपत्त्या श्येनपदं कर्मनामधेयमित्यर्थः। तदुपपादयति—**तथाहीति**। 'विधिना त्वेकवाक्यत्वात्' इत्यादिसूत्रेण विध्यर्थवादयोरेकवाक्यत्वं स्वीकृतमर्थवादानां प्रामाण्यसिद्धये। उभयोरेकवाक्यता तदैव स्याद्यदोभयोरप्येकार्थबोधकत्वम्। विधिरन्यं विधत्ते, अर्थवादश्चान्यं स्तौति इति विभिन्नार्थकत्वे एकवाक्यतैव न स्यात् इत्याह—**यद्विधेयमिति**। **श्येनः** श्येनपक्षी। **तस्यैव** विहितगुणस्यैव। अर्थवादं

---

१. प्रयाजमन्त्रेषु 'समिधो अग्न आज्यस्य व्यन्तु' इत्यादिषु समिदादिशब्दैर्बहुवचनैकवचनान्तैर्देवता निर्दिष्टा......। तस्मान्नात्र देवतासंस्कारविधिः। किन्तु केवला यागा विधीयन्ते।

जैमिनिसूत्र १. २. ५९-६० पर जैमिनीयन्यायमालाविस्तर पृ० ४५४

दर्शयति—**यथा वै** इति। श्येनः पक्षी वियति डयमानः भूमिगतं किञ्चित्खाद्यं मांसखण्डादिकं विलोक्य सहसा निपत्य गृह्णाति यथा, तथायमपि यागोऽरातिं निपत्य गृह्णातीत्यर्थवादार्थः। **श्येनः** पक्षी। स्तवनाशक्यत्वे हेतुः—**श्येनोपमानेनेति।** अर्थान्तरस्य यागस्य स्तुतिः तस्याः। अर्थवादे 'एवमयम्' इतीदं शब्दार्थो विधेयः, तस्यैव श्येनेन सहोपमेयभाव उच्यते। स च सादृश्यघटितो भेदं विना न सम्भवतीति श्येनापेक्षयार्थान्तरमेव किञ्चित् स्तूयत इत्यवश्यं वक्तव्यमित्याशयः। **भिन्ननिष्ठत्वादिति।** उपमानं प्रसिद्धं भवति, उपमेयश्चाप्रसिद्धः। प्रसिद्धाप्रसिद्धत्वे मिथो विरुद्धे। विरुद्धयोरनयोर्धर्मयोरेकत्र समावेशः नोचितः। अतो भिन्ननिष्ठत्वमित्यर्थः। एवञ्च विधिगतश्येनपदस्य यागपरत्व एवार्थवादेन समर्प्यमाणा स्तुतिराञ्जस्येनोपपद्यत इत्याह—**यदा त्विति।** पूर्वोक्तनिमित्तत्रयप्रयुक्तनामत्वं श्येनशब्दस्य न भवितुमर्हतीत्याह—**तद्व्यपदेशादिति।** उद्भिन्न्यायस्तु यौगिकेष्वेव शब्देषु प्रवर्तते, श्येनशब्दस्तु रूढः, अतो न उद्भिन्न्यायः। चित्रान्यान्योऽपि न प्रवर्तते, तत्र यागविधायकं वाक्यान्तरं 'दधिमध्वि'ति पृथगस्ति, अत्र चेदमेवैकं श्येनविधायकमिति नात्र वाक्यभेदभीतिः। न चापि तत्प्रख्यन्यायः तादृशप्रख्यापकशास्त्राभावात्। अतस्तद्व्यपदेशादेव नामत्वं श्येनपदस्येति भावः।

**अनुवाद**—'श्येनेनाभिचरन् यजेत' इस वाक्य में 'तद्व्यपदेश[1]' रूप निमित्त से 'श्येन' शब्द याग का नाम है। (तद्व्यपदेश का तात्पर्य यह है कि) उस गुण से उपमान होने का कथन होने से 'श्येन' शब्द को यागवाची बिना स्वीकार किये उपमान की उपपत्ति सम्भव नहीं है। (भाव यह है) जो (अर्थ) विधेय होता है उसकी (अर्थवाद से) स्तुति की जाती है। यदि यहाँ (प्रकृत उदाहरण में) श्येन का विधान होता (विधेय) तब अर्थवाद द्वारा श्येन पक्षी की ही स्तुति होनी चाहिये थी। परन्तु यहाँ 'यथा वै श्येनो निपत्यादत्ते एवमयं……' (अर्थात् जैसे श्येन (मत्स्यादि) जन्तु पर झपट कर उनका नाश करता है वैसे ही श्येन याग शत्रुता करने वाले भ्रातृव्यों का नाश करता है।[2] इस अर्थवाद वाक्य से श्येन पक्षी की स्तुति नहीं कर सकते, क्योंकि श्येन की उपमा से

---

१. तद्व्यपदेशात् :—'तच्छब्देन यस्मिन् गुणोपदेश इति प्रकृतो गुणो निर्दिश्यते। विशब्दश्च भिन्नार्थकः। ततश्च तस्माद् विधेयत्वाभिमताद् गुणाद् व्यपदेशः भेदेन निर्देशः।'

'शास्त्रदीपिका पर सोमनाथ कृत मयूखमालिका' जै० सू० १।४।५

२. 'यथा वै श्येनो निपात्यते……' इति वाक्येन उक्त उपमानोपमेयभावः पक्षिण्येकस्मिन् न युज्यते। तस्मात् पक्षिण उपमानस्य गुण उपमेये कर्मणि अस्ति इति श्येनशब्दस्य अभिचारकर्मनामधेयत्वम्।'

—जैमिनीन्यायमालाविस्तर, पृ० ४६-४७ जै० सू० १।४।५

दूसरों की स्तुति की जाती है। श्येन की उपमा से श्येन की स्तुति नहीं कर सकते क्योंकि उपमान और उपमेय में भिन्नता रहती है। जब श्येन संज्ञक याग का विधान होता है तब अर्थवाद रूप से श्येन पक्षी की उपमा से श्येन याग की भी स्तुति कर सकते हैं। अतः 'तद्व्यपदेश' रूप से 'श्येन' याग का नाम है।

## अर्थालोकलोचन

'तत्प्रख्यशास्त्र' द्वारा 'अग्निहोत्रं जुहोति' में कर्मनामधेयत्व की स्थापना करके अर्थसंग्रहकार क्रमप्राप्त 'तद्व्यपदेश' द्वारा नामधेय का निर्णय करने में प्रवृत्त हो रहे हैं। 'तद्व्यपदेशात्' का पदार्थ विवेचन करते हुये ग्रन्थकार ने लिखा है—

'तेन व्यपदेशादुपमानात्………'।

'श्येनेनाभिचरन्[1] यजेत' इस दृष्टान्त में 'श्येन' शब्द का लौकिक व्यवहार में 'बाज पक्षी' अर्थ है परन्तु शास्त्रीय दृष्टि से 'श्येन' याग विशेष का नाम है। यहाँ प्रश्न यह है कि श्येन का अर्थ 'बाज पक्षी' मानने में हानि क्या है? इसका उत्तर है 'न च श्येनोपमानेन स एव स्तोतुं शक्यते, उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्।' अर्थात् श्येन की उपमा देकर उसी श्येन की अर्थवाद द्वारा स्तुति नहीं हो सकती क्योंकि उपमान एवं उपमेय भाव दो भिन्न पदार्थों में रहती है—एकनिष्ठ नहीं हो सकता। इस पङ्क्ति का आशय यह है—

अर्थवाद वाक्य में प्रयुक्त 'श्येन' शब्द की तरह यदि विधिवाक्य में प्रयुक्त श्येन शब्द का भी अर्थ बाज पक्षी स्वीकार किया जायेगा तो उस स्थिति में 'श्येन से श्येन की स्तुति' रूप वाक्यार्थ होगा। परन्तु सैद्धान्तिक दृष्टि से उपमान एवं उपमेय भिन्न-भिन्न होते हैं—अतः निष्कर्ष यह निकलता है कि अर्थवाद वाक्य 'यथा वै **श्येनो** निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' में श्येन शब्द गुणवाचक नहीं है। इस तरह दोनों में उपमान उपमेय भाव की सिद्धि भी हो जाती है। अर्थात् अर्थवादवाक्य में व्यवहृत 'श्येन' शब्द रूपी उपमान से श्येन नामक याग रूपी उपमेय की प्रशंसा की जा सकती है।[2] अतः 'तद्व्यपदेश' न्याय से श्येन शब्द याग का नामधेय है।

## नामधेयत्वे उत्पत्तिशिष्टगुणबलीयस्त्वं न निमित्तान्तरम्

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयमिति केचित्। यथा, 'वैश्वदेवेन यजेत' इत्यादौ। अत्रोत्पत्तिशिष्टाग्न्यादीनां बलीयस्त्वाद्वैश्व-

१. **अभिचरन्**—'अभि पूर्वक' चरधातोः वैरिमरणानुकूलो व्यापारोऽर्थः, तदुत्तरं श्रूयमाणः 'लक्षणहेत्वोः क्रियायाः' इति सूत्रेण विहितः शतृप्रत्ययो हेत्वर्थकः, हेतुरत्र फलरूपो विवक्षितः, एवञ्च श्येनसंज्ञकेन यागेन अभिचाररूपफलं भावयेत्—' इति विषयवाक्यार्थः।

—सारविवेचिनी, पृ० १४५.

२. 'यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यते।' अर्थसंग्रह—

देवशब्दस्य विश्वदेवदेवताविधायकत्वं न सम्भवतीति कर्मनामधेयत्वम्।

वस्तुतस्तु तत्प्रख्यशास्त्रादेवास्य कर्मनामधेयत्वम्, प्रकृतयागे विश्वदेवरूपगुणसम्प्रतिपन्नशास्त्रस्यार्थवादरूपस्यैव सत्त्वात्। 'यद् विश्वेदेवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्वम्' इति।

## अर्थालोकः

नामधेयत्वे केषाञ्चिदभिमतं पञ्चमं प्रकारं वर्णयति—**उत्पत्तीति**। उत्पत्तिवाक्यमित्यर्थः। तेन शिष्ट उपदिष्टो गुणः, तस्य बलीयस्त्वं नामधेये निमित्तमित्यर्थः। कर्मोत्पत्तिवाक्ये कर्मणा सह उपदिष्टो गुण उत्पत्तिशिष्टः, तत्रोत्पन्नवाक्येन शिष्टस्य गुणस्य निवेशासम्भवादुत्पन्नवाक्यगतं पदं नामधेयं भवतीति भावः। तदुदाहरति—**वैश्वदेवेनेति**। चातुर्मास्येषु सन्ति चत्वारि पर्वाणि-वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयश्चेति। तेषु प्रथमे पर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्' इत्यष्टौ प्रधानयागान् विधाय श्रुतम्—'वैश्वदेवेन यजेत' इति। आग्नेयादिषूत्पत्तिवाक्येषु तद्धितान्तैशशब्दैः द्रव्याणि देवताश्च विहिताः। तत्र वैश्वदेवशब्दोऽष्टानामपि कर्मणां नामधेयमिति सिद्धान्तः। नामधेयत्वे प्रवृत्तिनिमित्तञ्चोत्पत्तिशिष्टगुणबलीयस्त्वम्। तत्र तत्रोत्पत्तिवाक्येष्वग्न्यादयो देवता उपदिष्टाः। तासु विद्यमानासु उत्पन्नशिष्टवाक्येन 'वैश्वदेवेन यजेत' इत्यनेन विश्वेदेवरूपदेवता विधातुं न शक्यते उत्पत्त्युत्पन्नशिष्टयोरुत्पत्तिशिष्टस्य बलींयस्त्वादित्युपपादयति—**अत्रेत्यादिना**। **बलीयस्त्वादिति**। उत्पत्तिशिष्टगुणावरुद्धे कर्मण्युत्पन्नशिष्टगुणानां निवेशासम्भवादिति न्यायादित्यर्थः। न च पूर्वोक्तनिमित्तचतुष्टयान्यतमेनास्य गतार्थता भवतु किमतिरिक्तनिमित्तस्वीकारेणेति वाच्यम्। तत्र न तावन् मत्वर्थलक्षणाभीत्या उद्भिच्छब्दस्येव वैश्वदेवशब्दस्य नामत्वं भवितुमर्हति, 'वैश्वदेवेन' इति तद्धितान्तशब्देन मत्वर्थस्याभिहितत्वात्। विश्वेदेवा देवता अस्येति वैश्वदेवशब्दस्य व्युत्पत्तिः। अत्रास्यशब्देन सर्वनाम्ना प्रकृतयागोऽभिधीयत इति न लक्षणाया आवश्यकता। नापि वाक्यभेदभीत्या चित्राशब्दस्येवात्र नामत्वम्, एकस्यैव विश्वेदेवदेवतारूपस्य गुणस्य पूर्वपक्षे विधानात्, चित्रत्वस्त्रीत्वयोरिव गुणद्वयस्याविधानात्। न चापि तत्प्रख्यशास्त्रान्नामत्वम्, अत्र वैश्वदेववाक्ये विधित्सितगुणस्य विश्वेदेवदेतारूपस्य प्रापकशास्त्रान्तरस्यासत्वात्। यद्यपि 'सा वैश्वदेव्यामिक्षा' इति सप्तमयागविधायकवाक्ये विश्वेदेवानामुल्लेखो वर्तते, तथापि तस्य यागविधायकत्वं परित्यत्य 'वैश्वदेवेन यजेत'

इत्यत्र देवताप्रापकत्वं न समुचितम्। यागविधायकानाम् आग्नेयादिवाक्यानां मध्ये पठितस्यास्य देवतासमर्पकत्वकीर्तनस्यानुचितत्वात्। नापि तद्व्यपदेशादस्य नामत्वम्, तादृशव्यपदेशस्यानुपलम्भात्। अतश्च पञ्चमं निमित्तमुत्पत्तिशिष्ट-गुणबलीयस्त्वमङ्गीकर्तव्यमिति भावः। पार्थसारथिमिश्रमतेन वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रादेव नामत्वं साधयितुं शक्यमित्याह—**वस्तुतस्त्विति**। **अर्थवाद-रूपस्यैवेति**। विधित्सितगुणप्रापकशास्त्रेण विधिनैव भवितव्यमिति न निर्बन्धः। अर्थवादस्यापि तत्प्रापकत्वं ज्योतिष्टोमादिनामधेयेषु स्वीक्रियते। तद्वदत्रापि तादृशार्थवादस्य सत्वात्, तस्यैव तत्प्रख्यत्वं स्वीक्रियत इति भावः। तमेवार्थवादं निर्दिशति—**यद्विश्वेदेवा इति**। यत् यस्माद् विश्वेदेवा आग्नेयादीन् अष्टौ यागान् अन्वतिष्ठन् तस्मात् विश्वेदेवकृतत्वादिमे यागा वैश्वदेवनाम्ना व्यवह्रियन्त इति अर्थवादार्थः। अतस्तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य नामत्वम्।

**अनुवाद**—कुछ लोगों के मत में 'उत्पत्ति विधि' से बोधित (विहित) गुण प्रबल होता है[1] यह भी नामधेय में पाँचवाँ निमित्त है। जैसे 'वैश्वदेवेन यजेत' इस उदाहरण में 'वैश्वदेव' का देवतावाचक होना सम्भव नहीं है क्योंकि उत्पत्तिविधि से विहित 'अग्न्यादि' देवता प्रबल है अतः 'वैश्वदेव' याग का नाम है।

परन्तु सिद्धान्त यह है यहाँ भी तत्प्रख्यशास्त्ररूप कारण से 'वैश्वदेव' यागविशेष का नाम होता है। प्रकृत याग में विश्वदेव रूप गुण का प्रकाशक अर्थवाद वाक्य यह है—'यद् विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्। 'वैश्वदेव' शब्द याग का नामधेय है।

## अर्थालोकलोचन

इससे पूर्व नामधेयत्व स्वीकार करने में चार कारणों का सोदाहरण विवेचन किया गया है। कुछ लोगों के विचार में पाँचवा 'उत्पत्तिशिष्टगुणबलीयस्त्व' संज्ञक कारण 'नामधेय' में माना जा सकता है। इसी का विवेचन ग्रन्थकार यहाँ पूर्वपक्ष निरूपण पुरस्सर प्रस्तुत कर रहा है। पूर्वपक्षी का पञ्चम निमित्त के सम्बन्ध में वक्तव्य इतना ही है कि 'उत्पत्तिविधि में उपदिष्ट देवता बलवान् होता है। अर्थात् उत्पत्तिविधि द्वारा जिस गुण (= द्रव्यदेवतादि अङ्ग) का विधान किया जायेगा वह किसी दूसरे वाक्य से विहित द्रव्य दैवतादि अङ्ग (= गुण) से प्रबल होगा। इसका कारण यह है कि उत्पत्तिविधि स्वतः गुण का विधान करती है अन्य वाक्यों में श्रूयमाण वस्तुतः यागविशेष के 'नामधेय' होते हैं। याज्ञिकी प्रक्रिया के अनुसार विषयावबोध इस प्रकार किया जा सकता है। चातुर्मास्य भाग में चार पर्वों का उल्लेख है—(१) वैश्वदेव (२) वरुणप्रघास (३) साकमेध एवं (४) सुनासीरीय। वैश्वदेव पर्व में आठ यागों का विधान है—

---

१. **उत्पत्तिशिष्टगुणबलीयस्त्वं**—उत्पत्तिः = उत्पत्तिविधिवाक्यम्, शिष्टः = विहितः, गुणः = देवता, **उत्पत्तिविधिवाक्यविहितदेवताबलीयस्त्वम्** इति भावः।

'आग्नेयमष्टाकपालम् निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, भारस्वतं चरुम्, पौष्णं चरुं, मारुतम् सप्त कपालम् वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्।' इन आठों यागों के समीप में 'वैश्वदेवेन यजेत' यह वाक्य पठित है। इस प्रसङ्ग में संशय यह होता है कि 'वैश्वदेव' याग का नाम है या 'देवता' वाचक है। पूर्व पक्ष का कहना है कि आठो यागों का 'यजेत' पद से अनुवाद करके 'विश्वदेव देवता रूप गुण का विधान किया जा सकता है। यद्यपि 'वैश्वदेवी आमिक्षा वाक्य में 'विश्वदेव' देवता विहित है तथापि 'आग्नेय से लेकर मारुतम्, एवं द्यावापृथिव्यमेककपालम्' इन सातों यागों में 'विश्वदेव' की विद्यमानता नहीं है अतः उसका (विश्वदेव का) विधान आग्नेयादि देवताओं के रहते हुए भी 'विकल्प' से किया जा सकता है। कारण यह है कि जब हम 'वैश्वदेव' को केवल याग का नाम मान लेंगे तब द्रव्य एवं देवता का श्रवण नहीं होगा एवं ('द्रव्य' और 'देवता' स्वरूप) याग का स्वरूप नहीं बनेगा।[1] अतः 'वैश्वदेवेन यजेत' को निरर्थक मानना होगा, यह समीचीन नहीं है इसलिये 'गुण' का ही विधान मङ्गल है अर्थात् इसे 'गुणविधि' मान लेना ठीक है पूर्वपक्ष के इन युक्तियों का उत्तर सिद्धान्ती इस प्रकार देता है—'उत्पत्ति विधि' से विहित आग्नेयादि यागों का 'यजेत' पद से अनुवाद कर उन आठों के संहति (= समुदाय) का नाम 'वैश्वदेव' रखा जाता है। यद्यपि द्रव्य देवतादि के अभाव में हम इसे विधायक शास्त्र नहीं कह सकते, तथापि **'प्राचीन प्रवणे वैश्वदेवेन यजेत'** इत्यादि में एक ही 'वैश्वदेव' शब्द से आठों यागों का व्यवहार सम्भव है। अतः 'वैश्वदेव' शास्त्र निरर्थक नहीं होगा। 'वैश्वदेव' नामकरण में दो हेतु है—पहला 'छत्रि न्याय' से समझा जा सकता है। लौकिक व्यवहार में जनसमुदाय में यदि थोड़े से ही लोग छत्र लेकर चल रहे हों तब भी 'छत्रिणो यान्ति' समस्त जनसमूह के लिये हो जाता है उसी प्रकार आमिक्षायाग में भी समस्त विश्वदेवों का याग होने के कारण आठों में 'वैश्वदेवत्व' का व्यवहार होता है। अथवा, यह भी समाधान हो सकता है कि आठों यागों का कर्त्ता 'विश्वदेव' है अतः आठों यागों में विश्वदेवत्व रहेगा। इसकी पुष्टि ब्राह्मण भाग के प्रमाण से भी होती है यथा—**यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्** पूर्वपक्ष ने 'अग्न्यादि एवं विश्वेदेव' देवताओं में पारस्परिक विकल्प की जो बात कही है वह ठीक नहीं है। क्योंकि विकल्प की प्रसक्ति 'तुल्यबल' में होती है। प्रकृत सन्दर्भ में अग्न्यादि **'उत्पत्तिशिष्ट'**[3] होने से प्रबल हैं और विश्वेदेव **'उत्पन्नशिष्ट'**[4] होने से दुर्बल है। क्योंकि 'अग्न्यादि देवता' श्रुति प्राप्त है एवं 'विश्वेदेवाः' प्रकरण प्राप्त है। अतः अग्न्यादि ही देव है और वैश्वदेव इन आठों का नाम है।

---

१. ननु यागस्य द्वे रूपे—द्रव्यम्, देवता चेति।'
२. 'तप्ते पयसि दध्यानयति, सा वैश्वदेवी **आमिक्षा** भवति।'
३. **उत्पत्ति** शिष्ट गुण = उत्पत्तिवाक्यविहित देवता। अग्न्यादयो देवताः।
४. **उत्पन्न** शिष्ट गुण = उत्पन्नकर्म विषयक-गुणविधि वाक्य विहित देवता। विश्वेदेवाः।

सिद्धान्ती अपने पक्ष का उपसंहार 'वस्तुतस्तु तत्प्रख्यशास्त्रादेवस्य……' इत्यादि पंक्तियों से करता है। भाव यह है कि—'वैश्वदेवेन यजेत' वाक्य में प्रयुक्त 'वैश्वदेव' पद को याग का नामधेय इसलिये स्वीकार करना चाहिये क्योंकि इसमें 'विश्वेदेव देवता' रूप गुण का प्रकाशन करनेवाला वाक्य अर्थवाद है। अतः 'उत्पत्तिशिष्टगुणबलीयस्त्व को स्वतन्त्र रूप से स्वीकार करने का प्रयोजन नहीं है।

इस प्रसङ्ग में यह भी ज्ञातव्य है कि अर्थसंग्रहकार ने 'केचित्' पद से **न्याय सुधाकार भट्ट सोमेश्वर** की मान्यता का उल्लेख किया है। परन्तु शास्त्रदीपिकाकार पार्थसारथि मिश्र वैश्वदेव को 'तत्प्रख्यशास्त्र' के आधार पर ही नामधेय मानते हैं। [द्रष्टव्यः—'तत्र च यष्टृत्वयोगेन एकदेशदेवतात्वेन वा विश्वेषां देवानां समवायात् **तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः**।' शास्त्रदीपिका, जै० सू० १।४।१३.

# निषेधप्रकरणम्

## निषेधलक्षणम्

पुरुषस्य निवर्तकं वाक्यं निषेधः। निषेधवाक्यानामनर्थहेतुक्रिया-निवृत्तिजनकत्वेनैवार्थवत्त्वात्। तथाहि–यथा विधिः प्रवर्तनां प्रतिपादयन् स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्तयति, तथा 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति।

## अर्थालोकः

विधिमन्त्रनामधेयानि निरूप्याधुना क्रमप्राप्तनिषेधविचारं प्रस्तौति—**पुरुषस्येत्यादिना**। **निवर्तकम्** अनर्थफलकात् कर्मण इति शेषः। **निषेधवाक्यानां** 'न कलञ्जं भक्षयेत्' 'न सुरां पिबेत्' इत्यादीनाम्। **अर्थवत्वात्** प्रयोजनवत्वादित्यर्थः। निषेधवाक्यानामिदमेव प्रयोजनम् यदनर्थफलकेभ्यः कर्मभ्यः पुरुषा निवर्तन्तामिति। ननु निषेधवाक्यानि कथं निवर्तकानि भवेयुः? 'न कलञ्जं भक्षयेत्' इत्यत्र विध्यर्थः प्रवर्तना, तया सह नञस्सम्बन्धे प्रवर्तनाभाव एवार्थो बुध्यते। प्रवर्तनाभावस्य न निवर्तकत्वमर्थं इति चेत्—निवर्तकत्वं तस्य विधिदृष्टान्तमुखेनोपपादयति—**तथाहीति**। **विधिः** लिङादिः 'विधिनिमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इत्यनुशासनात्। अनेनानुशासनेन लिङादीनां शक्तिः प्रवर्तनायामवधार्यते। प्रवर्तना च प्रवृत्त्यनुकूलव्यापारः। अनुकूलत्वञ्च जनकत्वरूपम्। **प्रवृत्तिं** प्रतीष्टसाधनताज्ञानस्य कारणत्वात् तादृशज्ञानजनकत्वमेवानुकूलत्वम्। एतादृशं ज्ञानं विधिराक्षिपतीत्याह—अक्षिपन्निति। आक्षेपोऽत्रानुमानम्।

निषेधेष्विमं न्यायमतिदिशति—**तथेति**। निषेधस्थलेऽपि नञ्समभिव्याहृतो लिङादिः निवर्तनामभिधत्ते। निवर्तना च निवृत्त्यनुकूलो व्यापारः। अनुकूलत्वञ्चात्र प्रवृत्तिसामग्रीविघटकत्वरूपं न जनकत्वरूपम्, प्रवृत्तिप्रागभावरूपाया निवृत्तेः जन्यत्वासम्भवात्। अतो निषेधवाक्यश्रवणानन्तरं निवर्तनाविषयकबोधे जाते निवृत्तिं प्रत्यनिष्टसाधनताज्ञानस्य कारणत्वात् तत् प्रवृत्तिसामग्रीं विघटयति। प्रवृत्तिसामग्री चेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानादिः। तद्विघटनेन प्रकृतिकारणाभावात् पुरुषो न प्रवर्तत इत्याह—**निषेधोऽपीत्यादिना**। **स्वनिवर्तकत्वेति**। स्वस्य नञ्समभिव्याहृतलिङादेः निवर्तकत्वसिध्यर्थमित्यर्थः। **आक्षिपन्** अनिष्टसाधनत्वमनुमापयन्।

**अनुवाद**—जो वाक्य पुरुष को किसी क्रिया को करने से निवृत्त कराता है उसे 'निषेध' कहते हैं। अनर्थ उत्पन्न करनेवाली क्रियाओं से पुरुष का निवर्त्तन कराना ही निषेधवाक्यों का प्रयोजन है। जिस प्रकार विधि वाक्य प्रवर्तना को प्रतिपादित करता हुआ अपने प्रवर्तकत्व का निर्वाह करने के लिये विधीयमान यागादि में इष्ट साधनता का निश्चय करता हुआ पुरुष को उसमें (यागादि में) प्रवृत्त कराता है, उसी प्रकार 'न कलञ्जं भक्षयेत्'[1] इत्यादि निषेधवाक्य भी निषेध का बोध कराता हुआ अपने निवर्तकत्व का निर्वाह करने के लिये निषेध्य कलञ्ज भक्षण में अनिष्ट[2] का निश्चय करता हुआ पुरुष को उससे (= कलञ्ज भक्षण से) निवृत्त कराता है।

## अर्थालोकलोचन

नामधेय रूप वेदभाग का निरूपण करके निषेध रूप वेदभाग का प्रतिपादन किया जा रहा है। शास्त्र में नरकादि को अनर्थ माना है। इस नरक प्राप्ति का हेतु 'कलञ्ज-भक्षणादि' होता है। अतः पुरुष को ऐसे कार्यों से 'निषेधवाक्य' निवर्तित करते हैं। अन्यथा कलञ्जादि भक्षण करता हुआ व्यक्ति पतित हो जाता है और यागादि में अनधिकारी होकर पुरुषार्थ प्राप्ति से वञ्चित हो जाता है। विधिवाक्य अपनी 'प्रवर्तकत्व' या 'प्रेरणाप्रदातृत्व' शक्तिरूप सामर्थ्य द्वारा पुरुष को यागादि अनुष्ठान में लगाते हैं और यागजन्य फल का भी बोध कराते हैं क्योंकि प्रयोजन ज्ञान के अभाव में केवल विधिज्ञान से ही प्रवृत्ति होना कल्पनामात्र है। इसी प्रकार निषेधवाक्यों में निहित जो निवर्त्तना शक्ति है उसका चारितार्थ इस बात में है कि वे पुरुष को अनर्थ हेतु का बोधन कराके निषिद्ध कर्मों से उसे अलग करते हैं।[3]

---

१. **कलञ्जम्**—'विषसंपृक्त बाणेन हतौ यौ मृगपक्षिणौ। तयोर्मांसं **कलञ्जं** स्याद् भुक्त्वा चान्द्रायणं चरेत्॥'

२. **अनिष्टम्**—पारलौकिकनरकादिरूपमनिष्टम्।

३. 'अतो निषेधवाक्यश्रवणानन्तरं निवर्तनाविषयकबोधे जाते निवृत्तिं प्रत्यनिष्टसाधनताज्ञानस्य कारणत्वात् तत्प्रवृत्तिसामग्रीं विघटयति'—**अर्थालोकटीका.**

### नञर्थेन शब्दभावनाया अन्वयः

ननु निषेधवाक्यस्य कथं निवर्तनाप्रतिपादकत्वमिति चेत्—उच्यते। न तावदत्र धात्वर्थस्य नञर्थेनान्वयः अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति। अन्यथा 'राजपुरुषमानय' इत्यादावपि राज्ञः क्रियान्वयापत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेनान्वयः। तत्रापि नाख्यातत्वांशवाच्यार्थभावनायाः, तस्याः लिङंशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः, किन्तु लिङंशवाच्यशब्दभावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्।

### अर्थालोकः

सर्वत्र नञ्समभिव्याहृतलिङादिघटितवाक्यस्य 'न भक्षयेत्' इत्यादेः निषेधपदेन व्यवहारः प्रचलति। लिङादेश्च शक्तिः प्रवर्तनायामेव, अनुशासनबलात्। नञश्चाभावे शक्तिः। येन स सम्बध्यते तदभावबोधने तस्य सामर्थ्यम्। यदि स धात्वर्थेन सम्बध्यते तर्हि तदभावं बोधयति। एतादृशधात्वर्थस्य लिङार्थेनान्वये धात्वर्थवर्जनमेव प्रतीयेत। यदि नञ् लिङर्थेनान्वियात् तदापि प्रवर्त्तनाभाव एव बोध्येत, न निवर्तना। अतः कथं निषेधवाक्यानां निवर्तनाबोधकत्वमिति शंकते—**नन्विति**। समाधत्ते—**उच्यत** इति। नञो धात्वर्थेनान्वये 'न भक्षयेत्' इत्यादावव्यधानम् आसत्यपरपर्यायं कारणं वक्तव्यम्। तत्तु न सम्भवतीत्याह—**अव्यवधानेऽपीति**। धात्वर्थस्य प्रत्ययवाच्यार्थभावनोपसर्जनत्वेन ( विशेषणत्वेन ) उपस्थितत्वात्तेन सह नञर्थस्य नान्वयः। अस्तु धात्वर्थो भावनाया विशेषणम्, तावता तेन सह नान्वय इति कुतो हेतोरित्यत्राह—**नहीति**। सर्वो हि स्वप्रधानेन सहान्वेतुमुत्सहते। प्राधान्यञ्चार्थीभावनायाः, तत्र यथा धात्वर्थोऽन्वेति तथा नञर्थोऽपि। अतो नञर्थधात्वर्थयोर्मिथो नान्वयः। यदि 'न ह्यन्योपसर्जनमन्येनान्वेति' इति न्यायो नाङ्गीक्रियेत तदा तत्र दोषमुद्भाटयति—**अन्यथेति**। 'राजपुरुषमानय' इत्यत्रानयने पुरुषः कर्म, पुरुषकर्मकानयनमिति। पुरुषपदार्थस्य चोपसर्जनं राजा। अन्यं पुरुषं प्रत्युपसर्जनीभूतस्य राज्ञ अनयनपदार्थे न भवत्यन्वयः। यद्ययं न्यायो नाङ्गीक्रियते तदा राज्ञोऽप्यानयनपदार्थेऽन्वयापत्तिरित्यर्थः। तर्हि नञर्थस्य कुत्रान्वय इत्यत्राह—**अत** इति। प्रत्ययार्थस्तु द्विविधः—शाब्दीभावना आर्थीभावना च। तयोर्मध्ये कुत्रान्वयः? आर्थीभावनायामेवान्वयोऽस्तु, तस्याः कारकापेक्षया प्राधान्यात् प्रत्ययार्थत्वाच्चेत्यत आह—**तत्रापीति**। यद्यपि कारकापेक्षया तस्याः प्राधान्यम् तथापि सा शब्दभावनायां साध्यत्वेनान्वितेति शब्दभावनोपसर्जनीभूता। अन्यो-

पसर्जनीभूतेऽन्यस्यान्वयासम्भवस्योक्तत्वात् । सर्वप्रधानभूतायां शब्दभावानाया-मेव नञर्थस्य सम्बन्ध इत्याह—**किन्त्विति** ।

**अनुवाद**—( यहाँ यह शङ्का होती है कि ) निषेध वाक्य का अर्थ निवृत्ति (=निवर्तना ) प्रतिपादकता कैसे हो सकता है ? ( इसका समाधान यह है )—निषेध वाक्य में 'धातु के अर्थ' का अन्वय 'नञ् के अर्थ' के साथ नहीं होता; ( यद्यपि ) धात्वर्थ अव्यवहित रूप से नञर्थ के समीप स्थित है । ( तथापि ), धात्वर्थ की प्रत्ययार्थभावना में उपस्थिति विशेषण रूप से होती है । जो एक में विशेषण रूप से रहता है वह पुनः अन्य पदार्थ में विशेषण रूप से नहीं रह सकता । अन्यथा ( इस प्रकार न मानने पर ) 'राजपुरुषमानय' ( अर्थात् राजपुरुष को लाओ ) इत्यादि वाक्य में 'आनयन' ( लाना ) क्रिया के साथ राजा का अन्वय होने लगेगा । अतः प्रत्ययार्थ ( अर्थात् भावना ) का ही नञर्थ से अन्वय होगा । ( प्रत्ययार्थ में भी ) आख्यातार्थ आर्थीभावना का अन्वय नहीं होगा क्योंकि आर्थीभावना तो लिङ् अंश द्वारा वाच्य शाब्दी भावना के प्रति उपसर्जन रूप में विद्यमान रहती है । इसलिये सर्वापेक्षया प्रधान लिङंशवाच्य शाब्दीभावना का ही नञर्थ से अन्वय होगा ।

## अर्थालोकलोचन

निषेधवाक्य के स्वरूप की विवेचना प्रसङ्ग में यह निरूपित किया गया है कि क्रिया के प्रति पुरुष में निवर्तकत्व रूप व्यापार का उत्पादक 'अनर्थक' रूप हेतु का स्पष्ट निर्देश ही होता है । जिस प्रकार प्रवर्त्तक वाक्य के अभाव में सामान्यतः व्यक्ति की प्रवृत्ति नहीं होती ठीक उसी तरह निवर्त्तकत्व के लिये निषेधबोधक शब्दों की आवश्यकता होती हैं । यहाँ संशय यह होता है कि 'निषेध' का निवर्त्तनारूप अर्थ कैसे सम्भव है ? 'न कलञ्जं भक्षयेत्' 'ब्राह्मणो न हन्तव्यः' इत्यादि वाक्यों में निषेधबोधक 'न' शब्द अव्यवहित रूप से 'भक्षयेत्' एवं 'हन्तव्यः' आदि क्रिया पदों के साथ प्रयुक्त है अतः स्वाभाविक है कि इस 'नञर्थ' का अन्वय 'धात्वर्थ' के साथ हो । इस परिस्थिति में निष्कर्ष यह होगा कि 'भक्षयेत् एवं हन्तव्यः' का अर्थ क्रमशः 'भक्षणाभावः' एवं 'हननाभावः' है क्योंकि 'नञ्' 'अभाव' अर्थ का ही बोधक होता है ।

यदि 'भक्षयेत्' एवं 'हन्तव्यः' आदि आख्यातों की संरचना पर विचार किया जाय तो स्पष्ट होता है कि इनसे प्रवर्त्तना का बोध 'लिङ्त्व' के कारण हो रहा है अतः इनसे बोधित अर्थ का रूप 'भक्षणाभावः कर्त्तव्यः', हननाभावः कर्त्तव्यः आदि होगा । इस प्रकार धात्वर्थ 'भक्षणाभावः' 'हननाभावः' आदि होगा और निषेध से निवर्त्तना का बोध नहीं होगा ।[1] परन्तु यह तर्क संगत नहीं है क्योंकि प्रकृत सन्दर्भ में पूर्वपक्ष द्वारा

---

१. 'ननु निषेधवाक्यानां निवर्तनाप्रतिपादकत्वं न संभवति, 'न भक्षयेत्', 'न हन्तव्यः', इत्येवमादौ अव्यवधानेन नञर्थस्य अभावस्य धात्वर्थेन अन्वये सति धात्वर्थवर्जनकर्त्तव्यताया एव सर्वत्र वाक्यार्थत्वेन प्रतीयमानत्वात् । तथा च यथा 'यजेत' इत्यादौ यागकर्त्तव्यता वाक्यार्थो भवति, तथा 'न कलञ्जं भक्षयेत',

'नञ्' का जो 'अभाव' अर्थ किया गया है वह उचित नहीं है। प्रथमतः धातु के अर्थ के साथ 'नञ' के अर्थ का अन्वय नहीं होगा। क्योंकि 'भक्ष्' धातु का अर्थ 'त' प्रत्यय के आख्यातत्वांश द्वारा बोधित आर्थीभावना का साधन है इसलिये 'आर्थीभावना' के प्रति 'उपसर्जनभूत' भी है। नियमतः किसी के प्रति उपसर्जनभूत पदार्थ अन्य के साथ सम्बन्धित नहीं होता है। 'राजपुरुषमानय' इस लौकिक दृष्टान्त में 'आनय' क्रिया पद का सम्बन्ध राजा के साथ नहीं होता क्योंकि उसका [ राजा का ] सम्बन्ध उपसर्जन रूप में 'पुरुष' से पूर्वतः प्राप्त है। अतः 'आनयन' पुरुष का होता है 'राजा' का नहीं। इस प्रकार यह सिद्धान्त निर्णीत हुआ कि 'धात्वर्थ' के साथ 'नञर्थ' का समन्वय ठीक नहीं है।

**द्वितीयतः**—'नञ्' का अर्थ 'अभाव' नहीं है। इसका विशद विवेचन अग्रिम सन्दर्भ में किया जायगा।[1]

'शाब्दीभावना' एवं 'आर्थीभावना' के विवेचन में हम पढ़ चुके हैं कि प्रत्यय के एक अंश आख्यातत्व से अर्थभावना, एवं लिङंश से 'शब्दभावना' का बोध होता है। संशय यह होता है कि इन दोनों में से 'नञ्' के साथ किसका अन्वय होगा इसका समाधान करने के लिये हमें, 'उपसर्जन' की बात ध्यान में रखनी होगी। यह असन्दिग्ध सत्य है कि अर्थभावना शब्दभावना या प्रवर्त्तना के प्रति 'उपसर्जनभूत' है। इस शब्दभावना का बोध 'लिङ्' अंश से होता है, यह हम देख चुके हैं। अतः इस बात को मूलग्रन्थ से लिङ्शब्दवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितिः' कहा है। साध्य होने के कारण अर्थभावना के साथ 'नञ्' का अन्वय हो नहीं सकता अतः शब्दभावना के ही साथ अन्वय समीचीन हैं। इस प्रकार विदित हुआ कि 'न भक्षयेत्' आदि वाक्यों में नञ् का अन्वय धात्वर्थ के साथ नहीं अपितु 'लिङर्थ' के साथ किया जाना चाहिए।

## नञ् स्वभावनिरूपणम्

नञश्चैष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। यथा 'घटो नास्ति' इत्यादौ 'अस्ति' इति शब्दसमभिव्याहृतो नञ् घटसत्त्वविरोधि घटासत्त्वं गमयति। तद्वदिह लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति। विधिवाक्यश्रवणे 'अयं मां प्रवर्तयति' इति प्रवर्तनाप्रतीतिवत् निषेधवाक्यश्रवणे 'अयं मां निवर्तयति' इति निवृत्त्यनुकूलव्यापाररूपनिवर्तनायाः प्रतीतेः। तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः।

---

'ब्राह्मणो न हन्तव्यः' इत्यादौ अपि तत्तद्धात्वर्थवर्जनकर्त्तव्यतैव वाक्यार्थो, न निवर्तना'। —रामेश्वरभिक्षु कृत अर्थकौमुदी.

१. 'तस्मादृश्यम**भावश्च** तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥'

## अर्थालोकः

नन्वेतावता निषधस्थले निवर्त्तनाबोधकत्वं कथम् ? विध्यर्थेन प्रवर्तनारूपेणान्वये प्रवर्तनाभाव एव बुध्यत इति शङ्कां परिहरति—**नञश्चैव** इति। नञो न केवलमभावमात्रबोधकत्वं किन्तु स्वसम्बद्धविरुद्धार्थबोधकत्वमित्यर्थः। उदाहरति—**घट** इति। सत्त्वार्थप्रतिपादकास्तिना समभिहृतो नञ् तद्विरुद्धमसत्त्वं प्रतिपादयति। दार्ष्टान्तिके सङ्गमयति—**तदिहेति**। प्रवर्तनाया विरोध्यर्थो निवर्तनैव। अतो नञ् निवर्तनार्थकः, तत्र च लिङस्तात्पर्यग्राहकत्वमिति भावः। तत्र लौकिकव्यवहारं प्रमाणयति—**विधीति**। प्रवर्तनाया विरोध्यर्थो निवर्तनैवेत्युपसंहरति—**तस्मादिति**।

**अनुवाद**—'नञ्' का यह स्वभाव है कि वह अपने समीप में उच्चरित पदार्थ के विरोधी अर्थ को बोध करता है। यथा—'घटो नास्ति' (घट नहीं है) इस दृष्टान्त में (जैसे) 'अस्ति' शब्द के साथ उच्चरित ( सम भिव्याहृत ) न ( 'नञ्' ) घट के अस्तित्व के विरोधी घटाभाव ( घटासत्त्वम् ) अर्थ का ज्ञान कराता है उसी तरह 'लिङ्' के साथ उच्चरित 'नञ्' ('न कलञ्जं भक्षयेत्' इत्यादि उदाहरणों में) 'लिङ् के अर्थ प्रवर्तना के विरोधी—'निवर्तना' का ही बोध कराता है। क्योंकि जैसे विधि वाक्य के सुनने पर यह विधि मुझे ( यागादि में ) प्रवृत्त कराती है ऐसी ( प्रवर्त्तना ) की प्रतीति होती है।[२] वैसे ही निषेध वाक्य सुनने पर यह निषेध वाक्य ( कलञ्ज भक्षणादि से ) मुझे निवृत्त कराता है—इस प्रकार की निवर्तना की प्रतीति ही वाक्यार्थ होती है।

## अर्थालोकलोचन

प्रस्तुत अवतरण में 'नञ्' अर्थ पर विचार किया गया है। मीमांसक की दृष्टि में 'नञ्' का अर्थ केवल 'अभाव' ही नहीं होता अपितु 'विरोध' भी उसका अर्थ है। मूलग्रन्थ में 'घटो नास्ति' इस दृष्टान्त से यह प्रतिपादित किया गया है कि 'नास्ति' पद में नञर्थ का द्योतक 'न' वस्तुतः 'अस्ति' का विरोधी है अतः 'घटाभावः' अर्थ का बोध कराता है। 'न कलञ्जं भक्षयेत्' इस दृष्टान्त में लिङ्श के साथ 'नञ्' का अन्वय करने पर निवर्तना का बोध होता है यह प्रवर्तना का ही विरुद्धबोधक अर्थ है अतएव 'निवृत्यनुकूलव्यापाररूप' ही निवर्तना का स्वरूप है।

## नञर्थस्य प्रत्ययार्थेनान्वये बाधकं द्विविधम्

यदा तु प्रत्ययार्थे तदन्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः। तच्च बाधकं द्विविधम्—तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च।

---

१. **स्वसमभिव्याहृत**=स्वान्वित या स्वसम्बद्ध।

२. 'तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दीभावना। सा च लिङ्शेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः।' —अर्थसंग्रह।

## आद्यं बाधकम्

तत्राद्यं 'नेक्षेतोद्यन्तमादित्यम्' इत्यादौ, 'तस्य व्रतम्' इत्युपक्रम्यैतद्वाक्यपाठात्। तथा चात्र पर्युदासाश्रयणम्। तथा हि—व्रतशब्दस्य कर्तव्यार्थे रूढत्वात् 'तस्य व्रतम्' इत्यत्र स्नातकस्य व्रतानां कर्तव्यत्वेनोपक्रमात्। किं तत् कर्तव्यमित्याकाङ्क्षायां 'नेक्षेतोद्यन्तम्' इत्यादिना कर्तव्यार्थ एव प्रतिपादनीयः। अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात्। तथा च नञर्थेन न प्रत्ययार्थान्वयः, कर्तव्यार्थानवबोधात्। विध्यर्थप्रवर्तनाविरोधिनिवर्तनाया एव तादृशनञा बोधनात्, तस्याश्च कर्तव्यार्थत्वाभावात्। तस्मात् 'नेक्षेत' इत्यत्र नञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते, तस्य कर्तव्यत्वसम्भवात्।

'आदित्यविषयकानीक्षणसंकल्पेन भवयेत्' इति वाक्यार्थः। तत्र भाव्याकाङ्क्षायाम् 'एतावता हैनसा वियुक्तो भवति' इति वाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति। एवं च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव।

न चात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि संभवात् कथमनीक्षणसंकल्पस्यैव भावनान्वय इति वाच्यम्। तस्य कर्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्।

## अर्थालोकः

नञर्थस्य प्रत्ययार्थभावनायामन्वये क्वचिदपवादमाह—**यदा त्विति**। बाधकं विभजते—**तच्चेति**। **तस्य व्रतं** स्नातकस्य व्रतमनुष्ठेयपदार्थः, एवंरूप उपक्रम आरम्भ इत्यर्थः। इदमेकं बाधकम्। द्वितीयं बाधकम्—**विकल्पप्रसक्तिः**। यत्रानुष्ठेयत्वेन पदार्थस्योपक्रमः, यत्र वा नञर्थस्य प्रत्ययार्थान्वयाङ्गीकारे विकल्पप्रसक्तिः तदुभयमपि प्रत्ययार्थान्वये बाधकमित्यर्थः। यत्रेदं बाधकद्वयं न भवति तत्र निषेध इति भावः। आद्यस्योदाहरणम्—**नेक्षेतेति**। **एतद्वाक्यपाठात्** 'नेक्षेतोद्यन्तम्' इति वाक्यपाठात्। अत्र निषेधानङ्गीकारे कोऽर्थस्स्वीकर्तव्य इत्यत्राह—**पर्युदासाश्रयणमिति**। यत्र नञ् प्रत्ययार्थप्रवर्तनयान्वेति तत्र प्रतिषेधः। यत्र च सः प्रत्ययार्थादन्येनान्वेति तत्र पर्युदासः। तदिदमुपपादयति—**तथा हीत्यादिना**। व्रतशब्दस्य कर्तव्यपदार्थोऽर्थः। कस्स पदार्थो यः कर्तव्य इत्याकांक्षायां तदनन्तरपठितैः 'नेक्षेतोद्यन्तम्' इत्यादिभिः कर्तव्यार्थ एव प्रतिपादनीयः। **अन्यथा** कर्तव्यरूपार्थाप्रतिपादने। **एकवाक्यत्वं न स्यादिति**। अयमभिप्रायः—स्नातकस्यानुष्ठेयपदार्थनिरूपणप्रसङ्गे 'तस्य व्रतम्' इत्यादि

सामान्यत एव व्रतशब्दो दृश्यते। तस्य च विशेषापेक्षायां तदग्रिमतनैर्वाक्यै-र्विशेषस्समर्पणीयः। कर्तव्यस्य विशेषः कर्तव्य एव भवति। पूर्ववाक्यापेक्षितवि-शेषसमर्पणमुत्तरवाक्यैः कर्तव्यम्। यावदुभयोरेकवाक्यता न स्यात् तावदाका-ङ्क्षाशान्तिर्न स्यात्। एकवाक्यत्वाभावे पूर्ववाक्यं साकांक्षमेव सत् अनर्थकं स्यात्। एकवाक्यतायाः कृते उत्तरवाक्यैः कर्तव्योऽर्थः प्रतिपादनीयः। कर्तव्य-मित्यारभ्य न कर्तव्यमित्युक्ते कथमेकवाक्यता स्यात्? अतश्च 'नेक्षेत' इति वाक्येन कर्तव्यरूपोऽर्थो यथा प्रतिपादितस्स्यात् तथा नञर्थस्यान्वयो वाच्य इत्याह—**तस्मादिति**। प्रत्ययार्थभावनां परित्यज्य ईक्षतिधात्वर्थेनान्वये सतीक्षणभिन्नमित्यर्थ आयाति। ईक्षणभिन्नश्चानीक्षणम्। तथापि न कर्तव्यत्व-प्रकारकबोधश्सम्पद्यत इत्यत्राह—**लक्षणयेति**। एवञ्च नञोऽनीक्षणसङ्कल्पे लक्षणामङ्गीकृत्य कर्तव्यत्वप्रकारकबोधसम्भव इत्यर्थः। ननु लक्षणया ईक्षण-भिन्नेऽर्थे स्वीकृतेऽपि तद्भिन्नपदार्थानामनेकेषां सत्त्वात् कथं सङ्कल्पस्यैव ग्रहण-मिति शङ्कायाम्—ब्रूमः, लक्ष्यार्थस्य शक्याविनाभूतत्वस्यावश्यकत्वेन सर्व-प्रवृत्तिनिवृत्तिकर्मसु सङ्कल्पस्यैव तथात्वात्सङ्कल्प एव लक्ष्यत इति। तदिदं दर्शयति—**आदित्येति**। एवं विहिताया भावनायाः साध्येन विना स्वरूपं न सिध्यतीति तस्याः साध्याकाङ्क्षा जायत इत्याह—**भाव्याकाङ्क्षायामिति**। अनीक्षणसङ्कल्पेन भावयेदित्युक्तौ अफले प्रेक्षावतां प्रवृत्त्यनुदयात् भाव्यस्य कस्य-चिदपेक्षायां सत्यामित्यर्थः। **एतावता** अनीक्षणसङ्कल्पमात्रेण **एनसा** पापेन **वियुक्तो भवति** विमुक्तो भवतीत्यर्थवादार्थः। आर्थवादिकं पापक्षयाख्यं फल-मन्वेतीत्यर्थः। उपसंहरति—**एवञ्चेति**। पापक्षयार्थं सङ्कल्पस्य कर्तव्यत्वेन 'तस्य व्रतम्' 'नेक्षेत' इत्यनयोरेकवाक्यतासिद्धिरित्यर्थः। अतः पापक्षयार्थमुद्यदादित्ये-क्षणभिन्नसङ्कल्पः कर्तव्य इति सिध्यति।

**अनुवाद**—और जिस समय प्रत्ययार्थ ( = लिङ् का अर्थ ) का, नञर्थ ( = अभाव के साथ अन्वय में बाधक हो तब धात्वर्थ के साथ अन्वय होता है।

नञर्थ अभाव के साथ प्रत्ययार्थ का अन्वय होने में दो बाधक है—( १ ) 'तस्य व्रतम्' ( अर्थात् उसका व्रत ) यह उपक्रम एवं ( २ ) विकल्पप्रसक्ति। इन दोनों में प्रथम का दृष्टान्त है—"नेक्षेतोद्यन्तमादित्यम्' ( अर्थात् उदित होते हुये सूर्य को न देखे ) 'तस्य व्रतम्' ( स्नातक-विशेष ब्रह्मचारी का व्रत ) द्वारा प्रकरण का आरम्भ करके 'नेक्षेत'......' इत्यादि का पाठ है। अतः यहाँ पर्युदास का आश्रयण करना होगा, (अर्थात् यहाँ नञर्थ में धात्वर्थ का ही अन्वय होगा, प्रत्ययार्थ का नहीं )। ( क्योंकि ) यहाँ पर 'व्रत' शब्द की 'कर्त्तव्य' अर्थ में रुढ़ि है अतः 'तस्य व्रतम्' इस वाक्य में स्नातकों के 'व्रतों' का 'कर्त्तव्य रूप' में विधान आरम्भ किया गया है। ( स्नातक ब्रह्मचारियों

का ) 'वह कौन सा कर्त्तव्य है' ऐसी आकांक्षा होने पर 'नेक्षेतोद्यन्तम्' इत्यादि वाक्य कर्त्तव्यार्थ का ही प्रतिपादक है। अन्यथा 'तस्य व्रतम्' एवं 'नेक्षेतोद्यन्तम्' इन दोनों में एकवाक्यता नहीं होगी। इस प्रकार 'नञर्थ' से प्रत्ययार्थ का अन्वय नहीं होगा क्योंकि 'कर्त्तव्यार्थ' का बोध नहीं हो रहा है। विध्यर्थ प्रवर्त्तना के विरोधी निवर्तना का ही बोध इस तरह के 'नञर्थ' से होगा और उसका ( निवर्तना का ) कर्त्तव्य रूप अर्थ नहीं होता। अतः 'नेक्षेत' यहाँ पर 'नञ्' से धात्वर्थ विरोधी अनीक्षण संकल्प का ही 'लक्षणा' द्वारा प्रतिपादन होता है एवं अनीक्षण संकल्प का तब कर्त्तव्य अर्थ सम्भव है।

तब 'नेक्षेतोद्यन्तमादित्यम्' [ उदित होते हुए सूर्य को न देखे ] वाक्य का अर्थ 'आदित्यविषकानीक्षणसंकल्पेन भावयेत्' [ अर्थात्सूर्यविषयकदर्शनाभाव-( अनीक्षण ) संकल्प से भावना करें ] होगा। यहाँ फल ( भाव्य ) की आकांक्षा होने पर 'एतावता हैनसा वियुक्तो भवति' ( अर्थात् इतने से व्यक्ति पाप मुक्त हो जाता है ) इस वाक्य शेष से ज्ञात 'पापक्षय' भाव्य ( फल ) अर्थात् साध्य रूप में अन्वय होगा। इस तरह पूर्वोत्तर वाक्यों में एक वाक्यता भी होगी। यहाँ यह कथन भी ठीक नहीं है कि 'धात्वर्थ का विरोधी कोई और पदार्थ हो सकता है तब 'अनीक्षण संकल्प' को ही भावना से अन्वित क्यों माना जाय'? क्योंकि धात्वर्थ का विरोधी किसी अन्य पदार्थ में कर्त्तव्य रूप से सम्बन्ध नहीं हो सकता, अतः यहाँ भावना से उसका अन्वय योग्यताभाव के कारण नहीं होगा।

## अर्थालोकलोचन

नञर्थ का प्रत्ययार्थ भावना में अन्वित होने में कहीं कहीं अपवाद भी दृष्टिगोचर होता है इस तथ्य का विवेचन प्रस्तुत अवतरण में किया जा रहा है। नञर्थ के अन्वित न हो सकने में दो बाधक माने गये हैं—( १ ) 'तस्य व्रतम्' का उपक्रम एवं ( २ ) विकल्पप्रसक्तिः।

प्रथम प्रकार के बाध का दृष्टान्त है—'नेक्षेतोद्यन्तमादित्यम्'। इस वाक्य का पाठ 'तस्य व्रतम्' इस उपक्रम में उपलब्ध होता है। अर्थात् स्नातकों द्वारा लिये जाने वाले संकल्पों का निर्देश 'तस्य व्रतम्' से प्रारम्भ होता है। इस प्रकरण में परिगणित विभिन्न व्रतों में 'नेक्षेतोद्यन्तमादित्यम्' भी है। अतः सन्दर्भ विशेष में पठित होने के कारण यह विदित होता है कि इस वाक्य द्वारा भी 'कर्त्तव्यार्थ' का ही निर्देश हैं। क्योंकि 'इस वाक्य से कर्त्तव्यार्थ का बोध न हो करके, मात्र 'ईक्षण रूपी' क्रिया के निषेध का बोध हो रहा हो तो इस वाक्य का पूर्व वाक्य 'तस्य व्रतम्' के साथ एकवाक्यता का अभाव हो जायगा। और इस प्रकार 'तस्य व्रतम्' आदि से किये गये उपक्रम से भी विरोध होता अतः 'नेक्षेतोद्यन्तमादित्यम्' से 'कर्त्तव्यार्थ' का ज्ञान होना ही चाहिए। अब यदि निषेधवाक्यों में माने जानी वाली सामान्य विधि का हम आश्रय ले तब 'ईक्षेत' के लिङांश का अन्वय 'न' के साथ करना होगा। इसी को मूल ग्रन्थ में 'प्रत्ययार्थान्वयः अर्थात् प्रत्ययैकदेशलिङर्थान्वयः' कहा गया है। परन्तु ऐसा निर्णय लेने पर इस वाक्य से 'कर्त्तव्यार्थ' का बोध नहीं होगा। क्योंकि 'लिङांश' के साथ 'न' का अन्वय होने पर यह 'प्रवर्त्तना' के विरोधी 'निवर्तना' का बोधक होगा। परन्तु निवर्तना का 'कर्त्तव्यार्थ'

में अन्वय नहीं हो सकता। अतः धात्वर्थ (= ईक्षण) के साथ ही 'न' का अन्वय ठीक है इस तरह धात्वर्थ के साथ अन्वित होने पर 'ईक्षणाभावः' (= अनीक्षण) अर्थ का बोधक होगा। परन्तु प्रकृत सन्दर्भ यह अर्थ भी अभीष्ट सम्पादन नहीं करता क्योंकि 'अनीक्षण' अभावमात्र का बोधक होने से 'कर्त्तव्यार्थ' का ज्ञापक नहीं होगा। इस विषम परिस्थिति से मुक्त होने का उपाय निर्देश करते हुये ग्रन्थकार ने कहा है—

**'तस्मात् 'नेक्षेत' इत्यत्र नञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते, तस्य कर्त्तव्यत्वसंभवात्।'**

अर्थात् 'नेक्षेत' यहाँ पर 'नञ्' से धात्वर्थ विरोधी अनीक्षण संकल्प का ही 'लक्षणा' द्वारा प्रतिपादन होता है एवं अनीक्षण संकल्प का तब कर्त्तव्य अर्थ सम्भव है।

**आशय यह है कि**—'लक्षणा' का आश्रय 'मुख्यार्थबाध' होने पर ही लिया जाता है। यहाँ 'नेक्षेत' का वाक्यार्थ या मुख्यार्थ धात्वर्थ (ईक्ष्+न) है जिससे ईक्षणाभाव या अनीक्षण द्योतित होता है परन्तु 'कर्त्तव्यार्थ' का बोध इससे नहीं हो सकता अतः मुख्यार्थ का बाध हो रहा है। लक्षणा के द्वारा 'अनीक्षण संकल्प' अर्थ धात्वर्थ विरोधी भी होगा और 'कर्त्तव्यार्थ' का भी बोध करायेगा। इस प्रकार मीमांसक की दृष्टि से **'नेक्षेतोद्यन्तमादित्यम्'** का अर्थ 'आदित्यविषयकानीक्षणसंकल्पेन भावयेत्' होगा। यहाँ 'भावयेत्' पद से 'किं भावयेत्'? की आकांक्षा होना सहज है अर्थात् आदित्यविषयक अनीक्षण के संकल्प से क्या भाव्य है? यह प्रश्न उपस्थित होगा। इसका उत्तर इसी प्रकरण में पठित 'एतावता हैनसा वियुक्तो भवति' वाक्य द्वारा मिलता है। इस वाक्य में 'पापक्षय रूप' फल उन स्नातकों के लिये विहित जो व्रतों का पालन करते हैं। अतः आदित्यानीक्षण संकल्परूप भावना से स्नातक पापमुक्त हो जाता है अन्यथा 'आदित्येक्षण' से उसे पाप लगता है। इस प्रकार 'नेक्षेतोद्यन्तमादित्यम्' एवं 'एतावता हैनसा वियुक्तो भवति' इन वाक्यों की परस्पर आकांक्षा पूर्ति होती है और एकवाक्यता की भी सिद्धि हो जाती है।

**[द्रष्टव्य—'एवं च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव']**

इस प्रसङ्ग में एक संशय यह किया जा सकता है कि ईक्ष् धात्वर्थ विरोधी (अर्थात् 'अनीक्षण' या 'ईक्षणाभाव') दर्शनाभाव विषयक संकल्प ही नहीं है अपितु कपड़ा इत्यादि से 'नयन पिधान' भी धात्वर्थ विरोधी एवं कर्त्तव्यार्थ है अतः 'अनीक्षण' संकल्प का ही अन्वय भावना में क्यों करना चाहिए? इसका समाधान **'तस्य कर्त्तव्यताऽभावेन प्रकृते भावनान्वयायोग्यत्वात्'** द्वारा ग्रन्थकार ने दिया है। सिद्धान्ती का अभिप्राय यह है कि—यद्यपि 'पटादिना चक्षुषः पिधानम्' 'धात्वर्थ विरोधी' एवं कर्त्तव्यार्थ है परन्तु इस व्याख्या को हम इसलिये नहीं स्वीकार कर सकते हैं क्योंकि उपक्रम प्रकरण में पठित 'तस्य व्रतम्' में 'व्रत'[1] पद को 'मानस संकल्प' रूप में जाना जाता

१. नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्॥ मनुसंहिता ४-३७
'मानसः संकल्पो **व्रतमुच्यते**'—मेधातिथिभाष्य—मनुसंहिता ४-१३

है। केवल पट से पिधानादि रूप शारीरिक क्रियामात्र इस सन्दर्भ में अभिप्रेतार्थ नहीं है। अतः यह 'कर्त्तव्य रूप में नहीं निर्दिष्ट हो सकता। क्योंकि कर्त्तव्यत्वेन निर्दिष्ट पदार्थ में ही भावना से अन्वित होने की योग्यता मानी जाती है। अतः नयनपिधान में योग्यता नहीं है यह स्पष्ट हो गया।

इस प्रकार सम्पूर्ण सन्दर्भ का तत्त्व यह है जहाँ नञर्थ से प्रत्ययार्थ के अन्वय में बाधा उपस्थित होती है ऐसे स्थलों पर 'पर्युदास' के द्वारा अन्वय होता है। पर्युदास का सामान्य लक्षण यह है कि जब नञर्थ का अन्वय प्रत्ययार्थ से न होकर 'सुबन्त पद' अथवा धात्वर्थ से है तो उसे 'पर्युदास' कहते हैं। इसके स्वरूप का विवेचन किया जायगा।

## विकल्पप्रसक्तौ पर्युदासाश्रयणम्

## ( द्वितीयं बाधकम् )

द्वितीयं 'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यादौ। अत्र विकल्पप्रसक्तौ च पर्युदासाश्रयणात्। तथा हि—यद्यत्र वाक्ये नञर्थेन प्रत्ययार्थान्वयः स्यात्, तदा अनुयाजेषु 'ये यजामह' इति मंत्रस्य प्रतिषेधः स्यात्, अनुयाजेषु ये यजामहं न कुर्यात् इति। स च प्राप्तिपूर्वक एव, प्राप्तस्यैव प्रतिषेधात्। प्राप्तिश्च 'यजतिषु ये यजामहं करोति' इति शास्त्रादेव वाच्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव, न तु बाधः। प्राप्तिमूलरागस्येव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात्।

न च 'पदे जुहोति' इति विशेषशास्त्रेण 'आहवनीये जुहोति' इति शास्त्रस्येव 'नानुयाजेषु' इत्यनेन 'यजतिषु ये यजामहं करोति' इत्यस्य बाधः स्यादिति वाच्यम्। परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं 'यजतिषु ये यजामहम्' इत्यस्यापेक्षणान्न निरपेक्षत्वम्।

### अर्थालोकः

विकल्पप्रसक्त्या यत्र पर्युदासः तदुदाहरति—**यजतिष्विति**। अत्रायं विषयविवेकः—

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु'॥

इति स्मर्यते। प्रथमचतुश्शब्दस्य 'आश्रावय' इति चत्वार्यक्षराणि, द्वितीयचतुश्शब्दस्य 'अस्तु श्रौषट्' इति चत्वार्यक्षराणि, द्वाभ्याम् इत्यस्य 'यज' इति द्वेऽक्षरे, पञ्चभिरित्यस्य 'ये यजामहे' इति पञ्चाक्षराणि, द्वितीयद्वाभ्यामित्यस्य

'वौषट्' इत्यक्षरद्वयम् अर्थः। आहत्य सप्तदशाक्षराणि सम्पद्यन्ते। दर्शपूर्णमासादिषु क्रतुष्वध्वर्युः तां तां देवतां यक्ष्यन् हूयमानं द्रव्यं जुह्वां यथाविधि परिगृह्याहवनीयाग्नेस्समीपे उत्तराभिमुखस्तिष्ठन् आग्नीध्रं प्रेष्यति—आश्रावय इति। हे आग्नीध्रः निर्देक्ष्यमाणदेवतां प्रति श्रावय 'यत्तुभ्यमिदं हविर्दीयत इति। आग्नीध्रः प्रतिवदति—**अस्तु श्रोषडिति**। अस्तु इति शब्देन अध्वर्यो तव प्रैषानुसारेण श्रावयामीति स्वीकृत्य श्रौषट् इति शब्देन श्रावयति हे देवाः युष्मभ्यं दीयमानं हविः शृणुत। तदनन्तरमध्वर्युः होत्रा पुरोनुवाक्यामन्त्रे पठिते होतारं प्रेष्यति—'यज' इति। अत्र क्रमप्राप्तदेवतानाम 'अग्नि सोम'मित्यादि योजयति। क्रमप्राप्तदेवताकयाज्यामन्त्रं पठेति। होतापि तदनुसारेश याज्यामन्त्रं पठन् मन्त्रादौ 'ये यजामेहे' इति मन्त्रान्ते 'वौषट्' इति च शब्दौ योजयति। तत्र ये यजामह इत्यस्य ये वयमध्वर्युणा प्रेषिताः ते होतारो यजामहे याज्यामन्त्रं पठाम इति वौषट् हविर्दीयत इति च तयोरर्थः। अयमेव सन्दर्भः—'आश्रावयेति चतुरक्षरम् अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्वयक्षरम् ये यजामह इति पञ्चाक्षरम् द्वयक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इति वेदे समाम्नायते। **यजतिषु** यजतिचोदनाचोदितेषु यागेषु येयजामहशब्दमादौ याज्यामन्त्रेषु करोति योजयेदिति वाक्यार्थः। **नानूयाजेषु** अनूयाजशब्दवाच्यव्यतिरिक्तेषु यागेषु ये यजामहशब्दं कुर्यादित्यर्थः। कथमत्र तद्व्यतिरिक्तार्थस्य बोध इत्युपपादयति—**तथा हीति। अत्र वाक्ये** नानूयाजेष्विति वाक्ये प्रधानसम्बन्धलोभादिति शेषः। **प्रतिषेधस्स्यात्** ये यजामहं न कुर्यादिति। प्राप्तस्यैव प्रतिषेधः प्रसरतीति प्राप्तिमुपपादयति—**यजतिष्विति**। येन केनचित्प्राप्तौ न प्रतिषेधस्सङ्गत इत्याह—**शास्त्रादेवेति**। प्रापकमपि शास्त्रम् प्रतिषेधकमपि शास्त्रमिति प्रसङ्गे नोभयोर्बाध्यबाधकभावः, किन्तु विकल्प इत्याह—**शास्त्रप्राप्तस्येति**। ननु कथं विकल्प एव? बाधोऽपि भवितुमर्हति। कश्चन हननादौ प्रवृत्तः, तं हननप्राप्तिमूलभूतरागस्य बाधेन न हन्यादिति शास्त्रं हननान्निवर्तयति तथा प्रकृते यजतिष्विति शास्त्रेण येयजामहकरणे प्रवृत्तं पुरुषं नानूयाजशास्त्रं निवर्तयतु इति शङ्कां निराकरोति—**प्राप्तीति**। हननादौ प्रवृत्तिं प्रति मूलं रागः, रागाच्च शास्त्रं बलीय इति तत्र प्रबलं दुर्बलं बाधत इति युक्तम्, तद्वदत्र येयजामहकरणस्य मूलं न रागः, किन्तु शास्त्रम्, शास्त्रस्य शास्त्रान्तरेण बाधो न भवति, उभयोस्तुल्यबलत्वात्। अतो न बाध इत्याह—**बाधायोगादिति**। ननु शास्त्रयोरपि बाध्यबाधकभावो दृश्यते। होमत्वावच्छिन्नोद्देशेनाधि-

करणत्वेनाग्नि विधत्ते 'यदाहवनीये जुहोति' इति शास्त्रम्। तच्च 'पदे जुहोति' इति शास्त्रेण बाध्यते। ज्योतिष्टोमे सोमक्रयणाय गां नयन् यत्र सा सप्तमं पदं निक्षिपति तत्र होमः कर्तव्यतया विधीयते 'सप्तमे पदे जुहोति' इति। एवमश्वमेधेऽपि अश्वे यागदेशं नीयमाने 'अश्वस्य पदे पदे जुहोति' इति पदहोमो विहितः। यथा **पदहोमविधायकमपि** शास्त्रम् आहवनीयविधायकमपि तथा। उभयोश्शास्त्रत्वेऽपि पदशास्त्रेणाहवनीयशास्त्रं बाध्यत इत्यङ्गीक्रियते न विकल्पः, तथा यजतिष्विति शास्त्रविहितं येयजामहकरणं नानूयाजशास्त्रेण बाध्यतामिति शङ्कामुत्थापयति—**न चेति**। समाधत्ते—**परस्परेति**। यत्र द्वे अपि शास्त्रे मिथो निरपेक्षे भवतः तत्र बाध्यबाधकभावः, यत्र च ते सापेक्षे भवतस्तत्र विकल्प इत्युपपादयति—**पदशास्त्रस्य हीति**। पदशास्त्रं पदाधिकरणकहोमं विधातुं नाहवनीयशास्त्रमपेक्षते। अतो यदि स्वविषये तत्प्राप्नुयात्तर्हि तद्बाधितुं समर्थं भवति। अर्थात् पदातिरिक्तस्थल एवाहवनीयशास्त्रप्रवृत्तिः। **प्रकृते त्विति**। नानूयाजेष्वित्यत्र। प्राप्तिं विना निषेधस्य न प्रवृत्तिः, प्रतियोगिसापेक्षत्वात्तस्य। अनूयाजेषु येयजामहकरणस्य प्राप्तौ सत्यां तन्निषेधः कर्तुं शक्यः। अतस्तत्प्राप्तिसापेक्षो निषेध इति दर्शयति—**निषेध्येति**। निषेध्यस्य ये यजामहकरणस्य प्रसक्तिः प्राप्तिः तदर्थमित्यर्थः। अतस्सापेक्षत्वात् पदाहवनीयन्यायप्रसक्तिः प्रकृते न भवति। उपसंहरति—**तस्मादिति**॥

**अनुवाद—**विकल्प प्रसक्ति रूप द्वितीय बाधक 'यजतिषु ये यजामहं करोति नानुयाजेषु' (अर्थात्—यागों में 'ये यजामह' संज्ञक पदपाठ करना चाहिए, अनुयाजों में नहीं) आदि (उदाहरणों) में है। यहाँ विकल्प की प्रसक्ति होने लगेगी अतः पर्युदास का आश्रय लेते हैं। तात्पर्य यह है—यदि इस वाक्य में नञर्थ से प्रत्ययार्थ का अन्वय किया जाय तो 'अनुयाज' संज्ञक यागों में 'ये यजामहे' इस पद का प्रतिषेध होने लगेगा। अर्थात् 'अनुयाजों' में 'ये यजामह' पद का पाठ नहीं करना चाहिए। इससे 'ये यजामह' इस मन्त्रोच्चारण का निषेध सिद्ध होने से प्राप्त का ही निषेध होता है अतः प्राप्तिपूर्वक निषेध होगा। इस प्रकार 'यजतिषु ये यजामहं करोति' अर्थात् याग में 'ये यजामह' मन्त्रोच्चारण करना चाहिए इस शास्त्र से ही 'ये यजामह' मन्त्रोच्चारण की प्राप्ति करनी होगी। परन्तु शास्त्र से प्राप्त का प्रतिषेध होने पर विकल्प होता है, बाध नहीं होता। जिसकी प्राप्ति का मूल रागादि (यथा—कलञभक्षणादि) है उसका शास्त्र द्वारा बाध (यथा—'न कलञ्जं भक्षयेत्') होता है किन्तु शास्त्रप्राप्त का शास्त्रान्तर से बाध हुआ नहीं माना जा सकता।

यह भी नहीं कहना चाहिये कि जैसे 'पदे जुहोति' इस विशेष शास्त्र से 'आहवनीये जुहोति' इस सामान्य शास्त्र का बाध हो जाता है उसी तरह 'यजतिषु ये यजामहं करोति इस सामान्य शास्त्र का 'नानुयाजेषु' इस विशेष शास्त्र से बाध होना चाहिए। इस संशय

